स कस्माद्वृद्धभावेऽपि सुनृशंसात्मको भवान् ।
क मानुषस्य पिशितं क वयश्चरम तव ॥ १७ ॥

सर्वथा दुष्टभावानां प्रशमो नोपपद्यते ।
अथवा किं ममैतेन प्रोक्तेनास्ति प्रयोजनम् ॥ १८ ॥

प्रतिश्रुत्य सदा देयमिति नो भावित मन. ।
इत्युक्त्वा तं स विप्रेन्द्रस्तथेति कृतनिश्चयः ॥ १९ ॥

शीघ्रमस्मान्समाहूय गुणतोऽनुप्रशस्य च ।
उवाच क्षुब्धहृदयो मुनिर्वाक्य सुनिष्ठुरम् ॥ २० ॥

विनयावनतान्सर्वान् भक्तियुक्तान्कृताञ्जलीन् ।
कृतात्मानो द्विजश्रेष्ठा, ऋणैर्युक्ता मया सह ॥ २१ ॥

जातं श्रेष्ठमपत्यं वो यूयं मम यथा द्विजा. ।
गुरु. पूज्यो यदि मतो भवतां परमः पिता ॥ २२ ॥

ततः कुरुत मे वाक्यं निर्व्यलीकेन चेतसा ।
तद्वाक्यसमकालं च प्रोक्तमस्माभिरादृतैः ॥ २३ ॥

यद्वक्ष्यति भवांस्तद्वै कृतमेवावधार्यताम् ।

ऋषिरुवाच ॥

मामेष शरणं प्राप्तो विहङ्गः क्षुत्तृषान्वितः ॥ २४ ॥

युष्मन्मांसेन येनास्य क्षण तृप्तिर्भवेत वै ।
तृष्णाक्षयश्च रक्तेन तथा शीघ्रं विधीयताम् ॥ २५ ॥

ततो वयं प्रव्यथिताः प्रकम्पोद्भूतसाध्वसाः ।
कष्टं कष्टमिति प्रोच्य नैतत्कुर्मेति चाब्रुम ॥ २६ ॥

कथं परशरीरस्य हेतोर्देहं स्वकं बुधः ।
विनाशयेद्धातयेद्वा यथा ह्यात्मा तथा सुतः ॥ २७ ॥

पितृदेवमनुष्याणां यान्युक्तानि ऋणानि वै ।
तान्यपाकुरुते पुत्रो न शरीरप्रदः सुतः ॥ २८ ॥

तस्मान्नैतत्करिष्यामो नो चीर्णं यत्पुरातनैः ।
जीवन्भद्राण्यवाप्नोति जीवन्पुण्यं करोति च ॥ २९ ॥

मृतस्य देहनाशश्च धर्माद्युपरतिस्तथा ।
आत्मानं सर्वतो रक्ष्यमाहुर्धर्मविदो जनाः ॥ ३० ॥

इत्थं श्रुत्वा वचोऽस्माकं मुनिः क्रोधादिव ज्वलन् ।
प्रोवाच पुनरप्यस्मान्निर्दहन्निव लोचनैः ॥ ३१ ॥

प्रतिज्ञातं वचो मह्यं यस्मान्नैतत्करिष्यथ ।
तस्मान्मच्छापनिर्दग्धास्तिर्यग्योनौ प्रयास्यथ ॥ ३२ ॥

एवमुक्त्वा तदा सोऽस्मांस्तं विहङ्गममब्रवीत् ।
अन्त्येष्टिमात्मनः कृत्वा शास्त्रतश्चौर्ध्वदेहिकम् ॥ ३३ ॥

भक्षयस्व सुविस्रब्धो मामत्र द्विजसत्तम ।
आहारीकृतमेतत्ते मया देहमिहात्मनः ॥ ३४ ॥

एतावदेव विप्रस्य ब्राह्मणत्वं प्रचक्षते ।
यावत्पतगजात्यग्र्य, स्वसत्यपरिपालनम् ॥ ३५ ॥

न यज्ञैर्दक्षिणावद्भिस्तत्पुण्यं प्राप्यते महत् ।
कर्मणान्येन वा विप्रैर्यत्सत्यपरिपालनात् ॥ ३६ ॥

इत्यृषेर्वचनं श्रुत्वा सोऽन्तर्विस्मयनिर्भरः ।
प्रत्युवाच मुनिं शक्रः पक्षिरूपधरस्तदा ॥ ३७ ॥

योगमास्थाय विप्रेन्द्र, त्यजेदं स्वकलेवरम् ।
जीवज्जन्तुं हि विप्रेन्द्र, न भक्षामि कदाचन ॥ ३८ ॥

तस्य तद्वचनं श्रुत्वा योगयुक्तोऽभवन्मुनिः ।
वं तस्य निश्चयं ज्ञात्वा शक्रोऽध्याह स्वदेहभृत् ॥ ३९ ॥

भो भो विप्रेन्द्र, बुध्यस्व बुद्ध्या बोध्यं बुधात्मक ।
जिज्ञासार्थं मयाऽयं ते अपराधः कृतोऽनघ ॥ ४० ॥

तत्क्षमस्वामलमते, का चेच्छा क्रियतां तव ।
पालनात्सत्यवाक्यस्य प्रीतिर्मे परमा त्वयि ॥ ४१ ॥

अद्यप्रभृति ते ज्ञानमैन्द्रं प्रादुर्भविष्यति ।
तपस्यथ तथा धर्मे न ते विघ्नो भविष्यति ॥ ४२ ॥

इत्युक्त्वा तु गते शक्रे पिता कोपसमन्वितः ।
प्रणम्य शिरसास्माभिरिदमुक्तो महामुनिः ॥ ४३ ॥

बिभ्यतां मरणात्तात, त्वमस्माकं महामते ।
क्षन्तुमर्हसि दीनानां जीवितप्रियता हि नः ॥ ४४ ॥

रागात्क्रोधः प्रभवति क्रोधाल्लोभोऽभिजायते ।
लोभाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ॥ ४५ ॥

वाणेनाशनिकल्पेन निर्दोषा वनमध्यगा ।
तस्मात्त्वमपि दुर्बुद्धे, क्रव्यादत्वमवाप्स्यसि ॥ ९ ॥

वनेऽस्मिन्कण्टकाकीर्णे व्याघ्ररूप त्वमाप्नुहि ।
शापप्रदानं श्रुत्वेत्थ स राजा पुरत स्थित ॥ १० ॥

प्रोवाच प्राञ्जलिर्भूत्वा ता मृगी व्यथितेन्द्रियः ।

राजोवाच ॥

स्तन्य तु तनयस्येत्थ प्रयच्छन्ती न मे मता ॥ ११ ॥

अज्ञानेन हृता भद्रे, प्रसीद सुसमाधिना ।
व्याघ्ररूपमह मुक्त्वा प्राप्स्ये वै मानुष कदा ॥ १२ ॥

एवविधस्य शापस्य विमोक्षं शस मेऽधुना ।
एवमुक्ते मृगी तस्य प्रोवाच वचन शुभा ॥ १३ ॥

मृग्युवाच ॥

राजन्नन्दशतान्ते तु शापस्यागतया गवा ।
नन्दया सह संवादमासाद्यान्तो भविष्यति ॥ १४ ॥

पुलस्त्य उवाच ॥

मृग्योक्तैर्वचनै राजा व्याघ्र एवाभवत्तदा ।
नखदंष्ट्रायुधोपेतो घोररूपो विभीषण ॥ १५ ॥

तत्रासौ भक्षयन्नास्ते मृगान्हत्वा चतुष्पदान् ।
द्विपदानपि तत्रस्थान्कालेन क्रमयोजितान् ॥ १६ ॥

एव तत्र वने तस्य वत्सराणा शत गतम् ।
गते वर्षशते तस्य वसतस्तु वने तदा ॥ १७ ॥

आयातं गोकुलं काले यवसोदककारणात् ।
श्रीवैर्गोपैः समाकीर्णं यादवैरिव तद्वनम् ॥ १८ ॥

निशि वासरयोपेतं गोपानां तु शुभप्रदम् ।
एवं तु वसतस्तस्य खर्जूरीवनसंसदि ॥ १९ ॥

हृष्टा पुष्टा तथा तुष्टा नन्दा वै नाम नामतः ।
गोमण्डलस्य सा मुख्या हंसवर्णा घटस्रवा ॥ २० ॥

दीर्घघोणा विभक्ताङ्गी बन्धुरा च तनुत्वचा ।
नीलकण्ठा शुभप्रीवा घण्टाली मधुरस्वरा ॥ २१ ॥

सा च यूथस्य सर्वस्य अग्रे चरति निर्भया ।
घासस्थानं चरेच्छन्न गत्वैका च यथासुखम् ॥ २२ ॥

यथेष्टकामं सुरभिरच्छिन्नं चरते तृणम् ।
रोहितो नाम तत्रान्यः पर्वतः सरितस्तटे ॥ २३ ॥

अनेककन्दरदरीगुहाशतनिषेवितः ।
तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले ॥ २४ ॥

संकटे विषमे दुर्गे भैरवे लोमहर्षणे ।
मृगसिंहसमाकीर्णे बहुश्वापदसेविते ॥ २५ ॥

वल्लीवृक्षैश्च गहने शिवाशतनिनादिते ।
दुर्गेऽस्मिन्वसते रौद्रः कालरूपी भयंकरः ॥ २६ ॥

द्वीपी शोणितमांसाशी महादंष्ट्रो महाबलः ।
महापर्वतसकाशो मेघगर्जितनिःस्वनः ॥ २७ ॥

स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ।
एवं प्रणष्टबुद्धीनां रागलोभानुवर्तिनाम् ॥ ४६ ॥

जीविते च सलोभानां प्रसादं कुरु सत्तम ।
योऽयं शापो भगवता दत्तः स न भवेत्तथा ॥ ४७ ॥

ऋषिरुवाच ॥

यन्मयोक्तं न तन्मिथ्या भविष्यति कदाचन ।
न मे वागनृतं प्राह यावदद्येति पुत्रकाः ॥ ४८ ॥

यस्माच्च युष्माभिरहं प्रणिपत्य प्रसादितः ।
तस्मात्तिर्यक्त्वमापन्नाः परं ज्ञानमवाप्स्यथ ॥ ४९ ॥

पक्षिण ऊचुः ॥

एवं शप्ताः स्म भगवन्पित्रा दैववशात्पुरा ।
वयमित्थं द्विजश्रेष्ठ, खगत्वं समुपागताः ॥ ५० ॥

इति श्रीमार्कण्डेयपुराणे
तृतीयोऽध्यायः ॥

# ॥ नन्दाचरित्रम् ॥

सूत उवाच ॥

अथ देवव्रतः प्राह किमन्या सा सरिद्वरा ।
ख्यातेयं पौरुष सदन, नन्दानाम्ना सरस्वती ॥ १ ॥

यथा भूता येन कृता कारणेन सरिद्वरा ।
एवमुक्ते पुलस्त्योऽसौ भीष्मायैवानुशासनम् ॥ २ ॥

आख्यातुमुपचक्राम नन्दा नामेति यत्स्मृतम् ।
मृगयापरो नित्यमासीद्राजा प्रभञ्जनः ॥ ३ ॥

सम्प्राप्तोऽसौ मृगान्हन्तुं वने तस्मिन्नराधिपः ।
स ददर्श ततस्तस्मिन् मृगीं गुल्मान्तरे स्थिताम् ॥ ४ ॥

मार्गणेन सुतीक्ष्णेन तां विव्याध पुरोगताम् ।
सा विलोक्य दिशः सर्वास्तं दृष्ट्वा शरपाणिनम् ॥ ५ ॥

आह तं किं कृतं मूढ त्वयैतत्कर्म दुष्कृतम् ।
स्तन्यं यावत्प्रयच्छामि सुतस्याधोमुखी स्थिता ॥ ६ ॥

तावत्ते मांसलोभेन विद्धाहमतिलोभया ।
पिबन्तं चैव सुप्तं च रतिव्यापारमेव च ॥ ७ ॥

एवंविधं मृगं राजा न हन्याच्छास्त्रया श्रुतम् ।
स्तन्यं तु तनयस्यास्य प्रयच्छन्ती त्वया हता ॥ ८ ॥

महागुहादरीवक्त्रस्तीक्ष्णदंष्ट्रो नरायुधः ।
नन्दो नाम स धर्मात्मा स च गोपहिते रतः ॥ २८ ॥

अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनं परिरक्षति ।
तस्य यूथपरिभ्रष्टा नन्दा सा तृणतृष्णया ॥ २९ ॥

चरन्ती व्याघ्रपुरतः सा वै धेनुरुपागता ।
अभ्यद्रवच्च तां द्वीपी तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३० ॥

व्याघ्र उवाच ॥

त्वं मेऽद्य विहितो भक्षः स्वयं प्राप्तासि धेनुके ।

पुलस्त्य उवाच ॥

द्वीपिनश्च वचः श्रुत्वा निष्ठुरं लोमहर्षणम् ॥ ३१ ॥

शुभ्ररूपान्वितं बालं भद्रमिन्दुसमप्रभम् ।
सुतं स्मरति सा धेनुः स्नेहार्द्रा गद्गदस्वरा ॥ ३२ ॥

दह्यन्ती पुत्रशोकेन नन्दा सा पुत्रवत्सला ।
रुदती करुणं चैव निराशा पुत्रदर्शने ॥ ३३ ॥

द्वीपी दृष्ट्वा तु तां धेनुं क्रन्दमानां सुदुःखिताम् ।
उवाच वचनं घोरं धेनुके, किं प्ररुद्यते ॥ ३४ ॥

दैवान्मुखोपपन्नासि भक्षस्त्वं मे यदृच्छया ।
रुदत्या वा हसन्त्या वा नाद्य ते जीवनं भवेत् ॥ ३५ ॥

विहितं भुज्यते लोके स्वयं प्राप्तासि धेनुके ।
मृत्युस्ते विहितोऽद्यैव वृथा किमनुशोचसि ॥ ३६ ॥

पप्रच्छ तां पुनर्द्वीपी किमर्थं रुदितं त्वया ।
कौतुकं सांप्रतं जातं महन्मे कथयस्व वै ॥ ३७ ॥

व्याघ्रस्य वचनं श्रुत्वा नन्दा वाक्यमथाब्रवीत् ।

नन्दोवाच ॥

क्षन्तुमर्हसि मे सर्वं कामरूप, नमोऽस्तु ते ॥ ३८ ॥

त्वां समासाद्य लोकस्य परित्राणं न विद्यते ।
जीवितं नैव शोचामि प्राप्तव्यं मरणं मया ॥ ३९ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न शोचामि मृगाधिप ॥ ४० ॥

देवैरपि तथा सर्वैर्मर्तव्यमवशैर्ध्रुवम् ।
तस्मात्तु नाहमेवैका व्याघ्र, शोचामि जीवितम् ॥ ४१ ॥

किंतु स्नेहेन मे शोको दुःखेन रुदितं मया ।
अस्ति मे हृदि सन्तापस्तं च त्वं श्रोतुमर्हसि ॥ ४२ ॥

प्रथमे वयसि प्राप्ते प्रसूताहं मृगाधिप ।
दृष्टः प्रथमजः पुत्रो मम व्याघ्र, महाबलः ॥ ४३ ॥

क्षीरपायी च मे वत्सस्तृणं नाद्यापि जिघ्रति ।
स च गोपकुले बद्धः क्षुधार्तो मामवेक्षते ॥ ४४ ॥

तमहं धातुशोचामि कथं जीविष्यते सुतः ।
तस्येच्छामि स्तनं दातुं पुत्रस्नेहवशं गता ॥ ४५ ॥

पाययित्वा च तं वत्समवलिह्य च मूर्धनि ।
मातॄणामर्पयित्वा तु संदिश्य च हिताहितम् ॥ ४६ ॥

पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि ।

पुलस्त्य उवाच ॥

स नन्दाया वचः श्रुत्वा मृगेन्द्रः पुनरब्रवीत् ॥ ४७ ॥

व्याघ्र उवाच ॥

किं ते पुत्रेण कर्तव्यं मरणं किं न बुध्यसे ।
त्रसन्ति सर्वभूतानि मां निरीक्ष्य म्रियन्ति च ॥ ४८ ॥

त्वं पुनः कृपयाविष्टा पुत्र पुत्रेति भाषसे ॥ ४९ ॥

न पुत्रा न तपो दानं न माता न पिता सुहृत् ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ ५० ॥

कथं त्वं गोकुलं गत्वा गोपीजनसमाकुलम् ।
गोलोकप्रतिमं दृष्ट्वा ततः प्रत्यागमिष्यसि ॥ ५१ ॥

पश्य भूतानि मे भद्रे, पिबन्तु रुधिरं तव ।
न निर्विण्णानि भूतानि वाङ्मात्रेण करोम्यहम् ॥ ५२ ॥

नन्दोवाच ॥

अहं प्रथमवत्सा तु मृगेन्द्र, शृणु मे वचः ।
दृष्ट्वा सखीः सुतं बालं गोपांश्च प्रतिपालकान् ॥ ५३ ॥

गोपीजनमुपामन्त्र्य जननीं तां विशेषतः ।
शपथैरागमिष्यामि यदि मन्यसि मुञ्च माम् ॥ ५४ ॥

यत्पापं ब्रह्महत्यायां मातापितृवधे तथा ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥ ५५ ॥

यत्पाप लुन्धकानां तु म्लेच्छानां गरदायिनाम् ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ५६ ॥

गोष्ठे विघ्नाश्च ये कुर्यु स्वपन्त ताडयन्ति च ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ५७ ॥

सकृद्दत्वा तु य कन्यां द्वितीये दातुमिच्छति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ५८ ॥

द्विभार्य पुरुषो यस्तु स्नेहादेकां प्रपश्यति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ५९ ॥

यस्त्वनर्हान्यलीवर्दान्विषम वाहयेत्पुमान ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ६० ॥

कथायां कथ्यमानायां विघ्न कारयते तु य ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ६१ ॥

गृह यस्यागत मित्र निराश प्रतिगच्छति ।
तेन पापेन लिप्येऽहं यद्यहं नागमे पुन ॥ ६२ ॥

इत्येतै पातकैर्घोरैरागमिष्याम्यहं पुन ।
बुध्द्वा सप्रत्यय द्वीपी पुनर्वचनमब्रवीत ॥ ६३ ॥

द्वीप्युवाच ॥
सजात प्रत्ययोऽस्माक शपथैस्तव धेनुके ॥ ६४ ॥

कदाचिन्मन्यसे गत्वा मूढोऽसौ वञ्चितो मया ।
अत्रापि केचिद्वक्ष्यन्ति शपथेनास्ति पातकम् ॥ ६५ ॥

कामिनीषु विवाहेषु गवां मुक्तौ तथैव च ।
प्राणात्यये समुत्पन्ने श्रद्धातव्यं न च त्वया ॥ ६६ ॥

लोकेऽस्मिन्नास्तिकाः केचिन्मूर्खाः पण्डितमानिनः ।
भ्रामयिष्यन्ति ते बुद्धिं चक्रारूढमिव क्षणात् ॥ ६७ ॥

कुतर्कहेतुदृष्टान्तैरज्ञानावृतचेतसः ।
मोहयन्ति नराः क्षुद्रा आगमार्थाविशारदाः ॥ ६८ ॥

अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ ६९ ॥

प्रायः कृतार्थो लोकोऽयं मन्यते नोपकारिणम् ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ७० ॥

न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः ।
सर्वस्य हि कृतार्थस्य मतिरन्या प्रजायते ॥ ७१ ॥

ऋषिदेवासुरनरैः शपथाः कार्यसिद्धये ।
कृताः परस्परं पूर्वं तांस्तु मन्यामहे वयम् ॥ ७२ ॥

सत्येनापि शपेद्यस्तु देवाग्निगुरुसंनिधौ ।
तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ॥ ७३ ॥

मा ते बुद्धिर्भवेदेवं शपथैरेप वञ्चितः ।
त्वयैव दर्शितं सर्वं यथेष्टं कुरु सांप्रतम् ॥ ७४ ॥

नन्दोवाच ॥

एवमेव मया साधो, कस्त्वां वञ्चयितुं क्षमः ।
आत्मैव वञ्चितस्तेन यः परं वञ्चयिष्यति ॥ ७५ ॥

व्याघ्र्युवाच ॥

धेनुके, गच्छ पश्य त्वं पुत्रकं पुत्रवत्सले ।
पाययित्वा स्तनं वत्समवलिह्य च मूर्धनि ॥ ७६ ॥

मातरं भ्रातरं दृष्ट्वा सखीस्वजनबान्धवान् ।
सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु ॥ ७७ ॥

पुलस्त्य उवाच ॥

एवं सा शपथान्कृत्वा धेनुर्वै सत्यवादिनी ।
अनुज्ञाता मृगेन्द्रेण प्रयाता पुत्रवत्सला ॥ ७८ ॥

अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता ।
हम्भारवं प्रमुञ्चन्ती पतिता शोकसागरे ॥ ७९ ॥

करीव चरणग्राहैर्गृहीतः सलिलाशये ।
अशक्ता तत्परित्राणे विलपन्ती मुहुर्मुहुः ॥ ८० ॥

सा तु वै गोकुलं प्राप्य इन्द्रनद्यास्तटे स्थितम् ।
श्रुत्वा तु वत्सं क्रोशन्तं पर्यधावत संमुखी ॥ ८१ ॥

उपसृत्य तु तं बालं बाष्पपर्याकुलेक्षणा ।
संप्राप्य मातरं वत्सः शङ्कितः परिपृच्छति ॥ ८२ ॥

वत्स उवाच ॥

न ते पश्यामि सौम्यत्वं शर्म नैवाद्य लक्षये ।
उद्विग्ना चापि ते दृष्टिर्भीता चातीव लक्ष्यसे ॥ ८३ ॥

नन्दोवाच ॥

पिब पुत्र, स्तनं मेऽद्य कारणं यदि पृच्छसि ।
अशक्ताहं तवाख्यातुं कुरु तृप्तिं यथेप्सितम् ॥ ८४ ॥

अपश्चिमं तु ते पुत्र दुर्लभं मातृदर्शनम् ।
एकाहमद्य मे पीत्वा प्रभाते कस्य पास्यसि ॥ ८५ ॥

मयाद्य पुत्र गन्तव्यं शपथैरागता ह्यहम् ।
क्षुत्क्षामस्य तु व्याघ्रस्य दातव्यं चात्मजीवितम् ॥ ८६ ॥

नन्दायाश्च वचः श्रुत्वा वत्सो वचनमब्रवीत् ।

वत्स उवाच ॥

अहं तत्र गमिष्यामि यत्र त्वं गन्तुमिच्छसि ॥ ८७ ॥
श्लाघ्यं ममापि मरणं त्वया सह न संशयः ।
एकाकिनापि मर्तव्यं मयापि च त्वया विना ॥ ८८ ॥

यदि मां सहितं मातर्वने व्याघ्रो हनिष्यति ।
या गतिर्मातृभक्तानां ध्रुव सा मे भविष्यति ॥ ८९ ॥

तस्मादवश्यं यास्यामि त्वया सह न संशयः ।
अथवा तिष्ठ मातस्त्व शपथाः सन्तु ते मम ॥ ९० ॥

जननीविप्रयुक्तस्य जीविते किं प्रयोजनम् ।
अनाथस्य हि मे नित्य को हि नाथो भविष्यति ॥ ९१ ॥
नास्ति मातृसमो बन्धुर्बालानां क्षीरपायिनाम् ।
नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः ॥ ९२ ॥
नास्ति मातृसमः स्नेहो नास्ति मातृसमं सुखम् ।
नास्ति मातृसमो देव इह लोके परत्र च ॥ ९३ ॥
एतं वै परमं धर्मं प्रजापतिविनिर्मितम् ।
ये तिष्ठन्ति सदा पुत्रास्ते यान्ति परमां गतिम् ॥ ९४ ॥

नन्दोवाच ॥

ममैव विहितो मृत्युर्न त्वं पुत्रागमिष्यसि ।
न चायमल्पजीवानां मृत्युः स्यादन्यमृत्युना ॥ ९५ ॥

अपश्चिमस्त्वयं पुत्र, मातृसन्देश उत्तमः ।
अत्र तिष्ठस्व मद्वाक्ये ततः शुश्रूषणं पुनः ॥ ९६ ॥

जले वने च विचरन्प्रमादं मा करिष्यसि ।
प्रमादात्सर्वभूतानि विनश्यन्ति न संशयः ॥ ९७ ॥

न च लोभेन कर्तव्यं विषमस्थं तृणं क्वचित् ।
लोभाद्विनाशः सर्वेषामिह लोके परत्र च ॥ ९८ ॥

समुद्रमटवीं दुर्गं विशन्ते लोभमोहिताः ।
लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ॥ ९९ ॥

लोभात्प्रमादाद्विस्रम्भात्त्रिविधैः क्षीयते जगत् ।
तस्माल्लोभं न कुर्वीत न प्रमादं न विश्रमेत् ॥ १०० ॥

आत्मा हि सततं पुत्र रक्षितव्यः प्रयत्नतः ।
सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छचौरादिसङ्कटे ॥ १०१ ॥

तिरश्चां पापयोनीनामेकत्र वसतामपि ।
विपरीतानि चित्तानि विज्ञायन्ते न पुत्रक ॥ १०२ ॥

नखिनां च नदीनां च शृङ्गिणां शस्त्रधारिणां ।
विश्वासो नैव कर्तव्यः स्त्रीणां प्रेष्यजनस्य च ॥ १०३ ॥

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ १०४ ॥

न विश्वसेत्स्वदेहेऽपि बालेऽप्याभीलचेतसि ।
वक्ष्यन्ति गूढमत्यर्थं सुप्रमत्ते प्रमादतः ॥ १०५ ॥

गन्धः सर्वत्र सततमाघ्रातव्यः प्रयत्नतः ।
गावः पश्यन्ति गन्धेन राजानश्चारचक्षुषा ॥ १०६ ॥

नैकस्तिष्ठेद्वने घोरे धर्ममेव प्रचिन्तयेत् ।
न चोद्वेगस्त्वया कार्यः सर्वस्य मरणं ध्रुवम् ॥ १०७ ॥

यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ १०८ ॥

पुत्रानिलं जगत्सर्वं तत्रैकः शोचमे कथम् ।
तावत्त्वं शोकमुत्सृज्य मद्वाक्यमनुपालय ॥ १०९ ॥

पुलस्त्य उवाच ॥

शिरस्याघ्राय तं पुत्रमवलिह्य च मूर्धनि ।
शोकेन महताविष्टा बाष्पव्याकुललोचना ॥ ११०॥

विनिश्वसन्ती नागीव दीर्घमुष्णं मुहुर्मुहुः ।
पुत्रहीनं जगच्छून्यं प्रपश्यन्तीव साऽभवत् ॥ १११ ॥

महापङ्कनिमग्नेव तिष्ठन्ती चावसीदति ।
विलप्य नन्दिनी पुत्रमुवाचेद पुनर्वचः ॥ ११२ ॥

नन्दोवाच ॥

नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ।
नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमा गतिः ॥ ११३ ॥

अपुत्रस्य गृहं शून्यमपुत्रस्य जनस्तथा ।
पुत्रेण लभते लोकानपुत्रो नरकं ध्रुवम् ॥ ११४ ॥

लोको वदति वाक्यानि चन्दनं किल शीतलम् ।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ ११५ ॥

पुलस्त्य उवाच ॥

इति पुत्रगुणानुक्त्वा निरीक्ष्य च पुनः पुनः ।
स्वमातरं सखीर्गोपीस्त्वरमाणा च पृच्छति ॥ ११६ ॥

नन्दोवाच ॥

यूथस्याग्रे चरन्ती मामाससाद मृगाधिपः ।
मुक्ताहं तेन शपथैः पुनर्यास्यामि तत्र वै ॥ ११७ ॥

सुतं च मातरं चैव सखीर्दृष्टुं च गोकुलम् ।
आगता सत्यवाक्येन पुनर्यास्यामि तत्र वै ॥ ११८ ॥

मातः क्षमस्व तत्सर्वं दौःशील्याद्यन्मया कृतम् ।
सुतस्तवायं दौहित्रः विमन्यद्द्रष्टीम्यहम् ॥ ११९ ॥

विपुले, चम्पके, श्यामे, भद्रे, सुरभि, मालिनि ।
वसुधारे, प्रिये, नन्दे, महानन्दे, घटस्रवे ॥ १२० ॥

अज्ञानाज्ज्ञानतो वापि यदुक्तं किंचिदप्रियम् ।
तत्क्षमध्वं महाभागा यथान्यथं कृतं मया ॥ १२१ ॥

सर्वाः सर्वगुणोपेता सर्वलोकस्य मातरः ।
सर्वाः सर्वप्रदा नित्यं क्षमध्वं मम बालकम् ॥ १२२ ॥

अनाथं विकलं दीनं रक्षध्वं मम पुत्रकम् ।
मातृशोकाग्निसन्तप्तं भगिन्यः पालयिष्यथ ॥ १२३ ॥

भगिनीनामयं पुत्रो ह्यर्पितः स्वसुतो मया ।
पाल्यो बालश्च सर्वाभिः पोष्यः पाल्यश्च पुत्रवत् ॥ १२४ ॥

तस्मादनाथं मद्दीनं पुत्रवत्पालयिष्यथ ।
क्षमध्वं च महाभागा याम्येऽहं सत्यसंश्रयात ॥ १२५ ॥

न चिन्ता महती कार्या सखीभिश्च कथंचन ।
प्रथमस्यास्य जातस्य स्थितं मरणमग्रतः ॥ १२६ ॥

पुलस्त्य उवाच ॥

श्रुत्वा तु नन्दावचनं माता सख्यश्च दुःखिताः ।
विषादं परमं जग्मुरिदमूचुः सुविस्मिताः ॥ १२७ ॥

मातृसख्य ऊचुः ॥

अहोऽत्र महदाश्चर्यं यद्व्याघ्रवचनात्तव ।
प्रवेष्टुमुद्यता भीमं नन्दिनी सत्यवादिनी ॥ १२८ ॥

शपथैः सत्यवाक्येन वञ्चयित्वा महाभयम् ।
नाशितव्यं प्रयत्नेन आत्मरक्षा यथा तथा ॥ १२९ ॥

नन्दे, न चैव गन्तव्यमधर्मोऽयं कृतस्त्वया ।
यद्बालं स्वसुतं त्यक्त्वा सत्यलोभेन गम्यते ॥ १३० ॥

अत्र गाथा पुरा गीता ऋषिभिर्धर्मवादिभिः ।
प्राणत्यागे समुत्पन्ने शपथैर्नास्ति पातकम् ॥ १३१ ॥

उक्त्वानृतं भवेद्यत्र प्राणिनां प्राणरक्षणम् ।
अनृतं तत्र सत्यं स्यात् सत्यमप्यनृतं भवेत् ॥ १३२ ॥

कामिनीषु विवाहेषु गवां मुक्तौ तथैव च ।
ब्राह्मणानां विपत्तौ च शपथैर्नास्ति पातकम् ॥ १३३ ॥

नन्दोवाच ॥

परेषां प्राणरक्षार्थं वदाम्येवानृतं वचः ।
नात्मार्थमुत्सहे वक्तुं जीवितार्थे कथंचन ॥ १३४ ॥

एकः संक्लिश्यते गर्भे मरणे भरणे तथा ।
भुङ्क्ते चैकः सुखं दुःखमतः सत्यं वदाम्यहम् ॥ १३५ ॥

सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः ।
उदधिः सत्यवाक्येन मर्यादां न विलङ्घति ॥ १३६ ॥

विष्णवे पृथिवीं दत्वा बलिः पातालमाश्रितः ।
छद्मनापि बलिर्बद्धः सत्यवाक्येन तिष्ठति ॥ १३७ ॥

प्रवर्धमानः शैलेन्द्रः शतशृङ्गः समुच्छ्रितः ।
सत्येन संस्थितो विन्ध्यः प्रबन्धं नातिवर्तते ॥ १३८ ॥

स्वर्गो मोक्षस्तथा धर्मः सर्वे वाचि प्रतिष्ठिताः ।
यस्तां लोपयते वाचमशेषं तेन लोपितम् ॥ १३९ ॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ १४० ॥

तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ।
यास्यामि नरकं घोरं विलोप्यात्मानमात्मना ॥ १४१ ॥

अगाधसलिले शुद्धे सत्यतीर्थे क्षमाह्रदे ।
स्नात्वा पापविनिर्मुक्तः प्रयाति परमां गतिम् ॥ १४२ ॥

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ १४३ ॥

सत्यं साधु तपः श्रुतं च परमं क्लेशादिभिर्वर्जितं
साधूनां निकषः सतां कुलधनं सर्वाश्रमाणां वरम् ।
स्वाधीनं च सुदुर्लभं च जगतः साधारणं भूषणं
यन्म्लेच्छोऽप्यभिधाय गच्छति दिवं तत्त्यज्यते वा कथम् ॥

सख्य ऊचुः ॥

नन्दे, सा त्वं नमस्कार्या सर्वैरपि सुरासुरैः ।
या त्वं परमसत्येन प्राणांस्त्यजसि दुस्त्यजान् ॥ १४५ ॥

ब्रूमः किं तत्र कल्याणि, या त्वं धर्मधुरंधरा ।
सत्येनानेन नाप्राप्यं त्रैलोक्ये वस्तु किंचन ॥ १४६ ॥

अवियोगं च पश्यामस्त्वामस्मात्सुतेन हि ।
नार्यां कल्याणचित्तायां नापदः सन्ति कुत्रचित् ॥ १४७ ॥

पुलस्त्य उवाच ॥

दृष्ट्वा गोपीजनं सर्वं परिक्रम्य च गोकुलम् ।
नन्दा सप्रस्थिता देवान्गृह्याश्चापृच्छ्य सा पुनः ॥ १४८ ॥

क्षितिं वरुणमग्निं च वायुं चापि निशाकरम् ।
दश दिग्देवताश्चाश्रमवाणि सर्वं मह ॥ १४९ ॥

सर्वान्विज्ञापयामास प्रणिपत्य मुहुर्मुहु ॥ १५० ॥

नन्दोवाच ॥

ये सश्रिता वने सिद्धा सर्वाश्च वनदेवता ।
वने चरन्त शरण ते रक्षन्तु सुत मम ॥ १५१ ॥

चम्पकाशोकपुन्नागा सरलार्जुनकिंशुका ।
शृण्वन्तु पाद्पा सर्वे सन्देश मम विह्वगम ॥ १५२ ॥

बाल्मेकाकिन दीन चरन्त विषमे वने ।
रक्षध्व वत्सल बाल स्नेहात्पुत्रमिवौरसम ॥ १५३ ॥

मातापितृवीहीन च अनाथ दीनमानसम ।
विचरन्तमिमा भूमि क्रन्दमान सुदु खितम ॥ १५४ ॥

तस्येह क्रन्दमानस्य मत्पुत्रस्य महावने ।
महाशोकाभिभूतस्य क्षुत्पिपासातुरस्य च ॥ १५५ ॥

शून्यस्यैकाकिन सर्व जगच्छून्य प्रपश्यत ।
चरमाणस्य कर्तव्य सानुक्रोशैस्तु रक्षणम ॥ १५६ ॥

पुलस्त्य उवाच ॥

एव सदिश्य बहुल पुत्रस्नेहवश गता ।
शोकाग्निनातिसदीप्ता निराशा पुत्रदर्शने ॥ १५७ ॥

नियुक्ता चक्रवाकीव लतेव पतिता तरो ।
अन्धेव यष्टिरहिता प्रस्खलन्ती पदे पदे ॥ १५८ ॥

अगच्छत्सा पुनस्तत्र यत्रासौ पिशिताशन ।
आस्ते विस्फूर्जितमुखस्तीक्ष्णदंष्ट्रो भयावह ॥ १५९ ॥

तावत्तदग्रतो वत्स ऊर्ध्वपुच्छोऽतिवेगवान् ।
आगम्य मातुरग्रे स मृगेन्द्रस्याग्रतोऽभवत् ॥ १६० ॥

आगतं तु सुतं दृष्ट्वा मृत्युं तं चाग्रत स्थितम् ।
व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् ॥ १६१ ॥

नन्दोवाच ॥

भो भो मृगेन्द्राऽऽगताहं सत्यधर्मव्रते स्थिता ।
कुरु तृप्तिं यथाकामं मम मांसेन साम्प्रतम् ॥ १६२ ॥

तृप्यन्तु पञ्चभूतानि पिब त्वं शोणितं मम ।
मृतायां मयि च व्याघ्र भक्षस्वेमं सुपुत्रकम् ॥ १६३ ॥

द्वीप्युवाच ॥

स्वागतं तव कल्याणि धेनुके सत्यवादिनि ।
न हि सत्यवतां किंचिदशुभं भवति क्वचित् ॥ १६४ ॥

त्वयोक्तं धेनुके, पूर्वं सत्यं प्रत्यागमे पुन. ।
तेन मे कौतुकं जातं प्राप्तागच्छेत्कथं पुन ॥ १६५ ॥

तव सत्यपरीक्षार्थं प्रेषितासि मया पुन ।
अन्यथा मा ममासाद्य जीवन्ती यास्यसे कथम् ॥ १६६ ॥

तत्र न. कौतुकं जातं सत्यस्यान्वेषणं मम ।
तस्मादनेन सत्येन मुक्तासि च मयाधुना ॥ १६७ ॥

भगिनी भवसे मम भागिनेयः सुतस्तव ।
दत्तोपदेशासि शुभे मम पापिष्ठकर्मणः ॥ १६८ ॥

सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः ।
सत्येन गौः क्षीरधारा प्रमुञ्चति हविष्प्रियाम् ॥ १६९ ॥

स वै धन्यतमो लोको यस्ते क्षीरेण जीवति ।
भूमेः प्रदेशा धन्यास्ते सतृणा वीरुधः शुभे ॥ १७० ॥

ते धन्यास्ते कृतार्थाश्च तैरेव सुकृतं कृतम् ।
वैराग्य जन्मनः सारं ये पिबन्ति पयस्तव ॥ १७१ ॥

मृगेन्द्रः प्रत्ययं दृष्ट्वा विस्मयं परमं गतः ।
प्रत्यादेशोऽयमस्माकं सत्यं देवैः प्रदर्शितः ॥ १७२ ॥

सत्यमेवं गवा दृष्ट्वा न मे रोचति जीवितम् ।
तत्करिष्ये अहं कर्म येन मुञ्चामि किल्बिषात् ॥ १७३ ॥

मया जीवसहस्राणि भक्षितानि हतानि च ।
गतिं कां तु गमिष्यामि दृष्ट्वा गोसत्यमीदृशम् ॥ १७४ ॥

अहं पापो दुराचारो नृशंसो जीवघातुकः ।
कांस्तु लोकान् गमिष्यामि कृत्वा कर्म सुदारुणम् ॥ १७५ ॥

गमिष्ये पुण्यतीर्थानि करिष्ये पापमोचनम् ।
पतिष्ये गिरिमारुह्य विशेयाऽपि हुताशनम् ॥ १७६ ॥

धेनोऽद्य यन्मया कार्यं तपः पापविशुद्धये ।
तदादिशस्व संक्षेपान्न कालो विस्तरस्य तु ॥ १७७ ॥

धेनुरुवाच ॥

तपः कृते प्रशंसन्ति त्रेतायां ज्ञानकर्म च ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ १७८ ॥

सर्वेषामेव दानानामिदमेवैकमुत्तमं ।
अभयं सर्वभूतानां नास्ति दानमतः परम् ॥ १७९ ॥

चराचराणां भूतानामभयं यः प्रयच्छति ।
स सर्वभयसंत्यक्तः परं ब्रह्माधिगच्छति ॥ १८० ॥

नास्त्यहिंसासमं दानं नास्त्यहिंसासमं तपः ।
यथा हस्तिपदे ह्यन्यत्पदं सर्वं प्रलीयते ॥ १८१ ॥

सर्वे धर्मास्तथा व्याघ्र प्रलीयन्ते ह्यहिंसया ।
योगवृक्षस्य सा छाया तापत्रयविनाशिनी ॥ १८२ ॥

धर्मज्ञानेऽस्य पुष्पाणि स्वर्गमोक्षौ फले तथा ।
दुःखत्रयाभिसन्तप्तास्छायां योगतरोः श्रिताः ॥ १८३ ॥

न बाध्यन्ते पुनर्दुःखैः प्राप्य निर्वाणमुत्तमम् ।
इत्येतत्परमं श्रेयः कीर्तितं ते समासतः ॥ १८४ ॥

ज्ञातं चैव त्वया सर्वं केवलं मां तु पृच्छसि ।

द्वीप्युवाच ॥

अहं मृगया पुरा शप्तो व्याघ्ररूपेण संस्थितः ॥ १८५ ॥

ततः प्राणिवधात्सर्वमशेषमपि विस्मृतम ।
त्वत्संपर्कोपदेशेन संजातं स्मरणं मम ॥ १८६ ॥

त्वं चाप्यनेन सत्येन गमिष्यसि परां गतिम ।
तदहं त्वां पुनः पृच्छे प्रश्नमेकं हृदि स्थितम ॥ १८७ ॥

मासं वर्षशतं जातं चिन्तयानस्य मे शुभे ।
भवतीभाग्ययोगेन कदाचित्स्वर्गशोभने ॥ १८८ ॥

कृतं धर्मस्य संस्थानं सतां मार्गे प्रतिष्ठितम् ।
किं तेऽभिधानं कल्याणि, ब्रूहि मे तव शोभनम् ॥ १८९ ॥

नन्दोवाच ॥

मम नन्देति संज्ञा तु कृता नन्देन स्वामिना ।
सांप्रतं भक्षयस्वेति तिष्ठेस्त्वं केन हेतुना ॥ १९० ॥

पुलस्त्य उवाच ॥

नन्देति श्रुत्वा तन्नाम मुक्तः शापात्प्रभञ्जनः ।
पुनर्नृपत्वमापन्नो बलरूपसमन्वितः ॥ १९१ ॥

एतस्मिन्नन्तरे धर्मस्तां नन्दां सत्यवादिनीम् ।
द्रष्टुं समागमत्तत्र प्राब्रवीच यशस्विनीम् ॥ १९२ ॥

धर्म उवाच ॥

तव सत्यगिराकृष्टो धर्मोऽहमिह चागतः ।
नन्दे वृणीष्व भद्रं ते वरं वरतमं हि यत् ॥ १९३ ॥

एवमुक्ता तु सा देवी नन्दा तं प्रार्थयद्वरम् ।

नन्दोवाच ॥

तवानुभावात्ससुता गच्छामि पदमुत्तमम् ।
भवत्विदं शुभं तीर्थं मुनीनां धर्मदायकम् ॥ १९४ ॥

मन्नाम्ना च सरिदियं नन्दा नाम सरस्वती ।
वरप्रदानादेवेश, तदेतत्प्रार्थितं मया ॥ १९५ ॥

पुलस्त्य उवाच ॥

सा तत्क्षणाद्गता देवी स्थानं सत्यवतां शुभम् ।
प्रभञ्जनोऽपि सद्राज्यं संप्राप्त प्रागुपार्जितम् ॥ १९६ ॥

नन्दा येन गता स्वर्गं नन्दां प्राप्य सरस्वतीम् ।
तेनाऽऽख्येयं बुधैस्तस्याः कृता नन्दासरस्वती ॥ १९७ ॥

सरस्वती पुनस्तस्माद्वनात्खर्जूरसंज्ञितात् ।
दक्षिणेन पुनर्याता पावयन्ती धरातलम् ॥ १९८ ॥

इति श्रीमहापुराणे पाद्मे नन्दाप्राचीमाहात्म्ये
अष्टादशाध्यायः ॥

# ॥ ब्राह्मणव्याधसंवादः ॥

मार्कण्डेय उवाच ॥

कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ १ ॥

साङ्गोपनिषदो वेदानधीते द्विजसत्तमः ।
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः ॥ २ ॥

उपरिष्टाच्च वृक्षस्य बलाका सन्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३ ॥

तामवेक्ष्य ततः क्रुद्धः समपध्यायत द्विजः ।
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ॥ ४ ॥

अपध्याता च विप्रेण न्यपतद्धरणीतले ।
बलाकां पतितां दृष्ट्वा गतसत्त्वामचेतनाम् ॥ ५ ॥

कारुण्यादभिसन्तप्तः पर्यशोचत तां द्विजः ।
अकार्यं कृतवानस्मि रोषरागबलात्कृतः ॥ ६ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा बहुशो विद्वान्ग्रामं भैक्षाय संश्रितः ।
ग्रामे शुचीनि प्रचरन्कुलानि भरतर्षभ ॥ ७ ॥

प्रविष्टस्तत्कुल यत्र पूर्व चरितवास्तु स ।
देहीति याचमानोऽसौ तिष्ठेत्युक्त स्त्रिया तत ॥ ८ ॥

शौच तु यावत्कुरुते भाजनस्य कुटुम्बिनी ।
एतस्मिन्नन्तरे राजन्, क्षुधा सपीडितो भृशम् ॥ ९ ॥

भर्ता प्रविष्ट सहसा तस्या भरतसत्तम ।
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मण व्यपहाय तम् ॥ १० ॥

पाद्यमाचमनीय च ददौ भर्तुस्तथासनम् ।
प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ॥ ११ ॥

आहारेणाथ भक्ष्यैश्च वाक्यैश्च मधुरैस्तथा ।
उच्छिष्ट भाविता भर्तुर्भुङ्क्ते नित्य युधिष्ठिर ॥ १२ ॥

दैवत च पति मेने भर्तुश्चित्तानुसारिणी ।
कर्मणा मनसा वाचा नान्यचित्ताभ्यगात्पतिं ॥ १३ ॥

त सर्वभावोपगता पतिशुश्रूषणे रता ।
साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ॥ १४ ॥

भर्तुश्चापि हिते युक्ता सतत सानुवर्तते ।
देवतातिथिभृत्याना श्वश्रूश्वशुरयोस्तथा ॥ १५ ॥

शुश्रूषणपरा नित्य सतत सयतेन्द्रिया ।
सा ब्राह्मण ततो दृष्ट्वा सस्थित भैक्षकाङ्क्षिणम ॥ १६ ॥

कुर्वती पतिशुश्रूषा सस्माराथ शुभेक्षणा ।
व्रीडिता साभवत्साध्वी तदा भरतसत्तम ॥ १७ ॥

भिक्षामादाय विप्राय निर्जगाम यशस्विनी ।

ब्राह्मण उवाच ॥

किमिदं भवति, त्वं मां तिष्ठेत्युक्त्वा वरानने ॥ १८ ॥

उपरोधं कृतवती न विसर्जितवत्यसि ।

मार्कण्डेय उवाच ॥

ब्राह्मणं कोपसंतप्तं ज्वलन्तमिव तेजसा ॥ १९ ॥

दृष्ट्वा साध्वी मनुष्येन्द्र, सान्त्वपूर्वं वचोऽब्रवीत् ।

स्त्री उवाच ॥

क्षन्तुमर्हसि मे विप्र, भर्ता मे दैवतं महत् ॥ २० ॥

स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया ।

ब्राह्मण उवाच ॥

ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः ॥ २१ ॥

गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ।
इन्द्रोऽप्येषां प्रणमते किंपुनर्मानवा भुवि ॥ २२ ॥

अवलिप्ते, न जानीषे वृद्धानां न श्रुतं त्वया ।
ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि ॥ २३ ॥

स्त्री उवाच ॥

नाहं बलाका विप्रर्षे, त्यज क्रोधं तपोधन ।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि ॥ २४ ॥

नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ २५ ॥

जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।
अपेयं सागरं क्रोधात्कृतो हि लवणोदकः ॥ २६ ॥

तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति ॥ २७ ॥

ब्राह्मणानां परिभवाद्वातापि सुदुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ २८ ॥

बहु प्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम् ।
क्रोधः सुविपुलो ब्रह्मन्, प्रसादश्च महात्मनाम् ॥ २९ ॥

अस्मिंस्त्वतिक्रमे ब्रह्मन्, क्षन्तुमर्हसि मेऽनघ ।
पतिशुश्रूषया धर्मो यः स मे रोचते द्विज ॥ ३० ॥

दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ।
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ॥ ३१ ॥

शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण, यादृशम् ।
बलाका हि त्वया दग्धा रोषात्तद्विदितं मया ॥ ३२ ॥

क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३३ ॥

यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु चरतस्तं देवा ब्राह्मणं विदुः ॥ ३४ ॥

यो वदेदिह सत्यानि गुरून्सन्तोषयेत च ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३५ ॥

धर्मं तु ब्राह्मणस्याहुः स्वाध्याय दममार्जवम् ।
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ३६ ॥

सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥ ३७ ॥

श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ।
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ ३८ ॥

भवानपि च धर्मज्ञः स्वाध्यायनिरतः शुचिः ।
न तु तत्त्वेन भगवन्, धर्मं वेत्सीति मे मतिः ॥ ३९ ॥

यदि विप्र, न जानीषे धर्मं परमकं द्विज ।
धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम् ॥ ४० ॥

मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः ।
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ४१ ॥

तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ।
अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित ॥ ४२ ॥

स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविद्रते ।

ब्राह्मण उवाच ॥

प्रीतोऽस्मि तव भद्रं ते गतः क्रोधश्च शोभने ॥ ४३ ॥

उपालम्भस्त्वया युक्तो मम निःश्रेयसं परम् ।
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ॥ ४४ ॥

धन्या त्वमसि कल्याणि, यस्याः स्याद्वृत्तमीदृशम् ॥ ४५ ॥

जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।
अपेयः सागरः क्रोधात्कृतो हि लवणोदकः ॥ २६ ॥

तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
एषां क्रोधाग्निरद्यापि दण्डके नोपशाम्यति ॥ २७ ॥

ब्राह्मणानां परिभवाद्वातापिः सुदुरात्मवान ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ २८ ॥

बहु प्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम् ।
क्रोधः सुविपुलो ब्रह्मन, प्रमादश्च महात्मनाम ॥ २९ ॥

अस्मिंस्त्वतिक्रमे ब्रह्मन्, क्षन्तुमर्हसि मेऽनघ ।
पतिशुश्रूषया धर्मो य. स मे रोचते द्विज ॥ ३० ॥

दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ।
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ॥ ३१ ॥

शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण, यादृशम ।
बलाका हि त्वया दग्धा रोषात्तद्विदितं मया ॥ ३२ ॥

क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३३ ॥

यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु चरतस्तं देवा ब्राह्मणं विदुः ॥ ३४ ॥

यो वदेदिह सत्यानि गुरून्संतोषयेत च ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३५ ॥

हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ।
सोऽपश्यद्बहुवृत्तान्तां ब्राह्मण समतिक्रमन् ॥ ७ ॥

धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।
अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥ ८ ॥

मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम् ।
आकुलत्वाच्च क्रेतॄणामेकान्ते संस्थितो द्विजः ॥ ९ ॥

स तु ज्ञात्वा द्विजं प्राप्तं सहसा सम्भ्रमोत्थितः ।
आजगाम यतो विप्रः स्थितः एकान्तदर्शने ॥ १० ॥

व्याध उवाच ॥

अभिवादये त्वा भगवन्, स्वागतं ते द्विजोत्तम ।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम् ॥ ११ ॥

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ १२ ॥

मार्कण्डेय उवाच ॥

श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः ।
द्वितीयमिदमाश्चर्यमित्यमन्यत स द्विजः ॥ १३ ॥

अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीदिदम् ।
गृहं गच्छाव भगवन्, यदि ते रोचतेऽनघ ॥ १४ ॥

बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥ १५ ॥

मार्कण्डेय उवाच ॥

तया विसृष्टो निर्गम्य स्वमेव भवनं ययौ ।
विनिन्दन्स स्वमात्मानं कौशिको द्विजसत्तमः ॥ ४६ ॥

इति प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥

मार्कण्डेय उवाच ॥

चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः ।
विनिन्दन्स स्वमात्मानमागस्कृत इवाबभौ ॥ १ ॥

चिन्तयानः स धर्मस्य सूक्ष्मां गतिमथाब्रवीत् ।
श्रद्दधानेन वै भाव्यं गच्छामि मिथिलामहम् ॥ २ ॥

कृतात्मा धर्मवित्तस्यां व्याधो निवसते किल ।
तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ३ ॥

इति संचिन्त्य मनसा श्रद्दधानः स्त्रिया वचः ।
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः ॥ ४ ॥

संप्रतस्थे स मिथिलां कौतूहलसमन्वितः ।
अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ॥ ५ ॥

ततो जगाम मिथिलां जनकेन सुरक्षिताम् ।
धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ॥ ६ ॥

हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ।
सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन् ॥ ७ ॥

धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।
अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥ ८ ॥

मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम् ।
आकुलत्वाच्च क्रेतृणामेकान्ते संस्थितो द्विजः ॥ ९ ॥

स तु ज्ञात्वा द्विजं प्राप्तं सहसा संभ्रमोत्थितः ।
आजगाम यतो विप्रः स्थित एकान्तदर्शने ॥ १० ॥

व्याध उवाच ॥

अभिवादये त्वां भगवन्, स्वागतं ते द्विजोत्तम ।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम् ॥ ११ ॥

एकपत्न्या यदुक्तोऽसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ १२ ॥

मार्कण्डेय उवाच ॥

श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः ।
द्वितीयमिदमाश्चर्यमित्यमन्यत स द्विजः ॥ १३ ॥

अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीदिदम् ।
गृहं गच्छाव भगवन्, यदि ते रोचतेऽनघ ॥ १४ ॥

बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥ १५ ॥

प्रविश्य च गृह रम्यमासनेनाभिपूजित ।
पाद्यमाचमनीय च प्रतिगृह्य द्विजोत्तम ॥ १६ ॥

तत सुखोपविष्टस्त व्याध वचनमब्रवीत् ।
कर्मैतद्वै न सदृश भवत प्रतिभाति मे ॥ १७ ॥

अनुतप्ये भृश तात, तव घोरेण कर्मणा ।

व्याध उवाच ॥

कुलोचितमिद कर्म पितृपैतामह परम् ॥ १८ ॥

वर्तमानस्य मे धर्मे स्वे मन्यु मा कृथा द्विज ।
विधात्रा विहित पूर्व कर्म स्वमनुपालयन ॥ १९ ॥

प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽह द्विजोत्तम ।
सत्य वदे नाभ्यसूये यथाशक्ति ददामि च ॥ २० ॥

देवतातिथिभृत्यानामवशिष्टेन वर्तये ।
न कुत्सयाम्यह किंचिन्न गर्हे बलवत्तरम ॥ २१ ॥

कृतमन्वेति कर्तार पुराकर्म द्विजोत्तम ।
कृषिगोरक्षवाणिज्यमिद लोकस्य जीवनम् ॥ २२ ॥

दण्डनीतिस्त्रयी विद्या तेन लोको भवत्युत ।
कर्म शूद्रे कृषिर्वैश्ये सग्राम क्षत्रिये स्मृत ॥ २३ ॥

ब्रह्मचर्य तपो मन्त्रा सत्य च ब्राह्मणे सदा ।
राजा प्रशास्ति धर्मेण स्वकर्मनिरता प्रजा ॥ २४ ॥

विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु ।
भेतव्य हि सदा राजा प्रजानामधिपा हि ते ॥ २५ ॥

वारयन्ति विकर्मस्थं नृपा मृगमिवेषुभिः ।
जनकश्चेह विप्रर्षे, विकर्मस्थो न विद्यते ॥ २६ ॥

स्वकर्मनिरता वर्णाश्चत्वारोऽपि द्विजोत्तम ।
राजानो हि स्वधर्मेण श्रियमृच्छन्ति भूयसीम ॥ २७ ॥

सर्वेषामेव वर्णानां त्राता राजा भवत्युत ।
परेण हि हतान्ब्रह्मन , वराहमहिषानहम ॥ २८ ॥

न स्वय हन्मि विप्रर्षे, विक्रीणामि सदा त्वहम ।
न भक्षयामि मांसानि ऋतुगामी तथा ह्यहम् ॥ २९ ॥

सदोपवासी च तथा नक्तभोजी सदा द्विज ।
अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ॥ ३० ॥

प्राणिहिंसारतिश्चापि भवते धार्मिकः पुनः ।
अभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान ॥ ३१ ॥

अधर्मो वर्धते चापि संकीर्यन्ते तत. प्रजाः ।
भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ॥ ३२ ॥

क्लीबाश्चान्धाश्च बधिरा जायन्तेऽत्युच्चलोचनाः ।
पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ॥ ३३ ॥

स एप राजा जनकः प्रजा धर्मेण पश्यति ।
अनुगृह्णन्प्रजाः सर्वा. स्वधर्मनिरताः सदा ॥ ३४ ॥

ये चैव मां प्रशंसन्ति ये च निन्दन्ति मानवा. ।
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम ॥ ३५ ॥

शक्त्यान्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च कार्या भूतेषु वै सदा ॥ ३६ ॥

त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठन्ति पूरुषे ।
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ॥ ३७ ॥

न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ॥ ३८

न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ।
कर्म चेत्किंचिदन्यत्स्यादितरन्न तदाचरेत् ॥ ३९ ॥

यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ।
न पापे प्रतिपापः स्यात्साधुरेव सदा भवेत् ॥ ४० ॥

आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ।
कर्म चैतदसाधूनां वृजिनानामसाधुवत् ॥ ४१ ॥

न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ॥ ४२ ॥

महादृतिरिवाध्मातः पापो भवति नित्यदा ।
मूढानामवलिप्तानामसारं भाषितं भवेत् ॥ ४३ ॥

दर्शयत्यन्तरात्मा तं दिवा रूपमिवांशुमान् ।
न लोके राजते मूर्खः केवलात्मप्रशंसया ॥ ४४ ॥

अपि चेह मृजाहीनः कृतविद्यः प्रकाशते ।
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ॥ ४५ ॥

न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ।
विकर्मणा तप्यमानः पापाद्धि परिमुच्यते ॥ ४६ ॥

न तत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ।
कर्मणा येन तेनेह पापाद्द्विजवरोत्तम ॥ ४७ ॥

एवं श्रुतिरियं ब्रह्मन्, धर्मेषु प्रतिदृश्यते ।

पापान्यबुद्ध्वेह पुराकृतानि
प्राग्धर्मशीलोऽपि विहन्ति पश्चात् ।
धर्मो राजन्, नुदते पूरुषाणां
यत्कुर्वते पापमिह प्रमादात् ॥ ४८ ॥

पापं कृत्वा हि मन्येत नाहमस्मीति मानुषः ।
तं तु देवा प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥ ४९ ॥

चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ।
वसनस्येव छिद्राणि साधूनां विवृणोति यः ॥ ५० ॥

अपश्यन्नात्मनो दोषान् स पापः प्रेत्य नश्यति ।
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ५१ ॥

मुच्यते सर्वपापेभ्यो महाभ्रेणेव चन्द्रमाः ।
यथादित्यः समुद्यन्वै तमः पूर्वं व्यपोहति ॥ ५२ ॥

एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ।
पापानां विद्ध्यधिष्ठानं लोभमेव द्विजोत्तम ॥ ५३ ॥

लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।
अधर्म्या धर्मरूपेण तृणैः कूपा इवावृताः ॥ ५४ ॥

येषां पञ्च पवित्राणि शिष्टाचारेषु नित्यदा ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ५५ ॥

मार्कण्डेय उवाच ॥

स तु विप्रो महाप्राज्ञो धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ ५६ ॥

एतदिच्छामि भद्रं ते श्रोतुं धर्मभृतां वर ।
त्वत्तो महामते व्याध, तद्ब्रवीहि यथातथम् ॥ ५७ ॥

व्याध उवाच ॥

यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु सर्वदा ॥ ५८ ॥

कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्ममित्येव संतुष्टास्ते शिष्टाः शिष्टसम्मताः ॥ ५९ ॥

न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ६० ॥

गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मन्, शिष्टाचारेषु नित्यदा ॥ ६१ ॥

शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते वृत्तिं सा न शक्या ह्यतोऽन्यथा ॥ ६२ ॥

वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ६३ ॥

ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नरा ।
अपथा गच्छतां तेषामनुयातापि पीड्यते ॥ ६४ ॥

ये तु शिष्टा सुनियता श्रुतित्यागपरायणा ।
धर्मपन्थानमारूढा सत्यधर्मपरायणा ॥ ६५ ॥

नियच्छन्ति परा बुद्धि शिष्टाचारान्विता जना ।
उपाध्यायमते युक्ता स्थित्या धर्मार्थदर्शिन ॥ ६६ ॥

नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् ।
त्यज तान ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ६७ ॥

कामलोभमहाकीर्णा पञ्चेन्द्रियजला नदीम् ।
नाव धृतिमयीं कृत्वा जन्मदुर्गाणि सतर ॥ ६८ ॥

क्रमेण सचितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधू राग शुक्ल इवाम्बरे ॥ ६९ ॥

अहिंसा सत्यवचन सर्वभूतहित परम् ।
अहिंसा परमो धर्म स च सत्ये प्रतिष्ठित ॥ ७० ॥

सत्ये कृत्वा प्रतिष्ठा तु प्रवर्तन्ते प्रवृत्तय: ।
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ॥ ७१ ॥

आचारश्च सता धर्म सन्तश्चाचारलक्षणा ।
यो यथा प्रकृतिर्जन्तु स स्वा प्रकृतिमश्नुते ॥ ७२ ॥

पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ।
आरम्भो न्याययुक्तो य स हि धर्म इति स्मृत ॥ ७३ ॥

अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ।
स्वैः कर्मभिः सस्कृतानां घोरत्वं सम्प्रणश्यति ॥ ७४ ॥

तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्मं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ॥ ७५ ॥

आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसपन्ना सन्तः स्वर्गनिवासिनः ॥ ७६ ॥

वेदोक्तः परमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचारश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ७७ ॥

धारणं चापि विद्यानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं सतामाचारदर्शनम् ॥ ७८ ॥

सर्वभूतदयावन्तो अहिंसानिरताः सदा ।
परुषं च न भाषन्ते सदा सन्तो द्विजप्रियाः ॥ ७९ ॥

शुभानामशुभानां च कर्मणां फलसचये ।
विपाकमभिजानन्ति ते शिष्टाः शिष्टसम्मताः ॥ ८० ॥

न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।
सन्तः स्वर्गजितः शुक्लाः सन्निविष्टाश्च सत्पथे ॥ ८१ ॥

दातारः सविभक्तारो दीनानुग्रहकारिणः ।
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ॥ ८२ ॥

सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसमताः ।
दाननित्याः सुखाँल्लोकानाप्नुवन्तीह च श्रियम् ॥ ८३ ॥

पीडया च कलत्रस्य भृत्यानां च समाहिताः ।
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ॥ ८४ ॥

लोकयात्रां च पश्यन्तो धर्ममात्महितानि च ।
एवं सन्तो वर्तमानास्त्वेधन्ते शाश्वतीः समाः ॥ ८५ ॥

अहिंसा सत्यवचनमानृशंस्यमथार्जवम् ।
अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥८६ ॥

धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसाक्षिणः ॥ ८७ ॥

त्रीण्येव तु सतामाहुः सन्त. पदमनुत्तमम् ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव सदा वदेत् ॥ ८८ ॥

सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ।
गच्छन्तीह सुसन्तुष्टा धर्म्यं पन्थानमुत्तमम् ॥ ८९ ॥

शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ।
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ॥ ९० ॥

कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ।
कर्म च श्रुतसंपन्नं सतां मार्गमनुत्तमम् ॥ ९१ ॥

शिष्टाचारं निषेवन्ते नित्यं धर्ममनुव्रताः ।
प्रज्ञाप्रासादमारुह्य मुच्यन्ते महतो भयात् ॥ ९२ ॥

प्रेक्षन्तो लोकवृत्तानि विविधानि द्विजोत्तम ।
अतिपुण्यानि पापानि तानि द्विजवरोत्तम ॥ ९३ ॥

एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणं ब्रह्मन्, पुरस्कृत्य द्विजर्षभ ॥ ९४ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥



मार्कण्डेय उवाच ॥

स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥ १ ॥

विधिस्तु बलवान्ब्रह्मन्, दुस्तरं हि पुराकृतम् ।
पुराकृतस्य पापस्य कर्मदोषो भवत्ययम् ॥ २ ॥

दोषस्यैतस्य वै ब्रह्मन्, विघाते यत्नवानहम् ।
विधिना हि हते पूर्वं निमित्तं घातको भवेत् ॥ ३ ॥

निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ।
येषां हतानां मांसानि विक्रीणामीह वै द्विज ॥ ४ ॥

तेषामपि भवेद्धर्म उपयोगेन भक्षणे ।
देवतातिथिभृत्यानां पितृणां चाभिपूजनम् ॥ ५ ॥

ओषध्यो वीरुधश्चैव पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ६ ॥

आत्ममांसप्रदानेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥ ७ ॥

राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु वध्येते पशूनामन्वहं तदा ॥ ८ ॥

अहन्यहनि वध्येते द्वे सहस्रे गवां तदा ।
समांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ॥ ९ ॥

अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ।
चातुर्मास्ये च पशवो वध्यन्त इति नित्यशः ॥ १० ॥

अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ।
यज्ञेषु पशवो ब्रह्मन्, वध्यन्ते सततं द्विजैः ॥ ११ ॥

संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ।
यदि नैवाग्नयो ब्रह्मन्, मांसकामाभवन्पुरा ॥ १२ ॥

भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम ।
अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ॥ १३ ॥

देवतानां पितॄणां च भुङ्क्ते दत्वापि यः सदा ।
यथाविधि यथाश्रद्धं न प्रदुष्यति भक्षणात् ॥ १४ ॥

अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ १५ ॥

सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन तदा राज्ञा मानुषा भक्षिता द्विज ॥ १६ ॥

शापाभिभूतेन भृशमत्र किं प्रतिभाति मे ।
स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ॥ १७ ॥

पुराकृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ।
स्वकर्म त्यजतो ब्रह्मन्, अधर्म इह दृश्यते ॥ १८ ॥

स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः ।
पूर्वं तु विहितं कर्म देहिनं न विमुञ्चति ॥ १९ ॥

धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये ।
द्रष्टव्या तु भवेत्प्रज्ञा क्रूरे कर्मणि वर्तता ॥ २० ॥

कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ।
कर्मणस्तस्य घोरस्य बहुधा निर्णयो भवेत् ॥ २१ ॥

दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ।
द्विजातिपूजने चाहं धर्मे च निरतः सदा ॥ २२ ॥

अभिमानातिवादाभ्यां निवृत्तोऽस्मि द्विजोत्तम ।
कृषिं साध्विति मन्यन्ते तत्र हिंसा परा स्मृता ॥ २३ ॥

कर्षन्तो लाङ्गलैः पुंसो घ्नन्ति भूमिशयान्बहून् ।
जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति मे ॥ २४ ॥

धान्यबीजानि यान्याहुस्तृणादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवानि तत्र किं प्रतिभाति मे ॥ २५ ॥

अध्याक्रम्य पशूश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षांस्तथौषधीश्चापि छिन्दन्ति पुरुषा द्विज ॥ २६ ॥

जीवा हि बहवो ब्रह्मन्, वृक्षेषु च फलेषु च।
उदके बहवश्चापि तत्र किं प्रतिभाति मे ॥ २७ ॥

सर्वं व्याप्तमिदं ब्रह्मन्, प्राणिभिः प्राणिजीवनैः।
मत्स्यान्ग्रसन्ते मत्स्याश्च तत्र किं प्रतिभाति मे ॥ २८ ॥

सत्वैः सत्वानि जीवन्ति बहुधा द्विजसत्तम।
प्राणिनोऽन्योन्यभक्ष्याश्च तत्र किं प्रतिभाति मे ॥ २९ ॥

संक्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून्।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति मे ॥ ३० ॥

उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः।
अज्ञानादथ वा ज्ञानात्तत्र किं प्रतिभाति मे ॥ ३१ ॥

जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा।
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति मे ॥ ३२ ॥

अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा।
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम ॥ ३४ ॥

बहु संचिन्त्य इति वै नास्ति कश्चिदहिंसकः।
अहिंसायां तु निरता यतयो द्विजसत्तम ॥ ३४ ॥

तेषामपि हि सा ब्रह्मन्, यत्नादल्पतरा भवेत्।
आलक्ष्यता हि पुरुषाः कुले जाता महागुणाः ॥ ३५ ॥

महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च।
सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ॥ ३६ ॥

सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यतः ।
समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ॥ ३७ ॥

गुरूंश्चैव विनिन्दन्ति मूढाः पण्डितमानिनः ।
बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति मे ॥ ३८ ॥

वक्तु बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ३९ ॥

इति तृतीयोऽध्यायः ॥



## चतुर्थोऽध्यायः ॥



मार्कण्डेय उवाच ॥
धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतां वरः ॥ १ ॥

व्याध उवाच ॥
श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनम् ।
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥ २ ॥

यत्करोत्यशुभं कर्म शुभं वा यदि द्विजोत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥ ३ ॥

विषमां तु दशां प्राप्तो देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषाणि न विजानात्यपण्डितः ॥ ४ ॥

मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
द्विजो बध्नाति नो कर्म पुरुषः पापनिश्चयः ॥ ५ ॥

सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ६ ॥

यो यमिच्छेद्यथाकामं स तं कामं समाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ ७ ॥

संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥ ८ ॥

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखी जीवते सदा ॥ ९ ॥

अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठते ।
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥ १० ॥

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृध्नुभिः ।
दशमासधृता गर्भा जायन्ते कुलपांसनाः ॥ ११ ॥

अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १२ ॥

न देहजा मनुष्याणां व्याधयो द्विजसत्तम ।
कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ॥ १३ ॥

व्याधिभिश्चैव बाध्यन्ते व्याधैः क्षुद्रमृगा इव ।
ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः ।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ १४ ॥

येषामस्ति च भोक्तव्यं ग्रहणीरोगपीडिताः ।
न शक्नुवन्ति ते भोक्तुं पश्य धर्मभृतां वर ॥ १५ ॥

अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम ॥ १६ ॥

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसा सकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ १७ ॥

न म्रियेयुर्न जीर्येयुः सर्वे स्युः सार्वकालिकाः ।
नाप्रियं प्रतिपश्येयुर्वशित्वं यदि वै भवेत् ॥ १८ ॥

उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्त्तते तथा ॥ १९ ॥

बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महत्तु फलवैषम्यं दृश्यते कर्मसिद्धिषु ॥ २० ॥

न केचिदीशते ब्रह्मन्, स्वयम्ग्राह्यस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ २१ ॥

तथा श्रुतिरियं ब्रह्मन्, जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ २२ ॥

वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ २३ ॥

ब्राह्मण उवाच ॥

कथं धर्मविदां श्रेष्ठ, जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्वेन वदतां वर ॥ २४ ॥

व्याध उवाच ॥

न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतेति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धता ह्यस्य शरीरभेदः ॥ २५ ॥

अन्यो हि नाश्नाति कृतं हि कर्म
मनुष्यलोके मनुजस्य कश्चित् ।
यत्तेन किंचिद्धि कृतं हि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥ २६ ॥

सुपुण्यशीला हि भवन्ति पुण्याः
नराधमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वैः
कृतैः समुत्पद्यति भावितस्तैः ॥ २७ ॥

ब्राह्मण उवाच ॥

कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्यास्वपुण्यासु कथं गच्छति सत्तम ॥ २८ ॥

व्याध उवाच ॥

गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥ २९ ॥

यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ३० ॥

शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषी ॥ ३१ ॥

जातिमृत्युजरादुःखैः सततं समभिद्रुताः ।
संचरे पच्यमानाश्च दोषैरात्मकृतैर्नराः ॥ ३२ ॥

तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥ ३३ ॥

जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते ॥ ३४ ॥

ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ॥ ३५ ॥

अजस्रमेव दुःखार्तोऽदुःखितः सुखसंज्ञकः ।
ततो निवृत्तबन्धत्वात्कर्मणामुदयादपि ॥ ३६ ॥

परिक्रामति संसारे चक्रवद्बहुवेदनः ।
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ॥ ३७ ॥

तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्मभिर्बहुभिश्चापि लोकानश्नाति मानवः ॥ ३८ ॥

प्राप्नोति सुकृतॉंल्लोकान्यत्र गत्वा न शोचति ।
पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति ॥ ३९ ॥

तस्मात्पुण्य यतेत्कर्तुं वर्जयीत च पातकम ।
अनसूयु कृतज्ञश्च कल्याणानि च सेवते ॥ ४० ॥

सुखानि धर्ममर्थं च स्वर्गं च लभते नर ।
संस्कृतस्य च दान्तस्य नियतस्य यतात्मन ॥ ४१ ॥

प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ।
सता धर्मेण वर्तेत क्रिया शिष्टवदाचरेत् ॥ ४२ ॥

असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विज ।
सन्ति ह्यागमविज्ञाना शिष्टा शास्त्रे विचक्षणा ॥ ४३ ॥

स्वधर्मेण क्रिया लोके कुर्वाणास्ते ह्यसंकरा ।
प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ॥ ४४ ॥

तस्माद्धर्मादवाप्तेन धनेन द्विजसत्तम ।
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ॥ ४५ ॥

धर्मात्मा भवति ह्येव चित्तं चास्य प्रसीदति ।
समित्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥ ४६ ॥

शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदु ॥ ४७ ॥

धर्मस्य च फलं लब्ध्वा न तुष्यति महाद्विज ।
अतृप्यमाणो निर्वेदमापेदे ज्ञानचक्षुषा ॥ ४८ ॥

प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्यते यथाकामं न च धर्मं विमुञ्चति ॥ ४९ ॥

सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ५० ॥

एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकाश्चापि भवति मोक्षं च लभते परम् ॥ ५१ ॥

तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ५२ ॥

इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥ ५३ ॥

ब्राह्मण उवाच ॥

इन्द्रियाणि तु यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ॥ ५४ ॥

कथं च फलमाप्नोति तपः धर्मभृतां वर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं ब्रवीहि मे ॥ ५५ ॥

इति चतुर्थोऽध्यायः ॥



## पञ्चमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ १ ॥

व्याध उवाच ॥

विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते ।
तत्प्राप्य कामं भजते क्रोधं च द्विजसत्तम ॥ २ ॥

ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ३ ॥

ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ४ ॥

ततो लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ५ ॥

सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ।
उत्तरं श्रुतिसंबद्धं ब्रवीत्यश्रुतिचोदितम् ॥ ६ ॥

अधर्मस्त्रिविधस्तस्य वर्धते रागदोषजः ।
पापं चिन्तयते चैव ब्रवीति च करोति च ॥ ७ ॥

तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ।
एकशीलैश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ ८ ॥

स तेन दुःखमाप्नोति परत्र च विपद्यते ।
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु ॥ ९ ॥

यस्त्वेतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ।
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते ।
तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु जायते ॥ १० ॥

ब्राह्मण उवाच ॥

ब्रवीषि सूनृतं धर्म्यं यस्य वक्ता न विद्यते ।
दिव्यप्रभाव. सुमहानृषिरेव मतोऽसि मे ॥ ११ ॥

व्याध उवाच ॥

ब्राह्मणा वै महाभागा· पितरोऽग्रभुज· सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा ॥ १२ ॥

यत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ १३ ॥

इद विद्वन् , जगत्सर्वमजय्यं चापि शाश्वतम ।
महाभूतात्मकं ब्रह्मन, नात्त परतरं भवेत् ॥ १४ ॥

एव सर्वेपु भूतेपु भूतात्मा सम्प्रकाशते ।
दृश्यते त्वग्र्यया बुध्या सूक्ष्मया ज्ञानवेदिभि· ॥ १५ ॥

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम ।
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते ॥ १६ ॥

लक्षण तु प्रसादस्य यथा तृप्त सुखं स्वपेत ।
निवाते वा यथा दीपो दीप्येत्कुशलदीपित ॥ १७ ॥

पूर्वरात्रे परे चैव युञ्जान. सतत मन ।
लघ्वाहारो विशुद्धात्मा पश्यन्नात्मानमात्मनि ॥ १८ ॥

प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति ।
दृष्ट्वात्मान निरात्मान स तदा विप्रमुच्यते ॥ १९ ॥

सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं लोकानां तपो वै संक्रमो मतः ॥ २० ॥

नित्यं क्रोधात्तपो रक्षेद्धर्मं रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ २१ ॥

आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं सत्यं व्रतपरं व्रतम् ॥ २२ ॥

सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ॥ २३ ॥

यस्य सर्वे समारम्भा निराशीर्बन्धनाः सदा ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ २४ ॥

यतो न गुरुरप्येनं श्रावयेदुपपादयेत् ।
तं विद्याद्ब्राह्मणो योग वियोगं योगसंज्ञितम् ॥ २५ ॥

न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ २६ ॥

आकिंचन्यं सुसन्तोषो निराशीस्त्वमचापलम् ।
एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम् ॥ २७ ॥

परिग्रहं परित्यज्य भवेद्बुध्या यतव्रतः ।
अशोकं स्थानमाश्रित्य निश्चलं प्रेत्य चेह च ॥ २८ ॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ २९ ॥

गुणागुणमनासङ्गमेककार्यमनन्तरम् ।
एतत्तद्ब्रह्मणो वृत्तमाहुरेकपदं सुखम् ॥ ३० ॥

परित्यजति यो दुःखं सुखं चाप्युभयं नरः ।
ब्रह्म प्राप्नोति सोऽत्यन्तमसङ्गं स च गच्छति ॥ ३१ ॥

यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ३२ ॥

इति पञ्चमोऽध्यायः ॥



## षष्ठोऽध्यायः ॥



मार्कण्डेय उवाच ॥

एवं संकथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर ।
दृढप्रीतमना विप्रो धर्मव्याधमुवाच ह ॥ १ ॥

न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किंचिद्धर्मेष्विह हि दृश्यते ॥ २ ॥

व्याध उवाच ॥

प्रत्यक्षं मम यो धर्मस्तं च पश्य द्विजोत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ३ ॥

उत्तिष्ठ भगवन्, क्षिप्रं प्रविश्याभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि धर्मज्ञ, मातरं पितरं च मे ॥ ४ ॥

मार्कण्डेय उवाच ॥

इत्युक्तः स प्रविश्याथ ददर्श परमार्चितम् ।
सौधं हृद्यं चतुःशालमतीव च मनोहरम् ॥ ५ ॥

देवतागृहसङ्काशं दैवतैश्च सुपूजितम् ।
शयनासनसंबाधं गन्धैश्च परमैर्युतम् ॥ ६ ॥

तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ ।
कृताहारौ तु संतुष्टावुपविष्टौ वरासने ।
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसापतत् ॥ ७ ॥

वृद्धावूचतुः ॥

उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
*प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि ॥ ८ ॥*

गतिमिष्टां तपो ज्ञानं मेधां च परमां गतः ।
सत्पुत्रेण त्वया पुत्र, नित्यं काले सुपूजितौ ॥ ९ ॥

न तेऽन्यद्दैवतं किंचिद्दैवतेष्वपि वर्तते ।
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः ॥ १० ॥

पितुः पितामहा ये वै तथैव प्रपितामहाः ।
प्रीतास्ते सततं पुत्र, दमेनावां च पूजया ॥ ११ ॥

मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ।
न चान्या हि तथा बुद्धिर्दृश्यते सांप्रतं तव ॥ १२ ॥

जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतं सर्वं तद्विशिष्टं च पुत्रक ॥ १३ ॥

ततस्तं ब्राह्मण ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रमर्चयामासतुस्तदा ॥ १४ ॥

प्रतिपूज्य च तां पूजां द्विजः पप्रच्छ तावुभौ ।
सुपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ।
अनामयं च वां कच्चित्सदैवेह शरीरयोः ॥ १५ ॥

वृद्धावूचतुः ॥

कुशलं नौ गृहे विप्र, भृत्यवर्गे च सर्वशः ।
कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निह ॥ १६ ॥

मार्कण्डेय उवाच ॥

बाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः ।
धर्मव्याधो निरीक्ष्याथ ततस्तं वाक्यमब्रवीत् ॥ १७ ॥

व्याध उवाच ॥

पिता माता च भगवन्, एतौ मद्दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहं ॥ १८ ॥

त्रयस्त्रिंशद्यथा देवा. सर्वे शक्रपुरोगमाः ।
संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम ॥ १९ ॥

उपहारानाहरन्तो देवतानां यथा द्विजाः ।
कुर्वन्ति तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ २० ॥

एतौ मे परमं ब्रह्मन् पिता माता च दैवतम ।
एतौ पुष्पैः फलैरत्नैस्तोषयामि सदा द्विज ॥ २१ ॥

एतदर्थं मम प्राणा भार्या पुत्रः सुहृज्जनः ।
सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् ॥ २२ ॥

स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।
आहारं च प्रयच्छामि स्वयं च द्विजसत्तम ॥ २३ ॥

अनुकूलं तथा वच्मि विप्रियं परिवर्जये ।
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ २४ ॥

धर्ममेवं गुरुं ज्ञात्वा करोमि द्विजसत्तम ।
अतन्द्रितः सदा विप्र, शुश्रूषां वै करोम्यहम् ॥ २५ ॥

पञ्चैव गुरवो ब्रह्मन्, पुरुषस्य बुभूषतः ।
पिता माताग्निरात्मा च गुरुश्च द्विजसत्तम ॥ २६ ॥

एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ।
भवेयुरग्नयस्तस्य परिचीर्णास्तु नित्यशः ।
गार्हस्थ्ये वर्तमानस्य एष धर्मः सनातनः ॥ २७ ॥

इति षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ॥

मार्कण्डेय उवाच ॥

गुरू निवेद्य विप्राय तौ मातापितरावुभौ ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ १ ॥

प्रवृद्धचक्षुर्जातोऽस्मि संपश्य तपसो वलम् ।
यदर्थमुक्तोऽसि तया गच्छ त्वं मिथिलामिति ॥ २ ॥

पतिशुश्रूषपरया दान्तया सत्यशीलया ।
मिथिलायां वसेद्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ३ ॥

ब्राह्मण उवाच ॥

पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्य धर्मज्ञ गुणवानासि मे मतः ॥ ४ ॥

व्याध उवाच ॥

यत्तदा त्वं द्विजश्रेष्ठ, तयोक्तो मां प्रति प्रभो ।
दृष्टमेव तया सम्यगेकपत्न्या न संशयः ॥ ५ ॥

त्वदनुग्रहबुध्या तु विप्रैतद्दर्शितं मया ।
वाक्यं च श्रृणु मे तात, यत्ते वक्ष्ये हितं द्विज ॥ ६ ॥

त्वया विनिकृता माता पिता च द्विजसत्तम ।
अनिसृष्टोऽसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ॥ ७ ॥

वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ।
तव शोकेन वृद्धौ तावन्धीभूतौ तपस्विनौ ॥ ८ ॥

तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगादयम् ।
तपस्वी त्वं महात्मा च धर्मे च निरतः सदा ॥ ९ ॥

सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ।
श्रद्धस्व मम ब्रह्मन, नान्यथा कर्तुमर्हसि ।
गम्यतामद्य विप्रर्षे, श्रेयस्ते कथयाम्यहम् ॥ १० ॥

ब्राह्मण उवाच ॥

यदेतदुक्तं भवता सर्वं सत्यमसंशयम् ।
प्रीतोऽस्मि तव भद्रं ते धर्माचारगुणान्वित ॥ ११ ॥

व्याध उवाच ॥

दैवतप्रतिमो हि त्वं यस्त्वं धर्ममनुव्रतः ।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः ॥ १२ ॥

मातापित्रोः सकाशं हि गत्वा त्वं द्विजसत्तम ।
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् ॥ १३ ॥

अतः परमहं धर्मं नान्यं पश्यामि कंचन ।

ब्राह्मण उवाच ॥

इहाहमागतो दिष्ट्या दिष्ट्या मे संगतं त्वया ॥ १४ ॥

ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ।
एको नरसहस्रेषु धर्मविद्विद्यते न वा ॥ १५ ॥

प्रीतोऽस्मि तव सत्येन भद्रं ते पुरुषर्षभ ।
पतमानो हि नरके भवतास्मि समुद्धृतः ॥ १६ ॥

भवितव्यमथैवं च यद्दृष्टोऽसि मयानघ ।
राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ॥ १७ ॥

सद्भिः पुरुषशार्दूल, तथाहं भवता द्विजः ।
मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव ॥ १८ ॥

नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ।
दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तसे ॥ १९ ॥

न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् ।
येन कर्मविशेषेण प्राप्तेयं शूद्रता त्वया ॥ २० ॥

एतदिच्छामि विज्ञातुं तत्त्वेन हि महामते ।
कामया ब्रूहि मे सर्वं सत्येन प्रयतात्मना ॥ २१ ॥

व्याध उवाच ॥

अनतिक्रमणीया वै ब्राह्मणा हि द्विजोत्तम ।
शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ ॥ २२ ॥

अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मज ।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ॥ २३ ॥

आत्मदोषकृतैर्ब्रह्मन्, अवस्थामाप्तवानिमाम् ।
कश्चिद्राजा मम सखा धनुर्वेदपरायणः ॥ २४ ।

संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ।
एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ॥ २५ ॥

सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः ।
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ २६ ॥

अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम ।
ताडितश्च ऋषिस्तेन शरेणानतपर्वणा ॥ २७ ॥

भूमौ निपतितो ब्रह्मन्, उवाच प्रतिनादयन् ।
नापराध्याम्यहं किंचित्केन पापमिदं कृतम् ॥ २८ ॥

मन्वानस्तं मृगं चाहं संप्राप्तः सहसा प्रभो ।
अपश्यं तमृषिं विद्धं शरेणानतपर्वणा ॥ २९ ॥

अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ।
तमुग्रतपसं विप्रं वेष्टमानं महीतले ॥ ३० ॥

अजानता कृतमिदं मयेत्यहमथाब्रुवम् ।
क्षन्तुमर्हसि मे सर्वमिति चोक्तो मया मुनिः ॥ ३१ ॥

ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः ।
व्याधस्त्वं भविता क्रूर, शूद्रयोनाविति द्विज ॥ ३२ ॥

इति सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ॥

व्याध उवाच ॥

एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम ।
अभिप्रासादयमृषिं गिरा त्राहीति मां तदा ॥ १ ॥

अजानता मया कार्यमिदमद्य कृतं मुने ।
क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति ॥ २ ॥

ऋषिरुवाच ॥

नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यात्त्वहं किंचित्कर्तानुग्रहमद्य ते ॥ ३ ॥

शूद्रयोनौ वर्तमानो धर्मज्ञो हि भविष्यसि ।
मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ॥ ४ ॥

तयोः शुश्रूपया सिद्धिं महतीं समवाप्स्यसि ।
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि ॥ ५ ॥

शापक्षये तु निर्वृत्ते भवितासि पुनर्द्विजः ।
एवं शप्तः पुरा तेन ऋपिणास्म्युग्रतेजसा ॥ ६ ॥

प्रसादश्च कृतस्तेन मयैव वदतां वर ।
शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम ॥ ७ ॥

आश्रमं च मया नीतो न च प्राणैर्व्ययुज्यत ।
एतत्ते सर्वमाख्यातं यथा मम पुराभवत् ।
अभितश्चापि गन्तव्यो मया स्वर्गो द्विजोत्तम ॥ ८ ॥

ब्राह्मण उवाच ॥

एवमेतानि पुरुषा दुःखानि च सुखानि च ।
आप्नुवन्ति महाबुद्धे, नोत्कण्ठां कर्तुमर्हसि ॥ ९ ॥

दुष्करं हि कृतं कर्म जानता जातिमात्मनः ।
लोकवृत्तान्ततत्वज्ञ, नित्यं धर्मपरायण ॥ १० ॥

कर्मदोपश्च वै विद्वन्, आत्मजातिकृतेन वै ।
कंचित्कालमुष्यतां वै ततोऽसि भविता द्विजः ॥ ११ ॥

सांप्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः ।
ब्राह्मणः पतनीयेपु वर्त्तमानो विकर्मसु ॥ १२ ॥

दाम्भिको दुष्कृत. प्राज्ञः शूद्रेण सदृशो भवेत् ।
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ॥ १३ ॥

तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ।
कर्मदोषेण विषमां गतिमाप्नोति दारुणां ॥ १४ ॥

क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम ।
कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः ।
लोकवृत्तानुवृत्तज्ञा नित्यं धर्मपरायणाः ॥ १५ ॥

व्याध उवाच ॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १६ ॥

अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते चाल्पबुद्धयः ॥ १७ ॥

गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ १८ ॥

अनिष्टं चान्वितं पश्यंस्तथा क्षिप्रं विरज्यते ।
ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमान् ॥ १९ ॥

शोचतो न भवेत्किंचित्केवलं परितप्यते ।
परित्यजन्ति ये दुःखं सुखं वाप्युभयं नराः ॥ २० ॥

त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ।
असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ॥ २१ ॥

असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् ॥ २२ ॥

न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ २३ ॥

यं विषादोऽभिभवति विक्रमे समुपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते ॥ २४ ॥

अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किंचित्प्राप्नोति शोभनम् ॥ २५ ॥

अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव मुक्तश्चाव्यसनी भवेत् ॥ २६ ॥

भूतेष्वभावं संचिन्त्य ये तु बुद्धेः परं गताः ।
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् ॥ २७ ॥

न शोचामि च वै विद्वन्, कालाकाङ्क्षी स्थितोऽस्म्यहम् ।
एतैर्निदर्शनैर्ब्रह्मन्, नावसीदामि सत्तम ॥ २८ ॥

ब्राह्मण उवाच ॥

कृतप्रज्ञोऽसि मेधावी बुद्धिर्हि विपुला तव ।
नाहं भवन्तं शोचामि ज्ञानतृप्तोऽसि धर्मवित् ॥ २९ ॥

आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वा परिरक्षतु ।
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतां वर ॥ ३० ॥

व्याध उवाच ॥

बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ।
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ॥ ३१ ॥

स तु गत्वा द्विजः सर्वां शुश्रूषां कृतवांस्तदा ।
मातापितृभ्यां वृद्धाभ्यां यथान्यायं सुसंहितः ॥ ३२ ॥

एतत्ते सर्वमाख्यातं निखिलेन युधिष्ठिर ।
पृष्टवानसि यं तात, धर्मं धर्मभृतां वर ॥ ३३ ॥

पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम ।
मातापित्रोश्च शुश्रूषा धर्मव्याधेन कीर्तिता ॥ ३४ ॥

युधिष्ठिर उवाच ॥

अत्यद्भुतमिदं ब्रह्मन्, धर्माख्यानमनुत्तमम् ।
सर्वधर्मविदां श्रेष्ठ, कथितं मुनिसत्तम ॥ ३५ ॥

सुखश्राव्यतया विद्वन्, मुहूर्त इव मे मतः ।
न हि तृप्तोऽस्मि भगवन्, शृण्वानो धर्ममुत्तमम् ॥ ३६ ॥

इति श्रीमहाभारते आरण्यके पर्वणि मार्कण्डेयसमास्यापर्वणि
ब्राह्मणव्याधसंवादे

२०६—२१६ अध्यायाः ।

## ॥ शीलवर्णनम् ॥

युधिष्ठिर उवाच ॥

इमे जना नरश्रेष्ठ, प्रशसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान ॥ १ ॥

यदि तच्छक्यमस्माभिर्ज्ञातु धर्मभृतां वर ।
श्रोतुमिच्छामि तत्सर्व यथैतदुपलभ्यते ॥ २ ॥

कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किं लक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥ ३ ॥

भीष्म उवाच ॥

पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागताम् ॥ ४ ॥

इन्द्रप्रस्थे महाराज, तव सभ्रातृकस्य ह ।
सभायां चाह वचनं तत्सर्वं शृणु भारत ॥ ५ ॥

भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम ।
दुर्योधनस्तदासीनः सर्वं पित्रे न्यवेदयन् ॥ ६ ॥

श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिद वचः ॥ ७ ॥

धृतराष्ट्र उवाच ॥

किमर्थं तप्यसे पुत्र, श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वाहमनुनेष्यामि यदि सम्यग्भविष्यति ॥ ८ ॥

त्वया च महदैश्वर्यं प्राप्तं परपुरञ्जय ।
किंकरा भ्रातरः सर्वे मित्रसंबन्धिनः सदा ॥ ९ ॥

आच्छादयसि प्रावारानश्नासि पिशितोदनम् ।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ १० ॥

दुर्योधन उवाच ॥

दश तानि सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ११ ॥

दृष्ट्वा च तां सभां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरिकल्माषान्वस्त्राणि विविधानि च ॥ १२ ॥

दृष्ट्वा तां पाण्डवेयानामृद्धिं वैश्रवणीं शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि भारत ॥ १३ ॥

धृतराष्ट्र उवाच ॥

यदिच्छसि श्रियं तात यादृशी सा युधिष्ठिरे ।
विशिष्टां वा नरव्याघ्र, शीलवान्भव पुत्रक ॥ १४ ॥

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यं वै लोके शीलवतां भवेत् ॥ १५ ॥

एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिरे ॥ १६ ॥

# ॥ शीलवर्णनम् ॥

युधिष्ठिर उवाच ॥

इमे जना नरश्रेष्ठ, प्रशसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे सशयो महान ॥ १ ॥

यदि तच्छक्यमस्माभिर्ज्ञातु धर्मभृता वर ।
श्रोतुमिच्छामि तत्सर्व यथैतदुपलभ्यते ॥ २ ॥

कथ तत्प्राप्यते शील श्रोतुमिच्छामि भारत ।
कि लक्षण च तत्प्रोक्त ब्रूहि मे वदता वर ॥ ३ ॥

भीष्म उवाच ॥

पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यात तप्यमानेन श्रिय दृष्ट्वा तथागताम् ॥ ४ ॥

इन्द्रप्रस्थे महाराज, तव सभ्रातृकस्य ह ।
सभाया चाह वचन तत्सर्व शृणु भारत ॥ ५ ॥

भवतस्ता सभा दृष्ट्वा समृद्धि चाप्यनुत्तमाम् ।
दुर्योधनस्तदासीन सर्व पित्रे न्यवेदयत् ॥ ६ ॥

श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहित दुर्योधनमिद वच ॥ ७ ॥

तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः ॥ २६ ॥

भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् ॥ २७ ॥

स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
गत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २८ ॥

प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ ।
त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥ २९ ॥

ब्राह्मणस्त्वब्रवीद्राजन्, यस्मिन्काले क्षणो भवेत् ।
तदोपदेष्टुमिच्छामि यदाचर्यमनुत्तमम् ॥ ३० ॥

ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।
तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ३१ ॥

ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यदस्य मनसेप्सितम् ॥ ३२ ॥

पृष्टश्च तेन बहुशः प्राप्तं कथमनुत्तमम् ।
त्रैलोक्यराज्यं धर्मज्ञ, कारणं तद्ब्रवीहि मे ।
प्रह्लादोऽपि महाराज, ब्राह्मणं वाक्यमब्रवीत् ॥ ३३ ॥

प्रह्लाद उवाच ॥

नासूयामि द्विजान्विप्र राजास्मीति कदाचन ।
काव्यानि वदतां तेषां संयच्छामि वहामि च ॥ ३४ ॥

ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
ते मां काव्यपथे युक्तं शुश्रूषुमनसूयकम् ॥ ३५ ॥

धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिचन्ति शास्तारः क्षौद्रं मध्विव माक्षिकाः ॥ ३६ ॥

सोऽहं वागग्रविशानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३७ ॥

एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे काव्यमेतच्छ्रुत्वा प्रवर्तते ॥ ३८ ॥

स तावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३९ ॥

यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ ४० ॥

कृतमित्येव दैत्येन्द्रमुवाच च स वै द्विजः ।
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥ ४१ ॥

ब्राह्मण उवाच ॥

यदि राजन्, प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४२ ॥

ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पतेजायमित्युत ॥ ४३ ॥

एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ४४ ॥

दत्ते वरे गते विप्रे चिन्तासीन्महती तदा ।
प्रह्लादस्य महाराज, निश्चयं न च जग्मिवान् ॥ ४५ ॥

तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति ।
तेजो विग्रहवत्तात, शरीरमजहात्तदा ॥ ४६ ॥

तमपृच्छन्महाकायं प्रह्लादः को भवानिति ।
प्रत्याह तं तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ४७ ॥

तस्मिन्द्विजोत्तमे राजन्, वत्स्याम्यहमनिन्दिते ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ॥ ४८ ॥

इत्युक्त्वान्तर्हितं तद्वै शक्रं चान्वाविशत्प्रभो ।
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ॥ ४९ ॥

शरीरान्निःसृतस्तस्य को भवानिति चाब्रवीत् ।
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ॥ ५० ॥

तत्र यास्यामि दैत्येन्द्र, यतः शीलं ततो ह्यहम् ।
ततोऽपरो महाराज, प्रज्वलन्निव तेजसा ॥ ५१ ॥

शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ।
को भवानिति पृष्टश्च तमाह स महाद्युतिः ॥ ५२ ॥

सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ।
तस्मिन्ननुगते सत्ये महान्वै पुरुषोऽपरः ॥ ५३ ॥

निश्चक्राम ततस्तस्मात्पृष्टश्चाह महाबलः ।
वृत्तं प्रह्लाद, मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ५४ ॥

तस्मिन्गते महाशब्दः शरीरात्तस्य निर्ययौ ।
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥ ५५ ॥

इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ।
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ॥ ५६ ॥

तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येवमब्रवीत् ।
उषितास्मि स्वयं वीर त्वयि सत्यपराक्रम ॥ ५७ ॥

त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहम् ।
ततो भय प्रादुरासीन् प्रह्लादस्य महात्मनः ॥ ५८ ॥

अपृच्छत्स ततो भूयः क यासि कमलालये ।
त्व हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ५९ ॥

श्रीरुवाच ।

स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तत्तेनापहृतं प्रभो ॥ ६० ॥

शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिता ।
तद्विज्ञाय सुरेन्द्रेण तव शील हृतं प्रभो ॥ ६१ ॥

धर्म. सत्य तथा वृत्तं बलं चैव तथाप्यहम् ।
शीलमूला महाप्राज्ञ, सदा नास्त्यत्र संशय ॥ ६२ ॥

भीष्म उवाच ।

एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिरे ।
दुर्योधनस्तु पितर भूय एवाब्रवीद्वच ॥ ६३ ॥

शीलस्य तत्त्वमिच्छामि वेत्तु कौरवनन्दन ।
प्राप्यते च यथा शील तथोपाय वदस्व मे ॥ ६४ ॥

धृतराष्ट्र उवाच ।

सोपाय पूर्वमुद्दिष्ट प्रह्लादेन महात्मना ।
सक्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर ॥ ६५ ॥

अद्रोह सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दान च शीलमेतत्प्रशस्यते ॥ ६६ ॥

यदन्येषा हित न स्यादात्मन कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथचन ॥ ६७ ॥

तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत ससदि ।
शील समासेनैतत्ते कथित कुरुसत्तम ॥ ६८ ॥

यद्यप्यशीला नृपते, प्राप्नुवन्ति श्रिय क्वचित् ।
न भुञ्जते चिर तात, समूलाश्च न सन्ति ते ॥ ६९ ॥

धृतराष्ट्र उवाच ।

एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक ।
यदीच्छसि श्रिय तात सुविशिष्टा युधिष्ठिरात् ॥ ७० ॥

भीष्म उवाच ।

एतत्कथितवान्पुत्रे धृतराष्ट्रो नराधिप ।
एतत्कुरुष्व कौन्तेय, तत प्राप्स्यसि तत्फलम् ॥ ७१ ॥

इति श्रीमहाभारते शान्तिपर्वणि राजधर्मानुशासनपर्वणि शाल्ववर्णन नाम
चतुर्विंशत्यधिकशततमोऽध्यायः ॥

# ॥ अजगरोपाख्यानम् ॥

---

जनमेजय उवाच ॥

कथं नागायुतप्राणो भीमो भीमपराक्रमः ।
भयमाहारयत्तीव्रं तस्मादजगरान्मुने ॥ १ ॥

पौलस्त्यं धनदं युद्धे य आह्वयति दर्पितः ।
नलिन्यां कदनं कृत्वा निहन्ता यक्षरक्षसां ॥ २ ॥

तं शंससि भयाविष्टमापन्नमरिमर्दनम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ३ ॥

वैशम्पायन उवाच ॥

बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम् ।
प्राप्तानामाश्रमाद्राजन्, राजर्षेर्वृषपर्वणः ॥ ४ ॥

यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ५ ॥

स ददर्श शुभान्देशान्गिरेर्हिमवतस्तदा ।
देवर्षिसिद्धचरितानप्सरोगणसेवितान् ॥ ६ ॥

चकोरैश्चक्रवाकैश्च पक्षिभिर्जीवजीवकैः ।
कोकिलैर्भृङ्गराजैश्च तत्र तत्र निनादितान् ॥ ७ ॥

नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलै ।
उपेतान्बहुलच्छायैर्मनोनयननन्दनै. ॥ ८ ॥

स संपश्यन्गिरिनदीर्वैदूर्यमणिसन्निभै ।
सलिलैर्हिमसङ्काशैर्हंसकारण्डवायुतै· ॥ ९ ॥

वनानि देवदारूणां मेघानामिव वागुराः ।
हरिचन्दनमिश्राणि तुङ्गकालेयकान्यपि ॥ १० ॥

मृगया परिधावन्स, समेपु मरुधन्वसु ।
विध्यन्मृगाञ्शरै शुद्धैश्चचार स महाबल ॥ ११ ॥

मृगाणां सवराहाणा महिषाणां महाभुज. ।
विनिघ्नस्तत्र तत्रैव भीमो भीमपराक्रम ॥ १२ ॥

स मातङ्गशतप्राणो मनुष्यशतवारण ।
सिंहशार्दूलविक्रान्तो वने तस्मिन्महाबल. ॥ १३ ॥

वृक्षानुत्पाटयामास तरसा वै बभञ्ज च ।
पृथिव्याश्च प्रदेशान्वै नादयस्तु वनानि च ॥ १४ ॥

पर्वताग्राणि वै मृद्नन्नादयानश्च विज्वरः ।
प्रक्षिपन्पादपाश्चापि नादेनापूरयन्महीम ॥ १५ ॥

वेगेन न्यपतद्भीमो निर्भयश्च पुन पुन ।
आस्फोटयन्क्ष्वेडयश्च तलतालांश्च वादयन ॥ १६ ॥

चिरसवृद्धदर्पस्तु भीमसेनो वने तदा ।
गजेन्द्राश्च महासत्वा मृगेन्द्राश्च महाबला· ॥ १७ ॥

भीमसेनस्य नादेन व्यमुञ्चन्त गुहा भयात् ।
कश्चिदप्यधावंस्तिष्ठंश्च कश्चिच्चोपविशंस्तथा ॥ १८ ॥

मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः ।
स तत्र मनुजव्याघ्रो वने वनचरोपमः ॥ १९ ॥

पद्भ्यामभिसमापेदे भीमसेनो महाबलः ।
स प्रविष्टो महारण्ये नादान्नदति चाद्भुतान् ॥ २० ॥

त्रासयन्सर्वभूतानि महासत्वपराक्रमः ।
ततो भीमस्य शब्देन भीताः सर्पा गुहाशयाः ॥ २१ ॥

अतिक्रान्तास्तु वेगेन जगामानुसृतः शनैः ।
ततोऽमरवरप्रख्यो भीमसेनो महाबलः ॥ २२ ॥

स ददर्श महाकायं भुजङ्गं लोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ २३ ॥

पर्वताभोगवर्ष्माणमतिकायं महाबलम् ।
चित्राङ्गमङ्गजैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ २४ ॥

गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ॥ २५ ॥

त्रासनं सर्वभूतानां कालान्तकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितम् ॥ २६ ॥

स भीमं सहसाभ्येत्य पृदाकुः कुपितो भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ २७ ॥

तेन सस्पृष्टगात्रस्य भीमसेनस्य वै तदा ।
सञ्ज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ २८ ॥

दश नागसहस्राणि धारयन्ति हि यद्बलम् ।
तद्बल भीमसेनस्य भुजयोरसम परै ॥ २९ ॥

स तेजस्वी तथा तेन भुजगेन वशीकृत ।
विस्फुरच्छनकैर्भीमो न शशाक विचेष्टितुम् ॥ ३० ॥

नागायुतसमप्राण सिंहस्कन्धो महाभुज ।
गृहीतो व्यजहात्सत्व वरदानविमोहित ॥ ३१ ॥

स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे ।
न चैनमशकद्वीर कथञ्चित्प्रतिबाधितुम् ॥ ३२ ॥

इति प्रथमोऽध्याय ॥



## द्वितीयोऽध्यायः ॥



वैशम्पायन उवाच ॥

स भीमसेनस्तेजस्वी तथा सर्पवश गत ।
चिन्तयामास सर्पस्य वीर्यमत्यद्भुत महत् ॥ १ ॥

उवाच च महासर्प कामया ब्रूहि पन्नग ।
कस्त्व भो भुजगश्रेष्ठ, किं मया च करिष्यसि ॥ २ ॥

पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
नागायुतसमप्राणस्त्वया नीतः कथं वशम् ॥ ३ ॥

सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा ।
समागताश्च शतशो निहताश्च मया युधि ॥ ४ ॥

राक्षसाश्च पिशाचाश्च पन्नगाश्च महाबलाः ।
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ५ ॥

किंनु विद्याबलं किंनु वरदानमथो तव ।
उद्योगमपि कुर्वाणो वशगोऽस्मि कृतस्त्वया ॥ ६ ॥

असत्यो विक्रमो नृणामिति मे धीयते मतिः ।
यथेदं मे त्वया नाग बलं प्रतिहतं महत् ॥ ७ ॥

वैशम्पायन उवाच ॥

इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम् ।
भोगेन महतागृह्य समन्तात्पर्यवेष्टयत् ॥ ८ ॥

निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ९ ॥

दिष्ट्या त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज ।
दिष्ट्या कालस्य महतः प्रिया प्राणा हि देहिनाम् ॥ १० ॥

यथा त्विदं मया प्राप्तं सर्परूपमरिन्दम ।
तथावश्यं मया ख्याप्यं तवाद्य शृणु सत्तम ॥ ११ ॥

इमामवस्थां सम्प्राप्तो ह्यहं कोपान्महर्षिणाम् ।
शापस्यान्तं परिप्रेप्सुः सर्वं तत्कथयामि ते ॥ १२ ॥

नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषामायोर्वंशधरः सुतः ॥ १३ ॥

सोऽहं शापादगस्त्यस्य ब्राह्मणानवमत्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ १४ ॥

त्वां चेदवध्यं दायादमतीव प्रियदर्शनम् ।
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम ॥ १५ ॥

न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ।
गजो वा महिषो वापि षष्ठे काले नरोत्तम ॥ १६ ॥

नासि केवलमर्पेण तिर्यग्योनिषु वर्तता ।
गृहीत. कौरवश्रेष्ठ, वरदानमिदं मम ॥ १७ ॥

पतता हि विमानाग्रान्मया शक्रासनाद्द्रुतम् ।
कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तम. ॥ १८ ॥

स मामुवाच तेजस्वी कृपयाभिपरिप्लुतः ।
मोक्षस्ते भविता राजन, कस्माच्चित्कालपर्ययात् ॥ १९

ततोऽस्मि पतितो भूमौ न च मामजहात्स्मृतिः ।
स्मार्तमस्ति पुराणं मे यथैवाधिगतं तथा ॥ २० ॥

यस्तु ते व्याहृतान्प्रश्नान्प्रतिब्रूयाद्विभागवित् ।
स त्वां मोक्षयिता शापादिति मामब्रवीदृषिः ॥ २१ ॥

गृहीतस्य त्वया राजन, प्राणिनोऽपि बलीयसः ।
सत्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥ २२ ॥

इति चाप्यहमश्रौषं वचस्तेषां दयावताम् ।
मयि संजातहार्दानामथ तेऽन्तर्हिता द्विजाः ॥ २३ ॥

सोऽहं परमदुष्कर्मा वसामि निरयेऽशुचौ ।
सर्पयोनिमिमां प्राप्य कालकाङ्क्षी महाद्युते ॥ २४ ॥

तमुवाच महाबाहुर्भीमसेनो भुजङ्गमम् ।
न च कुप्ये महासर्प, न चात्मानं विगर्हये ॥ २५ ॥

यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः ।
आगमे यदि वापाये न तत्र ग्लपयेन्मनः ॥ २६ ॥

दैवं पुरुषकारेण को वञ्चयितुमर्हति ।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥ २७ ॥

पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् ।
इमामवस्थां संप्राप्तमनिमित्तमिहाद्य माम् ॥ २८ ॥

किं तु नाद्यानुशोचामि तथात्मानं विनाशितम् ।
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥ २९ ॥

हिमवांश्च सुदुर्गोऽयं यक्षराक्षससंकुलः ।
मां समुद्वीक्षमाणास्ते प्रपतिष्यन्ति विह्वलाः ॥ ३० ॥

विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः ।
धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ॥ ३१ ॥

अथवा नार्जुनो धीमान्विषादमुपयास्यति ।
सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ३२ ॥

समर्थ स महाबाहुरेकोऽपि सुमहाबल ।
देवराजमपि स्थानात्प्रच्यावयितुमञ्जसा ॥ ३३ ॥

किं पुनर्धृतराष्ट्रस्य पुत्र दुर्धूतदेविनम् ।
विद्विष्ट सर्वलोकस्य दम्भमोहपरायणम ॥ ३४ ॥

मातर चैव शोचामि कृपणा पुत्रगृद्धिनीम् ।
यास्माक नित्यमाशास्ते महत्त्वमधिक परै ॥ ३५ ॥

तस्या कथ त्वनाथाया मद्विनाशाद्भुजगम ।
अफलास्ते भविष्यन्ति मयि सर्वे मनोरथा ॥ ३६ ॥

नकुल सहदेवश्च यमौ च गुरुवर्तिनौ ।
मद्बाहुबलसगुप्तौ नित्य पुरुषमानितौ ॥ ३७ ॥

भविष्यतो निरुत्साहौ भ्रष्टवीर्यपराक्रमौ ।
मद्विनाशात्परिद्यूनाविति मे वर्तते मति ॥ ३८ ॥

एवविध बहु तदा विललाप वृकोदर ।
भुजङ्गभोगसरुद्धो नाशकच्च विचेष्टितुम ॥ ३९ ॥

युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतन ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिन्तयन ॥ ४० ॥

दारुण ह्यशिव नाद शिवा दक्षिणत स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ॥ ४१ ॥

एकपक्षाक्षिचरणा वर्तिका घोरदर्शना ।
रक्त वमन्ती ददृशे प्रत्यादित्यमभासुरा ॥ ४२ ॥

प्रववौ चानिलो रूक्षश्चण्डः शर्करकर्षण. ।
अपसव्यानि सर्वाणि मृगपक्षिरुतानि च ॥ ४३ ॥

पृष्ठतो वायस' कृष्णो याहि याहीति शसति ।
मुहुर्मुहुः स्फुरति च दक्षिणोऽस्य भुजस्तथा ॥ ४४ ॥

हृदयं चरणश्चापि वामोऽस्य परिनृत्यति ।
सव्यस्याक्ष्णो विकारश्चाप्यनिष्ट समपद्यत ॥ ४५ ॥

धर्मराजोऽपि मेधावी मन्यमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क भीम इति भारत ॥ ४६ ॥

शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ।
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृप ॥ ४७ ॥

द्रौपद्या रक्षणं कार्यमित्युवाच धनंजयम् ।
नकुलं सहदेवं च व्यादिदेश द्विजान्प्रति ॥ ४८ ॥

स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभु ।
मृगयामास कौन्तेयो भीमसेन महावने ॥ ४९ ॥

स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ ५० ॥

ततो मृगसहस्राणि मृगेन्द्राणां शतानि च ।
पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृप ॥ ५१ ॥

धावतस्तस्य वीरस्य मृगार्थं वातरंहस ।
ऊरुवातविनिर्भग्ना द्रुमा व्यावर्तिता पथि ॥ ५२ ॥

स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
रूक्षमारुतभूयिष्ठे निष्पत्रद्रुमसंकुले ॥ ५३ ॥

इरिणे निर्जले देशे कण्टकिद्रुमसङ्कुले ।
अश्मस्थाणुक्षुपाकीर्णे सुदुर्गे विषमोत्कटे ।
गृहीत भुजगेन्द्रेण निश्चेष्टमनुजं तदा ॥ ५४ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

वैशम्पायन उवाच ॥

युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम् ।
दयितं भ्रातरं धीमानिदं वचनमब्रवीत् ॥ १ ॥

कुन्तीमातः, कथमिमामापदं त्वमवाप्नवान ।
कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तम. ॥ २ ॥

स धर्मराजमालक्ष्य भ्राता भ्रातरमग्रजम् ।
कथयामास तत्सर्वं ग्रहणादिविचेष्टितम् ॥ ३ ॥

भीम उवाच ॥

अयमार्य, महासत्त्वो भक्षार्थं मां गृहीतवान ।
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ॥ ४ ॥

युधिष्ठिर उवाच ॥

मुच्यतामयमायुष्मन्, भ्राता मेऽमितविक्रम. ।
वयमाहारमन्यं ते दास्याम क्षुन्निवारणम ॥ ५ ॥

सर्प उवाच ॥

आहारो राजपुत्रोऽय मया प्राप्तो मुखागत ।
गम्यता नेह स्थातव्यं श्वो भवानपि मे भवेत् ॥ ६ ॥

व्रतमेतन्महाबाहो, विषय मम यो व्रजेत् ।
स मे भक्षो भवेत्तात त्व चापि विषये मम ॥ ७ ॥

चिरेणाद्य मयाहार प्राप्तोऽयमनुजस्तव ।
नाहमेन विमोक्ष्यामि न चान्यमपि काङ्क्षये ॥ ८ ॥

युधिष्ठिर उवाच ॥

देवो वा यदि वा दैत्य उरगो वा भवान्यदि ।
सत्य सर्प, वचो ब्रूहि पृच्छति त्वा युधिष्ठिर· ॥ ९ ॥

किमर्थं च त्वया ग्रस्तो भीमसेनो भुजङ्गम ।
किमाहृत्य विदित्वा वा प्रीति स्यात्ते भुजङ्गम ॥ १० ॥
किमाहार प्रयच्छामि कथं मुञ्चेद्भवानिमम ।

सर्प उवाच ॥

नहुषो नाम राजाहमास पूर्वस्तवानघ ।
प्रथित. पञ्चम सोमादायो. पुत्रो नराधिप ॥ ११ ॥

क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च ।
त्रैलोक्यैश्वर्यमव्यग्र प्राप्तोऽह विक्रमेण च ॥ १२ ॥

तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा ।
सहस्रं हि द्विजातीनामुवाह शिबिकां मम ॥ १३ ॥

ऐश्वर्यमदमत्तोऽहमवमत्य ततो द्विजान् ।
इमामगस्त्येन दशामानीतः पृथिवीपते ॥ १४ ॥

न तु मामजहात्प्रज्ञा यावदद्येति पाण्डव ।
तस्यैवानुग्रहाद्राजन, अगस्त्यस्य महात्मनः ॥ १५ ॥

षष्ठे काले मयाहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यदपि कामये ॥ १६ ॥

प्रश्नानुचारितानद्य व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ १७ ॥

युधिष्ठिर उवाच ॥

ब्रूहि सर्प, यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजङ्गम ॥ १८ ॥

वेद्यं च ब्राह्मणेनेह तद्भवान्वेत्ति केवलम् ।
सर्पराज, ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ १९ ॥

सर्प उवाच ॥

ब्राह्मणः को भवेद्राजन, वेद्यं किं च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ २० ॥

युधिष्ठिर उवाच ॥

सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र, स ब्राह्मण इति स्मृतः ॥ २१ ॥

वेद्य सर्प, पर ब्रह्म निर्दु खमसुख च यत् ।
यत्र गत्वा न शोचन्ति भवत किं विवक्षितम ॥ २२ ॥

सर्प उवाच ॥
चातुर्वर्ण्य प्रमाण च सत्य च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्य च दानमक्रोध एव च ॥ २३ ॥

आनृशस्यमहिंसा च घृणा चैव युधिष्ठिर ।
वेद्य यच्चात्र निर्दु खमसुख च नराधिप ॥ २४ ॥
ताभ्या हीन पद चान्यन्नतदस्तीति लक्षये ।

युधिष्ठिर उवाच ॥
शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मण ॥ २५ ॥

यत्रैतल्लक्ष्यते सर्प वृत्त स ब्राह्मण स्मृत ।
यत्रैतन्न भवेत्सर्प, तं शूद्रमिति निर्दिशेत ॥ २६ ॥

यत्पुनर्भवता प्रोक्त न वेद्य विद्यतीति च ।
ताभ्या हीनमतोऽन्यत्र पद नास्तीति चेदपि ॥ २७ ॥
एवमेतन्मत सर्प, ताभ्या हीन न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्ण न शीतता ॥ २८ ॥
एव वै सुखदु खाभ्या हीन नास्ति पद क्वचित् ।
एषा मम मति सर्प, यथा वा मन्यते भवान ॥ २९ ॥

सर्प उवाच ॥
यदि ते वृत्ततो राजन, ब्राह्मण प्रसमीक्षित ।
वृथा जातिस्तदायुष्मन, कृतिर्यावन्न विद्यते ॥ ३० ॥

युधिष्ठिर उवाच ॥

जातिरत्र महासर्प, मनुष्यत्वे महामते ।
सङ्करात्सर्ववर्णानां दुष्परीक्ष्येऽति मे मतिः ॥ ३१ ॥

सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ३२ ॥

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ३३ ॥

तावच्छूद्रसमो ह्येष यावद्वेदेन जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ॥ ३४ ॥

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
सङ्करस्त्वत्र नागेन्द्र, बलवान्प्रसमीक्षितः ॥ ३५ ॥

यत्रेदानीं महासर्प, संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ३६ ॥

सर्प उवाच ॥

श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ३७ ॥

इति तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ॥

---

युधिष्ठिर उवाच ॥

भवानेतादृशो लोके वेदवेदाङ्गपारग ।
ब्रूहि किं कुर्वत कर्म भवेद्गतिरनुत्तमा ॥ १ ॥

सर्प उवाच ॥

पात्रे दत्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरत स्वर्गं गच्छेदिति मतिर्मम ॥ २ ॥

युधिष्ठिर उवाच ॥

दानाद्वा सर्प, सत्याद्वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ३ ॥

सर्प उवाच ॥

दानं च सत्यं तत्त्व वा अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ४ ॥

कस्माच्चिद्दानयोगाद्धि सत्यमेव विशिष्यते ।
एवमेव महेष्वास, प्रियवाक्यान्महीपते ॥ ५ ॥

अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ।
एवमेव भवेद्राजन, कार्यापेक्षमनन्तरम् ॥ ६ ॥

युधिष्ठिर उवाच ॥

अहो बुद्धिमता श्रेष्ठ, शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मात्समनुपृच्छसि ॥ ७ ॥

सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ ८ ॥

सर्प उवाच ॥

सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो मुह्यतीति मतिर्मम ॥ ९ ॥

सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धस्त्वां नु संबोधयाम्यहम् ॥ १० ॥

कृतं कार्यं महाराज, त्वया मम परन्तप ।
क्षीणः शापः सुकृच्छ्रो मे त्वया संभाष्य साधुना ॥ ११ ॥

अहं हि दिवि दिव्येन विमानेन चरन्पुरा ।
अभिमानेन मत्तः सन्कञ्चिन्नान्यमचिन्तयम् ॥ १२ ॥

ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसपन्नगाः ।
करान्मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ १३ ॥

चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥ १४ ॥

ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स मामपनयो राजन्, भ्रंशयामास वै श्रियः ॥ १५ ॥

तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो मया मुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ १६ ॥

ततस्तस्माद्विमानाग्र्यात्प्रच्युतश्च्युतलक्षणः ।
प्रपतन्बुबुधे त्मानं व्यालीभूतमधोमुखम् ॥ १७ ॥

अयाचं तमहं विप्र शापस्यान्तो भवेदिति ।
प्रमादात्संप्रमूढस्य भगवन्, क्षन्तुमर्हसि ॥ १८ ॥

ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ १९ ॥

अभिमानस्य घोरस्य पापस्य च नराधिप ।
फले क्षीणे महाराज, फलं पुण्यमवाप्स्यसि ॥ २० ॥

ततो मे विस्मयो जातस्तदृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाहमचूचुदम् ॥ २१ ॥

सत्यं दमस्तपो दानमहिंसा धर्मनित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ २२ ॥

अरिष्ट एष ते भ्राता भीमसेनो महाबलः ।
स्वस्ति तेऽस्तु महाराज, गमिष्यामि दिवं पुनः ॥ २३ ॥

वैशम्पायन उवाच ॥

इत्युक्त्वाजगरं देहं मुक्त्वा स नहुषो नृपः ।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ २४ ॥

युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥ २५ ॥

ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् ।
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ॥ २६ ॥

तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ये त्रयः ।
आसन्सुव्रीडिता राजन्, द्रौपदी च यशस्विनी ॥ २७ ॥

ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
नैवमित्यब्रुवन्भीमं गर्हयन्तोऽस्य साहसम् ॥ २८ ॥

पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयांचक्रुर्विजह्रुश्च मुदा युताः ॥ २९ ॥

इति चतुर्थोऽध्यायः ॥

इति श्रीमहाभारते वनपर्वणि अजगरपर्वणि भीममोचने
१७८—१८१ अध्यायाः ।

# ॥ चक्षुस्तीर्थवर्णनम् ॥



चक्षुस्तीर्थमिति ख्यातं रूपसौभाग्यदायकम् ।
यत्र योगेश्वरो देवो गौतम्या दक्षिणे तटे ॥ १ ॥

पुरं भौवनमाख्यातं गिरिमूर्ध्न्यभिधीयते ।
यत्रासौ भौवनो राजा क्षत्रधर्मपरायणः ॥ २ ॥

तस्मिन्पुरवरे कश्चिद्ब्राह्मणो वृद्धकौशिकः ।
तत्पुत्रो गौतम इति ख्यातो वेदविदुत्तमः ॥ ३ ॥

तस्य मातुर्मनोदोषाद्विपरीतोऽभवद्द्विजः ।
सखा तस्य वणिक्कश्चिन्मणिकुण्डल उच्यते ॥ ४ ॥

तेन सख्यं द्विजस्यासीद्विषमं द्विजवैश्ययोः ।
श्रीमद्दरिद्रयोर्नित्यं परस्परहितैषिणोः ॥ ५ ॥

कदाचिद्गौतमो वैश्यं वित्तेशं मणिकुण्डलम् ।
प्राहेदं वचनं प्रीत्या रहः स्थित्वा पुनः पुनः ॥ ६ ॥

गौतम उवाच ॥

गच्छामो धनमादातुं पर्वतानुदधीनपि ।
यौवनं तद्वृथा ज्ञेयं विना सौख्यानुकूल्यतः ॥ ७ ॥

ब्रह्मोवाच ॥

कुण्डलो द्विजमाहेदं मत्पित्रोपार्जितं धनम् ।
यद्यस्ति किं धनेनाद्य करिष्ये द्विजसत्तम ॥ ८ ॥

गौतम उवाच ॥

धर्मार्थज्ञानकामानां को नु तृप्तः प्रशस्यते ।
उत्कर्षप्राप्तिरेवैषां सखे, श्लाघ्या शरीरिणाम् ॥ ९ ॥

स्वेनैव व्यवसायेन धन्या जीवन्ति जन्तवः ।
परदत्तार्थसन्तुष्टाः कष्टजीविन एव ते ॥ १० ॥

स पुत्रः शस्यते लोके पितृभिश्चाभिनन्द्यते ।
यः पैत्र्यमभिलिप्सेत न वाचापि तु कुण्डल ॥ ११ ॥

स्वबाहुबलमाश्रित्य योऽर्थानर्जयते सुतः ।
स कृतार्थो भवेल्लोके पैत्र्यं वित्तं न तु स्पृशेत ॥ १२ ॥

स्वयमार्ज्य सुतो वित्तं पित्रे दास्यति बन्धवे ।
तं तु पुत्रं विजानीयादितरो योनिकीटकः ॥ १३ ॥

ब्रह्मोवाच ॥

एतच्छ्रुत्वा तु तद्वाक्यं ब्राह्मणस्याभिलाषिणः ।
तथेति मत्वा तद्वाक्यं रत्नान्यादाय सत्वरः ॥ १४ ॥

आत्मकीयानि वित्तानि गौतमाय न्यवेदयत ।
धनेनैतेन देशांश्च परिभ्रम्य यथासुखम ॥ १५ ॥

धनान्यादाय वित्तानि पुनरेष्यामहे गृहम ।
सत्यमेव वणिग्वक्ति स तु विप्रः प्रतारकः ॥ १६ ॥

पापात्मा पापचित्तं च न बुबोध वणिग्द्विजम ।
तौ परस्परमामन्त्र्य मातापित्रोरजाननोः ॥ १७ ॥

देशाद्देशान्तरं यातौ धनार्थं तौ वणिग्द्विजौ ।
वणिग्घस्तस्थितं वित्तं ब्राह्मणो हर्तुमिच्छति ॥ १८ ॥

ब्राह्मण उवाच ॥

येन केनाप्युपायेन सद्धनं हि समाहरे ।
अहो पृथिव्यां रम्याणि नगराणि सहस्रशः ॥ १९ ॥

इष्टप्रदान्यः कामस्य देवता इव योषितः ।
मनोहरास्तत्र तत्र सन्ति किं क्रियते मया ॥ २० ॥

धनमाहृत्य यत्नेन योषिद्भ्यो यदि दास्यते ।
भुज्यन्ते तास्ततो नित्यं सफलं जीवितं हि तत् ॥ २१ ॥

नृत्तगीतरतो नित्यं पण्यस्त्रीभिरलङ्कृतः ।
भोक्ष्ये कथं तु तद्वित्तं वैश्यान्मद्धस्तमागतम् ॥ २२ ॥

ब्रह्मोवाच ॥

एवं चिन्तयमानोऽसौ गौतमं प्रहसन्निव ।
मणिकुण्डलमाहेदमधर्मादेव जन्तवः ॥ २३ ॥

वृद्धिं सुखमभीष्टानि प्राप्नुवन्ति न संशयः ।
धर्मिष्ठाः प्राणिनो लोके दृश्यन्ते दुःखभागिनः ॥ २४ ॥

तस्माद्धर्मेण किं तेन दुःखैकफलहेतुना ।
नेत्युवाच ततो वैश्यः सुखं धर्मे प्रतिष्ठितम् ॥ २५ ॥

पापे दुःखं भयं शोको दारिद्र्यं क्लेश एव च ।
यतो धर्मस्ततो मुक्तिः स्वधर्मः किं विनश्यति ॥ २६ ॥

गौतम उवाच ॥

धर्मार्थज्ञानकामानां को नु तृप्तः प्रशस्यते ।
उत्कर्षप्राप्तिरेवैषां सखे, श्लाघ्या शरीरिणाम् ॥ ९ ॥

स्वेनैव व्यवसायेन धन्या जीवन्ति जन्तवः ।
परदत्तार्थसन्तुष्टाः कष्टजीविन एव ते ॥ १० ॥

स पुत्रः शस्यते लोके पितृभिश्चाभिनन्द्यते ।
यः पैत्र्यमभिलिप्सेत न वाचापि तु कुण्डल ॥ ११ ॥

स्वबाहुबलमाश्रित्य योऽर्थानर्जयते सुतः ।
स कृतार्थो भवेल्लोके पैत्र्यं वित्तं न तु स्पृशेत ॥ १२ ॥

स्वयमार्ज्य सुतो वित्तं पित्रे दास्यति बन्धवे ।
तं तु पुत्रं विजानीयादितरो योनिकीटकः ॥ १३ ॥

ब्रह्मोवाच ॥

एतच्छ्रुत्वा तु तद्वाक्यं ब्राह्मणस्याभिलापिणः ।
तथेति मत्वा तद्वाक्यं रत्नान्यादाय सत्वरः ॥ १४ ॥

आत्मकीयानि वित्तानि गौतमाय न्यवेदयत् ।
धनेनैतेन देशांश्च परिभ्रम्य यथासुखम् ॥ १५ ॥

धनान्यादाय वित्तानि पुनरेष्यामहे गृहम् ।
सत्यमेव वणिग्वक्ति स तु विप्रः प्रतारकः ॥ १६ ॥

पापात्मा पापचित्तं च न बुबोध वणिग्द्विजम् ।
तौ परस्परमामन्त्र्य मातापित्रोरजानतोः ॥ १७ ॥

वैश्य उवाच ॥

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तथैव तान्सखे, मन्ये येषां धर्मो न विद्यते ॥ ३५ ॥

चतुर्णां पुरुषार्थानां धर्मः प्रथममुच्यते ।
पश्चादर्थश्च कामश्च स्वधर्मे मयि तिष्ठति ।
कथं ब्रूपे द्विजश्रेष्ठ, मया विजितमित्यदः ॥ ३६ ॥

ब्रह्मोवाच ॥

द्विजो वैश्यं पुनः प्राह हस्ताभ्यां नीयतां पण. ।
तथेति मन्यते वैश्यस्तौ गत्वा पुनरूचतुः ॥ ३७ ॥

पूर्ववल्लौकिकान्गत्वा जितमित्यब्रवीद्द्विजः ।
करौ छित्वा ततः प्राह कथं धर्मं तु मन्यसे ।
आक्षिप्तो ब्राह्मणेनैवं वैश्यो वचनमब्रवीत् ॥ ३८ ॥

वैश्य उवाच ॥

धर्ममेव परं मन्ये प्राणैः कण्ठगतैरपि ।
माता पिता सुहृद्बन्धुर्धर्म एव शरीरिणाम् ॥ ३९ ॥

ब्रह्मोवाच ॥

एवं विवदमानौ तावर्थवान्ब्राह्मणोऽभवन् ।
विमुक्तो वैश्यकस्तत्र बाहुभ्यां च धनेन च ॥ ४० ॥

एवं भ्रमन्तौ संप्राप्तौ गङ्गां योगेश्वरं हरिम् ।
यदृच्छया मुनिश्रेष्ठ, मिथस्तावूचतुः पुनः ॥ ४१ ॥

वैश्यो गङ्गां तु योगेशं धर्ममेव प्रशंसति ।
अतिकोपाद्द्विजो वैश्यमाक्षिपन्पुनरब्रवीत् ॥ ४२ ॥

ब्रह्मोवाच ॥

एवं विवदतोस्तत्र संपरायस्तयोरभूत् ।
यस्य पक्षो भवेज्ज्यायान्स परार्थमवाप्नुयात् ॥ २७ ॥

पृच्छाव: कस्य प्राबल्यं धर्मिणो वाप्यधर्मिण: ।
वेदात्तु लौकिकं ज्येष्ठं लोके धर्मात्सुखं भवेत् ॥ २८ ॥

एवं विवदमानौ तावूचतु: सकलाञ्जनान् ।
धर्मस्य वाप्यधर्मस्य प्राबल्यमनयोर्भुवि ॥ २९ ॥

तद्वदन्तु यथावृत्तमेवमूचतुरोजसा ।
एवं तत्रोचिरे केचिद्ये धर्मेणानुवर्तिन: ॥ ३० ॥

तैर्दु:खान्यनुभूयन्ते पापिष्ठा: सुखिनो जना: ।
संपराये धनं सर्वं जितं विप्रे न्यवेदयत् ॥ ३१ ॥

मणिमान्धर्मविच्छ्रेष्ठ: पुनर्धर्मं प्रशंसति ।
मणिमन्तं द्विज: प्राह किं धर्ममनुशंससि ॥ ३२ ॥

ब्रह्मोवाच ॥

तथेति चेत्याह वैश्यो ब्राह्मण: पुनरब्रवीत् ।

ब्राह्मण उवाच ॥

जितं मया धनं वैश्य, निर्लज्ज: किं नु भाषसे ॥ ३३ ॥
मयैव विजितो धर्मो यथेष्टचरणात्मना ।

ब्रह्मोवाच ॥

तद्ब्राह्मणवच: श्रुत्वा वैश्य: सस्मित ऊचिवान् ॥ ३४ ॥

वैश्य उवाच ॥

पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तथैव तान्सखे, मन्ये येषां धर्मो न विद्यते ॥ ३५ ॥

चतुर्णां पुरुषार्थानां धर्मः प्रथममुच्यते ।
पश्चादर्थश्च कामश्च स्वधर्मे मयि तिष्ठति ।
कथं ब्रूषे द्विजश्रेष्ठ, मया विजितमित्यदः ॥ ३६ ॥

ब्रह्मोवाच ॥

द्विजो वैश्यं पुनः प्राह हस्ताभ्यां नीयतां पणः ।
तथेति मन्यते वैश्यस्तौ गत्वा पुनरूचतुः ॥ ३७ ॥

पूर्ववल्लौकिकान्गत्वा जितमित्यब्रवीद्द्विजः ।
करौ छित्वा ततः प्राह कथं धर्मं तु मन्यसे ।
आक्षिप्तो ब्राह्मणेनैवं वैश्यो वचनमब्रवीत् ॥ ३८ ॥

वैश्य उवाच ॥

धर्ममेव परं मन्ये प्राणैः कण्ठगतैरपि ।
माता पिता सुहृद्बन्धुर्धर्म एव शरीरिणाम् ॥ ३९ ॥

ब्रह्मोवाच ॥

एवं विवदमानौ तावर्थवान्ब्राह्मणोऽभवत् ।
विमुक्तो वैश्यकस्तत्र बाहुभ्यां च धनेन च ॥ ४० ॥

एवं भ्रमन्तौ संप्राप्तौ गङ्गां योगेश्वरं हरिम् ।
यदृच्छया मुनिश्रेष्ठ, मिथस्तावूचतुः पुनः ॥ ४१ ॥

वैश्यो गङ्गां तु योगेशं धर्ममेव प्रशंसति ।
अतिकोपाद्द्विजो वैश्यमाक्षिपन्पुनरब्रवीत् ॥ ४२ ॥

ब्राह्मण उवाच ॥

गतं धनं करौ छिन्नावविशिष्टोऽसुभिर्भवान ।
त्वमन्यथा यदि ब्रूपे आहरिष्येऽसिना शिरः ॥ ४३ ॥

ब्रह्मोवाच ॥

विहस्य पुनराहेदं वैश्यो गौतममञ्जसा ॥ ४४ ॥

वैश्य उवाच ॥

धर्ममेव परं मन्ये यथेच्छसि तथा कुरु ।
ब्राह्मणांश्च गुरून्देवान्वेदान्धर्मं जनार्दनम् ॥ ४५ ॥

यस्तु निन्दयते पापो नासौ स्पृश्योऽथ पापकृत् ।
उपेक्षणीयो दुर्वृत्तः पापात्मा धर्मदूषकः ॥ ४६ ॥

ब्रह्मोवाच ॥

ततः प्राह स कोपेन धर्मं यद्यनुशंससि ।
आवयोः प्राणयोरत्र पणः स्यादिति वै मुने ॥ ४७ ॥

एवमुक्ते गौतमेन तथेत्याह वणिक्तदा ।
पुनरप्यूचतुरुभौ लोकाँल्लोकास्तथोचिरे ॥ ४८ ॥

योगेश्वरस्य पुरतो गौतम्या दक्षिणे तटे ।
त निपात्य विप्रं विप्रश्चक्षुरुत्पाट्य चाब्रवीत् ॥ ४९ ॥

विप्र उवाच ॥

गतोऽसीमां दशां वैश्य, नित्यं धर्मप्रशंसया ।
गतं धनं गतं चक्षुश्छेदितौ करपल्लवौ ।
पृष्टोऽसि मित्र, गच्छामि मैवं ब्रूयाः कथान्तरे ॥ ५० ॥

ब्रह्मोवाच ॥

तस्मिन्प्रयाते विप्रेऽसौ चिन्तयामास वै वणिक् ।
हा कष्टं मे किमभवद्धर्मैकमनसो हरे ॥ ५१ ॥

स कुण्डलो वणिक्छ्रेष्ठो निर्धनो गतबाहुकः ।
गतनेत्रः शुचं प्राप्तो धर्ममेवानुसंस्मरन् ॥ ५२ ॥

एवं बहुविधां चिन्तां कुर्वन्नास्ते महीतले ।
निश्चेष्टोऽथ निरुत्साहः पतितः शोकसागरे ॥ ५३ ॥

दिनावसाने शर्वर्यामुदिते चन्द्रमण्डले ।
एकादश्यां शुक्लपक्षे तत्रायाति विभीषणः ॥ ५४ ॥

स तु योगेश्वरं देवं पूजयित्वा यथाविधि ।
स्नात्वा तु गौतमीं गङ्गां सपुत्रो राक्षसैर्वृतः ॥ ५५ ॥

विभीषणस्य हि सुतो विभीषण इवापरः ।
वैभीषणिरिति ख्यातस्तमपश्यदुवाच च ॥ ५६ ॥

वैश्यस्य वचनं श्रुत्वा यथावृत्तं स धर्मवित् ।
पित्रे निवेदयामास लङ्केशाय महात्मने ।
स तु लङ्केश्वरः प्राह पुत्रं प्रीत्या गुणाकरम् ॥ ५७ ॥

विभीषण उवाच ॥

श्रीमान्रामो मम गुरुस्तस्य मान्यः सखा मम ।
हनुमानिति विख्यातस्तेनानीतो गिरिर्महान् ॥ ५८ ॥

पुरा कार्यान्तरे प्राप्ते सर्वौषध्याश्रयोऽचलः ।
जाते कार्ये तमादाय हिमवन्तमथागमत् ॥ ५९ ॥

विशल्यकरणी चेति मृतसंजीविनीति वा ।
तदानीय महाबुद्धी रामायाक्लिष्टकर्मणे ॥ ६० ॥

निवेदयित्वा तत्साध्यं तस्मिन्वृत्ते समागतः ।
पुनर्गिरिं समादाय अगच्छद्देवपर्वतम ॥ ६१ ॥

तमानीयास्य हृदये निवेशय हरिं स्मरन् ।
ततः प्राप्स्यत्ययं सर्वमपेक्षितमुदारधीः ॥ ६२ ॥

गच्छतस्तस्य वेगेन विशल्यकरणी पुनः ।
अपतद्गौतमीतीरे यत्र योगेश्वरो हरिः ॥ ६३ ॥

वैभीषणिरुवाच ॥

तामोषधीं मम पितः, दर्शयाशु विलम्ब मा ।
परार्तिशमनादन्यच्छ्रेयो न भुवनत्रये ॥ ६४ ॥

ब्रह्मोवाच ॥

विभीषणस्तथेत्युक्त्वा तां पुत्रस्याप्यदर्शयत् ।
इपेल्वेलस्य वृक्षस्य शाखां चिच्छेद तत्सुतः ॥ ६५ ॥

वैश्यस्यापि च वै प्रीत्या सन्तः परहिते रताः ।

विभीषण उवाच ॥

यत्रापतन्नगे चास्मिन्स वृक्षस्तु प्रतापवान ॥ ६६ ॥

तस्य शाखां समादाय हृदयेऽस्य निवेशय ।
तत्स्पृष्टमात्र एवासौ स्वकं रूपमवाप्नुयात् ॥ ६७ ॥

ब्रह्मोवाच ॥

एतच्छ्रुत्वा पितुर्वाक्यं वैभीषणिरुदारधीः ।
तथा चकार वै सम्यक्शाखाखण्डं न्यवेशयत् ॥ ६८ ॥

हृदये स तु वैश्योऽपि सचक्षुः सकरोऽभवत ।
मणिमन्त्रौषधीनां हि वीर्यं कोऽपि न बुध्यते ॥ ६९ ॥

तदेव काष्ठमादाय धर्ममेवानुसंस्मरन् ।
स्नात्वा तु गौतमीं गङ्गां तथा योगेश्वरं हरिम ॥ ७० ॥

नमस्कृत्य पुनरगात्काष्ठखण्डेन वैश्यकः ।
परिभ्रमन्नृपपुरं महापुरमिति श्रुतम ॥ ७१ ॥

महाराज इति ख्यातस्तत्र राजा महाबलः ।
तस्य नास्ति सुतः कश्चित्पुत्रिका नष्टलोचना ॥ ७२ ॥

सैव तस्य सुता पुत्रस्तस्यापि व्रतमीदृशम् ।
देवो वा दानवो वापि ब्राह्मणः क्षत्रियो भवेत् ॥ ७३ ॥

वैश्यो वा शूद्रयोनिर्वा सुगुणो निर्गुणोऽपि वा ।
तस्मै देया इयं पुत्री यो नेत्रे आहरिष्यति ॥ ७४ ॥

राज्येन सह देयेयमिति राजा ह्यघोषयत ।
अहर्निशमसौ वैश्यः श्रुत्वा घोषमथाब्रवीत् ॥ ७५ ॥

वैश्य उवाच ॥

अहं नेत्रे आहरिष्ये राजपुत्र्या असंशयम ।

ब्रह्मोवाच ॥

तं वैश्यं तरसादाय महाराज्ञे न्यवेदयत् ॥ ७६ ॥

तत्काष्ठस्पर्शमात्रेण सनेत्राभून्नृपात्मजा ।
ततः सविस्मयो राजा को भवानिति चाब्रवीत ॥ ७७ ॥

वैश्यो राज्ञे यथावृत्तं न्यवेदयदशेषत: ।

वैश्य उवाच ॥

ब्राह्मणानां प्रसादेन धर्मस्य तपसस्तथा ॥ ७८ ॥

दानप्रभावाद्यज्ञैश्च विविधैर्भूरिदक्षिणैः ।
दिव्यौषधिप्रभावेन मम सामर्थ्यमीदृशम् ॥ ७९ ॥

ब्रह्मोवाच ॥

एतद्वैश्यवचः श्रुत्वा विस्मितोऽभून्महीपतिः ।

राजोवाच ॥

अहो महानुभावोऽयं प्रायो बृन्दारको भवेत् ॥ ८० ॥
अन्यथैतादृगन्यस्य सामर्थ्यं दृश्यते कथम् ।
तस्मादस्मै तु तां कन्यां प्रदास्ये राज्यपूर्विकाम् ॥ ८१ ॥

ब्रह्मोवाच ॥

इति सङ्कल्प्य मनसि कन्यां राज्यं च दत्तवान् ।
विहारार्थं गतः स्वैरं परं खेदमुपागतः ॥ ८२ ॥

न मित्रेण विना राज्यं न मित्रेण विना सुखम् ।
तमेव सततं विप्रं चिन्तयन्वैश्यनन्दनः ॥ ८३ ॥

एतदेव सुजातानां लक्षणं भुवि देहिनां ।
कृपार्द्रं यन्मनो नित्यं तेषामप्यहितेषु हि ॥ ८४ ॥

महानृपो वनं प्रायात्स राजा मणिकुण्डलः ।
तस्मिञ्छासति राज्यं तु कदाचिद्गौतमं द्विजम् ॥ ८५ ॥

हृतस्वं द्यूतकैः पापैरपश्यन्मणिकुण्डलः ।
तमादाय द्विजं मित्रं पूजयामास धर्मवित् ॥ ८६ ॥

धर्माणां तु प्रभावं त तस्मै सम्यङ्न्यवेदयन् ।
स्नापयामास गङ्गायां तं सर्वाघनिवृत्तये ॥ ८७ ॥

तेन विप्रेण सर्वैस्तैः स्वकीयैर्गोत्रजैर्वृतः ।
वैश्यः स्वदेशसंभूतैर्ब्राह्मणस्य तु बान्धवैः ॥ ८८ ॥

वृद्धकौशिकमुख्यैश्च तस्मिन्योगेश्वरान्तिके ।
यज्ञानिष्ट्वा सुरान्पूज्य ततः स्वर्गमुपेयिवान् ॥ ८९ ॥

ततः प्रभृति तत्तीर्थं मृतसंजीवनं विदुः ।
चक्षुस्तीर्थं सयोगेशं स्मरणादपि पुण्यदम् ।
मनःप्रसादजननं सर्वदुर्भावनाशनम् ॥ ९० ॥

इति श्रीमहापुराणे आदिब्राह्मे तीर्थमाहात्म्ये
चक्षुस्तीर्थादिवर्णनं नाम
सप्तत्यधिकशततमोऽध्यायः ॥

वैश्य उवाच ॥

ब्राह्मणानां प्रसादेन धर्मस्य तपसस्तथा ॥ ७८ ॥

दानप्रभावाद्यज्ञैश्च विविधैर्भूरिदक्षिणैः ।
दिव्यौषधिप्रभावेन मम सामर्थ्यमीदृशम् ॥ ७९ ॥

ब्रह्मोवाच ॥

एतद्वैश्यवचः श्रुत्वा विस्मितोऽभून्महीपतिः ।

राजोवाच ॥

अहो महानुभावोऽयं प्रायो बृन्दारको भवेत ॥ ८० ॥
अन्यथैतादृगन्यस्य सामर्थ्यं दृश्यते कथम् ।
तस्मादस्मै तु तां कन्यां प्रदास्ये राज्यपूर्विकाम् ॥ ८१ ॥

ब्रह्मोवाच ॥

इति सङ्कल्प्य मनसि कन्यां राज्यं च दत्तवान ।
विहारार्थं गतः स्वैरं परं खेदमुपागतः ॥ ८२ ॥

न मित्रेण विना राज्यं न मित्रेण विना सुखम ।
तमेव सततं विप्रं चिन्तयन्वैश्यनन्दनः ॥ ८३ ॥

एतदेव सुजातानां लक्षणं भुवि देहिनां ।
कृपार्द्रं यन्मनो नित्य तेषामप्यहितेषु हि ॥ ८४ ॥

महान्नृपो वनं प्रयात्स राजा मणिकुण्डलः ।
तस्मिञ्छामति राज्यं तु कदाचिद्गौतमं द्विजम ॥ ८५ ॥

हतस्वं धूतकैः पापैरपश्यन्मणिकुण्डलः ।
तमादाय द्विजं मित्रं पूजयामास धर्मवित ॥ ८६ ॥

धर्माणां तु प्रभाव त तस्मै सम्यङ्न्यवेदयन् ।
स्नपयामास गङ्गायां त सर्वाघनिवृत्तये ॥ ८७ ॥

तेन विप्रेण सर्वैस्तै. स्वकीयैर्मोत्रजैर्धृत. ।
वैश्य. स्वदेशसभूतैर्ब्राह्मणस्य तु बान्धवै. ॥ ८८ ॥

वृद्धकौशिकमुख्यैश्च तस्मिन्योगेश्वरान्तिके ।
यज्ञानिष्ट्वा सुरान्पूज्य ततः स्वर्गमुपेयिवान् ॥ ८९ ॥

तत प्रभृति तत्तीर्थं मृतसंजीवनं विदुः ।
चक्षुस्तीर्थं सयोगेश स्मरणादपि पुण्यदम् ।
मन प्रसादजनन सर्वदुर्भावनाशनम् ॥ ९० ॥

इति श्रीमहापुराण आदित्राह्मे तीर्थमाहात्म्य
चक्षुस्तीर्थादिवर्णन नाम
सप्तत्यधिकशततमोऽध्यायः ॥

———

## ॥ अरुणसुतसत्यव्रतचरित्रम् ॥



अरुणस्य सुतः श्रीमान्सत्यव्रत इति स्मृतः ।
सोऽभूदिच्छाचरः कामी मन्दात्मा ह्यतिलोलुपः ॥ १ ॥

स पापात्मा विप्रभार्यां हृतवान्काममोहितः ।
विवाहे तस्य विघ्नं स चकार नृपतेः सुतः ॥ २ ॥

मिलिता ब्राह्मणास्तत्र राजानमरुणं नृप ।
ऊचुर्भृशं सुदुःखार्ता हा हताः स्मेति चासकृत् ॥ ३ ॥

पप्रच्छ राजा तान्विप्रान्दुःखितान्पुरवासिनः ।
किं कृतं मम पुत्रेण भवतामशुभं द्विजाः ॥ ४ ॥

तं निशम्य द्विजा वाक्यं राज्ञो विनयपूर्वकम् ।
तदोचुस्त्वरुणं विप्राः कृताशीर्वचना भृशम् ॥ ५ ॥

ब्राह्मणा ऊचुः ॥

राजन्, तव सुतेनाद्य विवाहेऽपहृता किल ।
विवाहिता विप्रकन्या बलेन बलिनां वर ॥ ६ ॥

व्यास उवाच ॥

श्रुत्वा तेषां वचस्तथ्यं राजा परमधार्मिकः ।
पुत्रमाह वृथा नाम कृतं ते दुष्टकर्मणा ॥ ७ ॥

गच्छ दूरं सुमन्दात्मन्दुराचार, गृहान्मम ।
न स्थातव्यं त्वया पाप विषये मम सर्वथा ॥ ८ ॥

कुपितं पितरं प्राह क्व गच्छामीति वै मुहुः ।
अरुणस्तमथोवाच श्वपाकैः सह वर्तय ॥ ९ ॥

श्वपचस्य कृतं कर्म द्विजदारापहारणम् ।
तस्मात्तैः सह संसर्गं कृत्वा तिष्ठ यथासुखम् ॥ १० ॥

नाहं पुत्रेण पुत्रार्थी त्वया च कुलपांसन ।
यथेष्टं व्रज दुष्टात्मन् , कीर्तिनाशः कृतस्त्वया ॥ ११ ॥

स निशम्य पितुर्वाक्यं कुपितस्य महात्मनः ।
निश्चक्राम पुरात्तस्मात्तरसा श्वपचान्ययौ ॥ १२ ॥

सत्यव्रतस्तदा तत्र श्वपाकैः सह वर्तते ।
धनुर्बाणधरः श्रीमान्कवची करुणालयः ॥ १३ ॥

यदा निष्कासितः पित्रा कुपितेन महात्मना ।
गुरुणाथ वसिष्ठेन प्रेरितोऽसौ महीपतिः ॥ १४ ॥

तस्मात्सत्यव्रतस्तस्मिन्बभूव क्रोधसंयुतः ।
वसिष्ठे धर्मशास्त्रज्ञे निवारणपराङ्मुखे ॥ १५ ॥

केनापि कारणेनाथ पिता तस्य महीपतिः ।
पुत्रार्थेऽसौ तपस्तप्तुं पुरं त्यक्त्वा वनं गतः ॥ १६ ॥

न ववर्ष तदा तस्मिन्विषये पाकशासनः ।
समा द्वादश वर्षाणि तेनाधर्मेण सर्वथा ॥ १७ ॥

विश्वामित्रस्तदा दारांस्तस्मिंस्तु विषये नृप ।
सन्यस्य कौशिकीतीरे चचार विपुलं तप ॥ १८ ॥

कातरा तत्र सञ्जाता भार्या वै कौशिकस्य ह ।
कुटुम्बभरणार्थाय दु खिता वरवर्णिनी ॥ १९ ॥

बालकान्क्षुधयाक्रान्तान्तुदत. पश्यती भृशम ।
याचमानांश्च नीवारान्कष्टमाप पतिव्रता ॥ २० ॥

चिन्तयामास दु खार्ता तोकान्वीक्ष्य क्षुधातुरान ।
नृपो नास्ति पुरे ह्यद्य कं याचे वा करोमि किम् ॥ २१ ॥

न मे त्रातास्ति पुत्राणा पतिर्मे नास्ति सन्निधौ ।
रुदन्ति बालका: कामं धिङ्मे जीवनमद्य वै ॥ २२ ॥

धनहीनां च मां त्यक्त्वा तपस्तप्तुं गत. पतिः ।
न जानाति समर्थोऽपि दु.खितां धनवर्जिताम् ॥ २३ ॥

बालानां भरण केन करोमि पतिना विना ।
मरिष्यन्ति सुता: सर्वे क्षुधया पीडिता भृशम ॥ २४ ॥

एकं सुत तु विक्रीय द्रव्येण कियता पुन ।
पालयामि सुतानन्यानेष मे विहितो विधि. ॥ २५ ॥

सर्वेषां मारणं नाद्य युक्त मम विपर्यये ।
कालस्य कलना याह् विक्रीणामि तथात्मजम ॥ २६ ॥

हृदय कठिन कृत्वा सञ्चिन्त्य मनसा सती ।
सा दर्भरज्ज्वा बध्वाथ गले पुत्र विनिर्गता ॥ २७ ॥

मुनिपत्नी गले बध्वा मध्यम पुत्रमौरसम् ।
शेषस्य भरणार्थाय गृहीत्वा चलिता गृहान् ॥ २८ ॥

दृष्ट्वा सत्यव्रतेनार्ता तापसी शोकसयुता ।
पप्रच्छ नृपतिस्तां तु किं चिकीर्षसि शोभने ॥ २९ ॥

रुदन्त बालक कण्ठे बध्वा नयसि काधुना ।
किमर्थं चारुसर्वाङ्गि, सत्य ब्रूहि ममाग्रत ॥ ३० ॥

ऋषिपत्नी उवाच ॥

विश्वामित्रस्य भार्याहं पुत्रोऽयं मे नृपात्मज ।
विक्रेतुमौरसं काम गमिष्ये निर्पमं सुतम ॥ ३१ ॥

अन्न नास्ति पतिर्मुक्त्वा गतस्तप्तु नृप क्वचित् ।
विक्रीणामि क्षुधार्तेन शेषस्य भरणाय वै ॥ ३२ ॥

राजोवाच ॥

पतिव्रते, रक्ष पुत्रं दास्यामि भरणं तव ।
तावदेव पतिस्तेऽत्र वनान्नैवागमिष्यति ॥ ३३ ॥

वृक्षे तवाश्रमाभ्याशे भक्ष्य किञ्चिन्निरन्तरम् ।
बन्धयित्वा गमिष्यामि सत्यमेतद्ब्रवीम्यहम् ॥ ३४ ॥

इत्युक्ता सा तदा तेन राज्ञा कौशिककामिनी ।
विबन्ध तनय कृत्वा जगामाश्रममण्डलम् ॥ ३५ ॥

सोऽभवद्गालवो नाम गलबन्धान्महातपा ।
सा तु स्वस्याश्रमं गत्वा मुमोद बालकैर्वृता ॥ ३६ ॥

सत्यव्रतस्तु भक्त्या च कृपया च परिप्लुतः ।
विश्वामित्रस्य च मुनेः कलत्रं तद्बभार ह ॥ ३७ ॥

वने स्थितान्मृगान्हत्वा वराहान्महिषांस्तथा ।
विश्वामित्रवनाभ्याशे मांसं वृक्षे बबन्ध ह ॥ ३८ ॥

ऋषिपत्नी गृहीत्वा तन्मांसं पुत्रानदात्ततः ।
निर्वृतिं परमां प्राप प्राप्य भक्ष्यमनुत्तमम् ॥ ३९ ॥

अयोध्यां चैव राज्यं च तथैवान्तःपुरं मुनिः ।
गते तप्तुं नृपे तस्मिन्वसिष्ठः पर्यरक्षत ॥ ४० ॥

सत्यव्रतोऽपि धर्मात्मा ह्यतिष्ठन्नगराद्बहिः ।
पितुराज्ञां समास्थाय पशुव्रतवान्वने ॥ ४१ ॥

सत्यव्रतो ह्यकस्माच्च कस्यचित्कारणान्नृपः ।
वसिष्ठे चाधिकं मन्युं धारयामास नित्यदा ॥ ४२ ॥

त्यज्यमानं वने पित्रा धर्मिष्ठं च प्रियं सुतम् ।
न वारयामास मुनिर्वसिष्ठः कारणेन ह ॥ ४३ ॥

पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
जानन्नपि स धर्मात्मा विप्रदारपरिग्रहे ॥ ४४ ॥

कस्मिंश्चिद्दिवसेऽरण्ये मृगाभावे महीपतिः ।
वसिष्ठस्य च गां दोग्ध्रीमपश्यद्वनमध्यगाम् ॥ ४५ ॥

तां जघान क्षुधार्तस्तु क्रोधान्मोहाच्च दस्युवत् ।
वृक्षे बबन्ध तन्मांसं नीत्वा स्वयमभक्षयत् ॥ ४६ ॥

ऋषिपत्नी सुतान्सर्वान्भोजयामास तत्तदा ।
शङ्कमाना मृगस्येति न गोरिति च सुव्रत ॥ ४७ ॥

वसिष्ठस्तु हतां दोग्ध्रीं ज्ञात्वा क्रुद्धस्तमब्रवीत् ।
दुरात्मन्, किं कृतं पापं धेनुघातात्पिशाचवत् ॥ ४८ ॥

एवं ते शङ्कवः क्रूराः पतन्तु त्वरितास्त्रयः ।
गोवधाद्दारहरणात्पितुः क्रोधात्तथा भृशम् ॥ ४९ ॥

त्रिशङ्कुरिति नाम्ना वै भुवि ख्यातो भविष्यति ।
पिशाचरूपमात्मानं दर्शयन्सर्वदेहिनाम् ॥ ५० ॥

व्यास उवाच ॥

एवं शप्तो वसिष्ठेन तदा सत्यव्रतो नृपः ।
चचार च तपस्तीव्रं तस्मिन्नेवाश्रमे स्थितः ॥ ५१ ॥

कस्माच्चिन्मुनिपुत्रात्तु प्राप्य मन्त्रमनुत्तमम् ।
ध्यायन्भगवतीं देवीं प्रकृतिं परमां शिवाम् ॥ ५२ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

जनमेजय उवाच ॥

वसिष्ठेन च शप्तोऽसौ त्रिशङ्कुर्नृपतेः सुतः ।
कथं शापाद्विनिर्मुक्तस्तन्मे ब्रूहि महामते ॥ १ ॥

व्यास उवाच ॥

सत्यव्रतस्तथा शप्तः पिशाचत्वमवाप्तवान् ।
तस्मिन्नेवाश्रमे तस्थौ देवीभक्तिपरायणः ॥ २ ॥

कदाचिन्नृपतिस्तत्र जप्त्वा मन्त्रं नवाक्षरम् ।
होमार्थं ब्राह्मणान्गत्वा प्रणम्योवाच भक्तितः ॥ ३ ॥

भूमिदेवाः, शृणुध्वं वै वचनं प्रणतस्य मे ।
ऋत्विजो मम सर्वेऽत्र भवन्तः प्रभवन्तु ह ॥ ४ ॥

जपस्य च दशांशेन होमः कार्यो विधानतः ।
भवद्भिः कार्यसिद्ध्यर्थं वेदविद्भिः कृपापरैः ॥ ५ ॥

सत्यव्रतोऽहं नृपतेः पुत्रो ब्रह्मविदां वर. ।
कार्यं मम विधातव्यं सर्वदा सुखहेतवे ॥ ६ ॥

तच्छ्रुत्वा ब्राह्मणास्तत्र तमूचुर्नृपते. सुतम् ।
शप्तस्त्वं गुरुणा प्राप्तं पिशाचत्वं त्वयाधुना ॥ ७ ॥

न यागार्होऽसि तस्मात्त्वं वेदेष्वनधिकारतः ।
पिशाचत्वमनुप्राप्तं सर्वलोकेषु गर्हितम् ॥ ८ ॥

व्यास उवाच ॥

तन्निशम्य वचस्तेषां राजा दुःखमवाप ह ।
धिग्जीवितमिदं मेऽद्य किं करोमि वने स्थित. ॥ ९ ॥

पित्रा चाहं परित्यक्तः शप्तश्च गुरुणा भृशम् ।
राज्याद्भ्रष्टः पिशाचत्वमनुप्राप्तः करोमि किम् ॥ १० ॥

तदा पृथुतरां कृत्वा चितां काष्ठैर्नृपात्मजः ।
सस्मार चण्डिकां देवीं प्रवेशमनुचिन्तयन् ॥ ११ ॥

स्मृत्वा देवीं महामायां चितां प्रज्वलितां पुनः ।
कृत्वा स्नात्वा प्रवेशार्थं स्थितः प्राञ्जलिरग्रतः ॥ १२ ॥

ज्ञात्वा भगवती तं तु मर्तुकामं महीपतिम् ।
आजगाम तदाकाशे प्रत्यक्षं तस्य चाग्रतः ॥ १३ ॥

दत्त्वाथ दर्शनं देवी तमुवाच नृपात्मजम् ।
सिंहारूढा महाराज, मेघगम्भीरया गिरा ॥ १४ ॥

किं ते व्यवसितं साधो हुताशे मा तनुं त्यज ।
स्थिरो भव महाभाग पिता ते जरसान्वितः ॥ १५ ॥

राज्यं दत्त्वा वने तुभ्यं गन्तास्ति तपसे किल ।
विषादं त्यज हे वीर परश्वोऽहनि भूपते ॥ १६ ॥

नेतुं त्वामागमिष्यन्ति सचिवाश्च पितुस्तव ।
मत्प्रसादात्पिता च त्वामभिषिच्य नृपासने ॥ १७ ॥

जित्वा कामं ब्रह्मलोकं गमिष्यत्येष निश्चयः ।
इत्युक्त्वा तं तदा देवी तत्रैवान्तरधीयत ॥ १८ ॥

राजपुत्रो विरमितो मरणात्पावकात्ततः ।
अयोध्यायां तथागत्य नारदेन महात्मना ॥ १९ ॥

वृत्तान्तः कथितः सर्वो राज्ञे सत्वरमादितः ।
श्रुत्वा राजाथ पुत्रस्य तं तथा मरणागमम् ॥ २० ॥

खेदमायाति मनसा शुशोच बहुधा नृपः ।
सचिवानाह धर्मात्मा पुत्रशोकपरिप्लुतः ॥ २१ ॥

ज्ञातं भवद्भिरत्युग्रं पुत्रस्य मम चेष्टितम् ।
त्यक्तो मया वने धीमान्पुत्रः सत्यव्रतो मम ॥ २२ ॥

आज्ञयासौ गतः सद्यो राज्यार्ह. परमार्थवित् ।
स्थितस्तत्रैव विज्ञाने धनहीनक्षमान्वितः ॥ २३ ॥

वसिष्ठेन तथा शप्त. पिशाचसदृशः कृतः ।
सोऽद्य दुःखेन सन्तप्तः प्रवेष्टुं च हुताशनम् ॥ २४ ॥

उद्यतः श्रीमहादेव्या निषिद्धः संस्थितः पुनः ।
तस्माद्गच्छन्तु तं शीघ्रं ज्येष्ठपुत्रं महाबलम् ॥ २५ ॥

आश्वास्य वचनैरत्र तरसैवानयन्त्विह ।
अभिषिच्य सुतं राज्ये औरसं पालनक्षमम् ॥ २६ ॥

वनं यास्यामि शान्तोऽहं तपसे कृतनिश्चयः ।
इत्युक्त्वा मन्त्रिणः सर्वान्प्रेषयामास पार्थिवः ॥ २७ ॥

तस्यैवानयनार्थं हि प्रीतिप्रवणमानसः ।
ते गत्वा तं समाश्वास्य मन्त्रिणः पार्थिवात्मजम् ॥ २८ ॥

अयोध्यायां महात्मानं मानपूर्वं समानयन् ।
दृष्ट्वा सत्यव्रतं राजा दुर्बलम् मलिनाम्बरम् ॥ २९ ॥

जटाजूटधरं क्रूरं चिन्तातुरमचिन्तयन् ।
किं कृतं निष्ठुरं कर्म मया पुत्रो विवासितः ॥ ३० ॥

राज्यार्हश्चातिमेधावी जानता धर्मनिश्चयम् ।
इति सञ्चिन्त्य मनसा तमालिङ्ग्य महीपतिः ॥ ३१ ॥

आसने स्वसमीपस्थे समाश्वास्योपवेशयन् ।
उपविष्टं सुतं राजा प्रेमपूर्वमुवाच ह ॥ ३२ ॥

प्रेमगद्गदया वाचा नीतिशास्त्रविशारदः ।

राजोवाच ॥

पुत्र, धर्मे मतिः कार्या माननीया मुनीद्भवाः ॥ ३३ ॥

न्यायागतं धनं ग्राह्यं रक्षणीयाः सदा प्रजाः ।
नासत्यं क्वापि वक्तव्यं नामार्गे गमनं क्वचित् ॥३४ ॥

कर्तव्या पूजनीयानां पूजा चैव तपस्विनाम् ।
हन्तव्या दस्यवः क्रूरा इन्द्रियाणां तथा जयः ॥ ३५ ॥

कर्तव्यः कार्यसिद्ध्यर्थं राज्ञा पुत्र, सदैव हि ।
मन्त्रस्तु सर्वथा गोप्यः कर्तव्यः सचिवैः सह ॥ ३६ ॥

नोपेक्ष्योऽल्पोऽपि कृतिना रिपुः सर्वात्मना सुत ।
न विश्वसेत्परासक्तं सचिवं च तथानतम् ॥ ३७ ॥

चाराः सर्वत्र योक्तव्याः शत्रुमित्रेषु सर्वथा ।
धर्मे मतिः सदा कार्या दानं दद्याच्च नित्यशः ॥ ३८ ॥

शुष्कवादो न कर्तव्यो दुष्टसङ्गं च वर्जयेत् ।
यष्टव्या विविधा यज्ञाः पूजनीया महर्षयः ॥ ३९ ॥

न विश्वसेत्प्रियं क्वापि स्त्रैणं द्यूतपरं परम् ।
अत्यादरो न कर्तव्यो मृगयायां कदाचन ॥ ४० ॥

द्यूते मद्ये तथा गेये नूनं वारवधूषु च ।
स्वयं तद्विमुखो भूयात्प्रजास्तेभ्यश्च रक्षयेत् ॥ ४१ ॥

ब्राह्मे मुहूर्ते कर्तव्यमुत्थानं सर्वथा सदा ।
स्नानादिकं सर्वविधिं विधाय विधिवत्तथा ॥ ४२ ॥

पराशक्तेः परां पूजां भक्त्या कुर्यात्सुदीक्षितः ।
पुत्रैतज्जन्मसाफल्यं पराशक्ते पदार्चनम् ॥ ४३ ॥

सकृत्कृत्वा महापूजां देवीपादजलं पिबन् ।
न जातु जननीगर्भे गच्छेदिति विनिश्चयः ॥ ४४ ॥

सर्वं दृश्यं महादेवी द्रष्टा साक्षी च सैव हि ।
इति तद्भावभरितस्तिष्ठेन्निर्भयचेतसा ॥ ४५ ॥

कृत्वा नित्यविधिं सम्यग्गन्तव्यं सदसि द्विजान् ।
समाहूय च प्रष्टव्यो धर्मशास्त्रविनिर्णयः ॥ ४६ ॥

संपूज्य ब्राह्मणान्पूज्यान्वेदवेदान्तपारगान् ।
गोभूहिरण्यादिकं च देयं पात्रेषु सर्वदा ॥ ४७ ॥

अविद्वान्ब्राह्मणः कोऽपि नैव पूज्यः कदाचन ।
आहारादधिकं नैव देयं मूर्खाय कर्हिचित् ॥ ४८ ॥

न वा लोभात्त्वया पुत्र, कर्तव्यं धर्मलङ्घनम् ।
कोशस्य सङ्ग्रहः कार्यो नूनं न्यायागतस्य हि ॥ ४९ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

व्यास उवाच ॥

एवं प्रबोधितः पित्रा त्रिशङ्कुः प्रणतो नृपः ।
तथेति पितरं प्राह प्रेमगद्गदया गिरा ॥ १ ॥

विप्रानाहूय मन्त्रज्ञान्वेदशास्त्रविशारदान् ।
अभिषेकाय संभारान्कारयामास सत्वरम् ॥ २ ॥

सलिलं सर्वतीर्थानां समानाय्य विशां पतिः ।
प्रकृतीश्च समाहूय सामन्तान्भूपतींस्तथा ॥ ३ ॥

पुण्येऽह्नि विधिवत्तस्मै ददावासनमुत्तमम् ।
अभिषिच्य सुतं राज्ये त्रिशङ्कुं विधिवत्पिता ॥ ४ ॥

तृतीयमाश्रमं पुण्य जग्राह भार्यया युत. ।
वने त्रिपथगाकूले चचार दुश्चरं तप. ॥ ५ ॥

काले प्राप्ते ययौ स्वर्गं पूजितस्त्रिदशैरपि ।
इन्द्रासनसमीपस्थो रराज रविवत्सदा ॥ ६ ॥

इति तृतीयोऽध्यायः ॥

इति देवीभागवते सप्तमस्कन्धे
१०—१२ अध्यायाः ।

# ॥ मरुत्तोपाख्यानम् ॥

क्रौष्टुकिरुवाच ॥

भगवन्, विस्तरात्सर्वं ममैतत्कथितं त्वया ।
करन्धमस्य चरितं आविक्षिचरितं च यत् ॥ १ ॥

आविक्षितस्य नृपतेर्मरुत्तस्य महात्मनः ।
श्रोतुमिच्छामि चरितं श्रूयते सोऽतिचेष्टितः ॥ २ ॥

चक्रवर्ती महाभागः शूरः कान्तो महामतिः ।
धर्मविद्धर्मकृच्चैव सम्यक्पालयिता भुवः ॥ ३ ॥

मार्कण्डेय उवाच ॥

स पित्रा समनुज्ञातं राज्यं प्राप्य पितामहात् ।
धर्मतः पालयामास पिता पुत्रानिवौरसान् ॥ ४ ॥

इयाज सुबहून्यज्ञान्यथावत्स्वाप्तदक्षिणान् ।
ऋत्विक्पुरोहितादेशादनिर्विण्णो महीपतिः ॥ ५ ॥

तस्याप्रतिहतं चक्रमासीद्द्वीपेषु सप्तसु ।
गतिश्चाप्यनवच्छिन्ना स्व.पातालजलादिषु ॥ ६ ॥

ततः प्राप्य धनं विप्र, यथावत्स्वक्रियापरः ।
अयजत्स महायज्ञैर्देवानिन्द्रपुरोगमान् ॥ ७ ॥

इतरे च यथा वर्णाः स्वे स्वे कर्मण्यतन्द्रिताः ।
तदुपात्तधनाश्चक्रुरिष्टापूर्तादिकाः क्रियाः ॥ ८ ॥

पाल्यमाना मही तेन मरुत्तेन महात्मना ।
योऽस्पर्द्धत्रिदशावासवासिभिर्द्विजसत्तम ॥ ९ ॥

तेनातिशयिताः सर्वे केवलं न महीक्षितः ।
यज्विना देवराजोऽपि शतयज्ञाभिसन्धिना ॥ १० ॥

ऋत्विक् तस्य तु संवृत्तो बभूवाङ्गिरसः सुतः ।
भ्राता बृहस्पतेर्विप्र, महात्मा तपसो निधिः ॥ ११ ॥

सौवर्णो मुञ्जवान्नाम पर्वतः सुरसेवितः ।
पातितं तेन तच्छृङ्गं कृते तस्य महीपते. ॥ १२ ॥

तेन यस्याखिलं यज्ञे भूमिभागादिकं द्विज ।
प्रासादाश्च कृताः शुभ्रास्तपसा सर्वकाञ्चनाः ॥ १३

गाथाश्चाप्यथ गायन्ति मरुत्तचरिताश्रयाः ।
सातत्येनर्षयः सर्वे कुर्वन्तोऽध्ययनं यथा ॥ १४ ॥

मरुत्तेन समो नाभूद्यजमानो महीतले ।
सदः समस्तं यद्यज्ञे प्रासादाश्चैव काञ्चनाः ॥ १५

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
विप्राणां परिवेष्टारः शक्राद्यास्त्रिदशोत्तमाः ॥ १६ ।

यथा यज्ञे मरुत्तस्य तृप्ताः सर्वे महीपते. ।
सुवर्णमखिलं त्यक्तं रत्नपूर्णगृहे द्विजैः ॥ १७ ॥

प्रासादादि समस्तं च सौवर्णं तस्य यत्कृतौ ।
त्रयो वर्णा ह्यलभ्यन्त तस्मात्केचित्तथा ददुः ॥ १८

तेन त्यक्तेन शिष्टा ये जनाः पूर्णमनोरथाः ।
तेऽपि यज्ञान्यजन्ते स्म देशे देशे पृथक् पृथक् ॥ १९ ॥

तस्यैवं कुर्वतो राज्यं सम्यक्पालयतः प्रजाः ।
तपस्वी कश्चिदभ्येत्य तमाह मुनिसत्तम ॥ २० ॥

पितुर्माता तवाहेदं दृष्ट्वा तापसमण्डलम् ।
विषाभिभूतमुरगैर्मदोन्मत्तैर्नरेश्वर ॥ २१ ॥

पितामहस्ते स्वर्यातः सम्यक्संपाल्य मेदिनीम् ।
पिता तव तथा शक्तो हित्वा ग्रामं वनं गतः ।
तपश्चरणशक्ताहमिह चौर्वाश्रमे स्थितः ॥ २२ ॥

साहं पश्यामि वैकल्यं तव राज्यं प्रशासतः ।
पितामहस्य ते नाभूद्यत्पूर्वेषां च ते नृप ॥ २३ ॥

नूनं प्रमत्तो भोगेषु सक्तो वा विजितेन्द्रियः ।
चारान्धता यतोऽस्तीयं दुष्टादुष्टं न वेत्सि यत ॥ २४ ॥

पातालादभ्युपेतैस्तु भुजगैर्दंशशालिभिः ।
दृष्ट्वा मुनिसुताः सप्त दूषिताश्च जलाशयाः ॥ २५ ॥

स्वेदमूत्रपुरीषेण दूषितं सुहृतं हविः ।
अपराधं समुद्दिश्य दत्तो नागबलिश्चिरात् ॥ २६ ॥

एते समर्था मुनयो भस्मीकर्तुं भुजङ्गमान ।
किन्त्वेषां नाधिकारोऽत्र त्वमेवात्राधिकारवान ॥ २७ ॥

तावत्सुखं भूपतिजैर्भोगजं प्राप्यते नृप ।
अभिषेकजलं यावत्तन्मूर्ध्नि विनिपात्यते ॥ २८ ॥

कानि मित्राणि क शत्रुर्मम शत्रोर्बलं कियत् ।
कोऽहं के मन्त्रिण पक्षे के वा भूपतयो मम ॥ २९ ॥

कियान्कोशो बलं किं वा कोऽनुरक्तो जनो मम ।
विरक्तो वा परैर्भिन्न परेषामपि कीदृश ॥ ३० ॥

क सम्यगत्र नगरे विषये वा जनो मम ।
धर्मकामार्थयोऽमूढ क सम्यगभिवर्तते ॥ ३१ ॥

को दण्ड्य परिपाल्य क के चोपेक्ष्या नरा मया ।
सामभेदतया दम्यो देशकालमवेक्षता ॥ ३२ ॥

चाराश्च चारयेदन्यैरज्ञातान्भूपतिश्चरै ।
सचिवादिषु सर्वेषु चरान्दद्यान्महीपति ॥ ३३ ॥

इत्यादौ भूपतिर्नित्य कर्मण्यासक्तमानस ।
नयेद्दिन तथा रात्रि न तु भोगपरायण ॥ ३४ ॥

राज्ञा शरीरग्रहण न भोगाय महीपते ।
क्लेशाय महते पृथ्वी स्वधर्मपरिपालने ॥ ३५ ॥

सम्यक्पालयत पृथ्वी स्वधर्मं च महीपते ।
इह क्लेशो महान्स्वर्गे परम सुखमक्षयम् ॥ ३६ ॥

तदेतदवबुध्यस्व हित्वा भोगान्नरेश्वर ।
पालनाय क्षिते क्लेशमङ्गीकर्तुमिहार्हसि ॥ ३७ ॥

इति वृत्तमृषीणा यद्व्यसन त्वयि शासति ।
भुजङ्गहेतुक भूप, चारान्धो नापि वेत्सि तत ॥ ३८ ॥

बहुनात्र किमुक्तेन दुष्टे दण्डो निपात्यताम् ।
शिष्टान्पालय राजन्, त्वं धर्मषड्भागमाप्स्यसि ॥ ३९ ॥

अरक्षन्पापमखिलं दुष्टैरविनयात्कृतम् ।
समवाप्स्यस्यसन्दिग्धं यदिच्छसि कुरुष्व तत् ॥ ४० ॥

एतन्मयोक्तं सकलं यत्तवाहं पितामही ।
कुरुष्वैवं स्थिते यत्ते रोचते वसुधाधिप ॥ ४१ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥



मार्कण्डेय उवाच ॥

इति तापसवाक्यं स श्रुत्वा लज्जापरो नृपः ।
धिङ्मां चारान्धमित्युक्त्वा निश्वस्य जगृहे धनु ॥ १ ॥

ततः स त्वरितं गत्वा तमौर्वस्याश्रमं प्रति ।
ववन्दे शिरसा वीर्यं मातरं पितुरात्मनः ॥ २ ॥

तापसांश्च यथान्यायं तैश्चाशीर्भिरभिष्टुतः ।
दृष्ट्वा च तापसान्सत्र नागैर्दष्टान्मृतान्भुवि ॥ ३ ॥

निनिन्दात्मानमसकृत्पुरस्तेषां महीपतिः ।
उवाच चैतदशाहं मद्वीर्यमवमन्यताम् ॥ ४ ॥

यत्करोमि भुजङ्गानां दुष्टानां ब्राह्मणद्विषाम् ।
तत्पश्यतु जगत्सर्वं सदेवासुरमानुषम् ॥ ५ ॥

मार्कण्डेय उवाच ॥

इत्युक्त्वा जगृहे कोपादस्त्र सवर्तक नृप ।
नाशायाशेषनागाना पातालोर्वीविचारिणाम् ॥ ६ ॥

ततो जज्वाल सहसा नागलोक समन्तत ।
महास्त्रतेजसा विप्र, दह्यमानोऽनिवारित ॥ ७ ॥

हा हा तातेति हा मातर्हा हा वत्सेति सभ्रमे ।
तस्मिन्नस्त्रकृते वाच पन्नगानामथाभवन् ॥ ८ ॥

केचिज्ज्वलद्भि पुच्छाग्रै फणैरन्ये भुजङ्गमा ।
गृहीतपुत्रदाराश्च त्यक्ताभरणवासस ॥ ९ ॥

पातालमुत्सृज्य ययु शरण भामिनीं तदा ।
मरुत्तमातर पूर्वं यया दत्त तदाभयम् ॥ १० ॥

तामुपेत्योरगा सर्वे सप्रणाम भयातुरा ।
सगद्गदमिद प्रोचु स्मर्यता न पुरोदितम् ॥ ११ ॥

प्रणम्याभ्यर्थित पूर्वं यदस्माभी रसातले ।
तस्य कालोऽयमायातस्त्राहि वीरप्रजायिनि ॥ १२ ॥

पुत्रो निवार्यता राज्ञि, प्राणै सयोज्यमस्तु न ।
दह्यते सकलो लोको नागानामस्त्रवह्निना ॥ १३ ॥

एव सन्दह्यमानानामस्माक तनयेन ते ।
त्वामृते शरण नान्यत्कृपा कुरु यशस्विनि ॥ १४ ॥

मार्कण्डेय उवाच ॥

इति श्रुत्वा वचस्तेषां संस्मृत्यादौ च भाषितम् ।
भर्तारमाह सा साध्वी ससंभ्रममिदं वचः ॥ १५ ॥

पूर्वमेव तवाख्यातं पाताले यद्भुजङ्गमैः ।
प्रोक्तमभ्यर्थनापूर्वं ममासीत्तनयं प्रति ॥ १६ ॥

त इमेऽभ्यागता भीता दह्यन्ते तस्य तेजसा ।
मामेते शरणं पूर्वं दत्तमेभ्यो मयाभयम् ॥ २७ ॥

ये मां शरणमापन्नास्ते त्वां शरणमागताः ।
अपृथग्धर्मचरणा याताहं शरणं तव ॥ १८ ॥

तन्निवारय पुत्रं त्वं मरुत्तं वचनात्तव ।
मया चाभ्यर्थितोऽवश्यं शममभ्युपयास्यति ॥ १९ ॥

राजोवाच ॥

महापराधो नियतं मरुत्तः क्रोधमागतः ।
दुर्निवर्त्यमहं मन्ये तस्य क्रोधं सुतस्य ते ॥ २० ॥

नागा ऊचुः ॥

शरणागतास्तव वयं प्रसादः क्रियतां नृप ।
क्षत्रस्यार्तपरित्राणनिमित्तं शस्त्रधारणम् ॥ २१ ॥

मार्कण्डेय उवाच ॥

नागानां तद्वचः श्रुत्वा भूतानां शरणैषिणाम् ।
तया चाभ्यर्थितः पत्न्या प्राहाविक्षिन्महायशाः ॥ २२ ॥

गत्वा ब्रवीमि तं भद्रे, तनयं त्वरया तव ।
परित्राणाय नागानां न त्याज्याः शरणागताः ॥ २३ ॥

नोपसंहरते सोऽस्त्रं यदि मद्वचनान्नृपः ।
तदास्त्रैर्वारयिष्यामि तस्यास्त्रं तनयस्य ते ॥ २४ ॥

मार्कण्डेय उवाच ॥

ततो गृहीत्वा स धनुरविक्षित्क्षत्रियोत्तमः ।
भार्यया सहितः प्रायात्त्वरावान्भार्गवाश्रयम् ॥ २५ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥

---

मार्कण्डेय उवाच ॥

स तु तत्र सुतं दृष्ट्वा गृहीतवरकार्मुकम ।
धनुः शस्त्रं च तस्याग्रं ज्वालाव्याप्तदिगन्तरम् ॥ १ ॥

उद्गिरन्तं महावह्निं दीपिताखिलभूतलम् ।
पातालान्तर्गतं प्राप्तमसह्यं घोरभीषणम् ॥ २ ॥

स तं दृष्ट्वा महीपालं भ्रुकुटीकुटिलाननम् ।
मा क्रुधस्त्वं मरुत्तास्त्रमुपसंह्रियतामिति ॥ ३ ॥

प्राहासकृत्पितानुलुप्तवर्णक्रममुदारधीः ।
स निशम्य गुरोर्वाक्यं दृष्ट्वा तं च पुनः पुन. ॥ ४ ॥

गृहीतकार्मुकः पित्रोः प्रणिपत्य सगौरवम् ।
प्रत्युवाचापराद्धा मे सुभृशं पन्नगाः पितः ॥ ५ ॥

शासतीमां मयि महीं परिभूय बलं मम ।
सप्ताश्रममुपागम्य दष्टा मुनिकुमारकाः ॥ ६ ॥

ऋषीणामाश्रमस्थानाममर्षीपामवनीपते ।
मयि शासति दुर्वृत्तैर्दूषितानि हवींषि च ॥ ७ ॥

जलाशयास्तथाप्येतै. सर्वं एव हि दूषिता· ।
तदेतत्कारणं किंचिन्न वक्तव्यं त्वया पितः ।
न निवारयितव्योऽहं महाघ्नान्प्रति पन्नगान् ॥ ८ ॥

अविक्षिदुवाच ॥

यद्येभिर्निहता विप्रा यास्यन्ति नरकं मृताः ।
ममैतत्क्रियतां वाक्यं विरमास्त्रप्रयोगतः ॥ ९ ॥

मरुत्त उवाच ॥

नाहमेषां क्षमिष्यामि दुष्टानामपराधिनाम् ।
अहमेव गमिष्यामि नरकं यदि पापिनां ।
न निग्रहे यताम्येषां मां निवारय मा पित ॥ १० ॥

अविक्षिदुवाच ॥

मामेते शरणं प्राप्ताः पन्नगा मम गौरवात् ।
उपसंह्रियतामस्त्रमलं कोपेन ते नृप ॥ ११ ॥

मरुत्त उवाच ॥

नाहमेषां क्षमिष्यामि दुष्टानामपराधिनाम् ।
स्वधर्ममुत्क्रम्य कथं करिष्यामि वचस्तव ॥ १२ ॥

दण्ड्ये निपातयन्दण्डं भूपः शिष्टांश्च पालयन् ।
पुण्यलोकानवाप्नोति नरकांश्चाप्युपेक्षणात् ॥ १३ ॥

मार्कण्डेय उवाच ॥

एवं स बहुशः पित्रा वार्यमाणोऽम्बया सह ।
नोपसंहरते सोऽस्त्रं ततोऽसौ पुनरब्रवीत् ॥ १४ ॥

हिंससे पन्नगान्भीतान्ममैताञ्छरणं गतान् ।
वार्यमाणोऽपि तस्मात्ते करिष्यामि प्रतिक्रियाम् ॥ १५ ॥

मयाप्यस्त्राण्यवाप्तानि न त्वमेकोऽस्त्रविद्भुवि ।
ममाग्रतः सुदुर्वृत्त, पौरुषं च कियत्तव ॥ १६ ॥

ततः कार्मुकमारोप्य कोपताम्रविलोचनः ।
अविक्षिदस्त्रं जग्राह कालस्य मुनिपुङ्गव ॥ १७ ॥

ततो ज्वालापरीवारमरिसङ्घान्नमुत्तमम् ।
कालास्त्रं तु महावीर्यं योजयामास कार्मुके ॥ १८ ॥

ततश्चुक्षोभ जगती संवर्तास्त्रप्रतापिता ।
साब्धिशैलाखिला विप्र, कालस्यास्त्रे समुद्यते ॥ १९ ॥

मार्कण्डेय उवाच ॥

कालास्त्रमुद्यतं पित्रा मरुत्तः सोऽपि वीक्ष्य तत् ।
प्राहोग्रैरस्त्रमेतन्मे दुष्टशास्तिसमुद्यतम् ॥ २० ॥

न त्वद्वधाय कालास्त्रं मयि मुञ्चति किं भवान् ।
स्वधर्मचारिणि सुते मदैवाज्ञाकरे तव ॥ २१ ॥

ततो द्विजैरनुज्ञातौ वीरया च नरेश्वरौ ।
समारूढौ रथं साकं सन्तुष्टौ स्वपुर गतौ ॥ ४० ॥

वीरापि कृत्वा सुमहत्तपो धर्मभृतां वरा ।
भर्तुः सलोकतां प्राप्ता महाभागा पतिव्रता ॥ ४१ ॥

मरुत्तोऽपि चकारोर्व्या धर्मतः परिपालनम् ।
विनिर्जितारिषड्वर्गो भोगांश्च बुभुजे नृप. ॥ ४२ ॥

एवंवीर्यो मरुत्तोऽभून्महाराजो महाबलः ।
तस्याप्रतिहतं चक्रमासीद्वीपेषु सप्तसु ॥ ४३ ॥

यस्य तुल्योऽपरो राजा न भूतो न भविष्यति ।
सत्यविक्रमयुक्तस्य राजर्षेरमितौजसः ॥ ४४ ॥

स्यैतच्चरितं श्रुत्वा मरुत्तस्य महात्मनः ।
न्म चाग्र्यं द्विजश्रेष्ठ. मुच्यते सर्वकिल्बिषैः ॥ ४५ ॥

इति तृतीयोऽध्यायः

इति श्रीमार्कण्डेयपुराणे मरुत्तचरिते
१२६—१२८ अध्यायाः ॥

# ॥ नकुलोपाख्यानम् ॥



जनमेजय उवाच ॥

पितामहस्य मे यज्ञे धर्मराजस्य धीमत ।
यदाश्चर्यमभूत्किचित्तद्भवान्वक्तुमर्हति ॥ १ ॥

वैशम्पायन उवाच ॥

श्रूयता राजशार्दूल, महदाश्चर्यमुत्तमम ।
अश्वमेधे महायज्ञे निर्वृत्ते यदभूत्प्रभो ॥ २ ॥

तर्पितेषु द्विजाग्र्येषु ज्ञातिसम्बन्धिबन्धुषु ।
दीनान्धकृपणे वापि तदा भरतसत्तम ॥ ३ ॥

घुष्यमाणे महादाने दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्द्धनि ॥ ४ ॥

नीलाक्षस्तत्र नकुलो रुक्मपार्श्वस्तदानघ ।
वज्राशनिसम नादममुञ्चद्वसुधाधिप ॥ ५ ॥

सकृदुत्सृज्य तन्नाद त्रासयानो मृगद्विजान् ।
मानुष वचन प्राह धृष्टो बिलशयो महान ॥ ६ ॥

सक्तुप्रस्थेन वो नाय यज्ञस्तुल्यो नराधिपा ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिन ॥ ७ ॥

तस्य तद्वचन श्रुत्वा नकुलस्य विशांपते ।
विस्मय परम जग्मु सर्वे ते ब्राह्मणर्षभा ॥ ८ ॥

मया कार्यं महाभाग प्रजानां परिपालनम् ।
त्वयैवं क्रियते कस्मान्मद्वधायास्त्रमुद्यतम् ॥ २२ ॥

अविक्षिदुवाच ॥

शरणागतसन्त्राणं कर्तुं व्यवसिता वयम् ।
तस्य व्याघातकर्ता त्वं न मे जीवन्विमोक्ष्यसे ॥ २३ ॥

मां वा हत्वास्त्रवीर्येण जहि दुष्टानिहोरगान् ।
त्वां वा हत्वाहमस्त्रेण रक्षिष्यामि महोरगान् ॥ २४ ॥

धिक्तस्य जीवितं पुंसः शरणार्थिनमागतम् ।
यो नार्तमनुगृह्णाति वैरिपक्षमपि ध्रुवम् ॥ २५ ॥

क्षत्रियोऽहमिमे भीताः शरणं मामुपागताः ।
अपकर्ता त्वमेवैषां कथं वध्यो न मे भवान् ॥ २६ ॥

मरुत्त उवाच ॥

मित्रं वा बान्धवो वापि पिता वा यदि वा गुरुः ।
प्रजापालनविघ्नाय यो हन्तव्यः स भूभृता ॥ २७ ॥

सोऽहं ते प्रहरिष्यामि न क्रोद्धव्यं त्वया पितः ।
स्वधर्मः परिपाल्यो मे न मे क्रोधस्तवोपरि ॥ २८ ॥

मार्कण्डेय उवाच ॥

ततस्तौ निश्चितौ दृष्ट्वा परस्परवधं प्रति ।
समुत्पत्यान्तरे तस्थुर्मुनयो भार्गवादयः ॥ २९ ॥

ऊचुश्चैनं न मोक्तव्यं त्वयास्त्रं पितरं प्रति ।
त्वया च नायं हन्तव्यः पुत्रः प्रख्यातचेष्टितः ॥ ३० ॥

मरुत्त उवाच ॥

मया दुष्टा निहन्तव्याः सन्तो रक्ष्या महीक्षिता ।
इमे च दुष्टा भुजगाः कोऽपराधोऽत्र मे द्विजा ॥ ३१ ॥

अविक्षिदुवाच ॥

शरणागतसन्त्राणं मया कार्यमय च मे ।
अपराध्य. सुतो विप्राः, यो हन्ति शरणागतान् ॥ ३२ ॥

ऋषय ऊचु ॥

इमे वदन्ति भुजगास्त्रासलोलविलोचनाः ।
सञ्जीवयामस्तान्विप्रान्ये दष्टा दुष्टपन्नगैः ॥ ३३ ॥

तदल विग्रहेणोभौ राजवर्यौ प्रसीदताम् ।
उभावपि विनिर्व्यूढप्रतिज्ञौ धर्मकोविदौ ॥ ३४ ॥

मार्कण्डेय उवाच ॥

सा तु वीरा समभ्येत्य पुत्रमेतदभाषत ।
मद्वाक्यादेष ते पुत्रो हन्तु नागान्कृतोद्यमः ॥ ३५ ॥

तन्निष्पन्न यदा विप्रास्ते जीवन्ति तथा मृता. ।
सर्जीवन्तश्च मुच्यन्ते यद्युष्मच्छरण गताः ॥ ३६ ॥

तत सजीवयामासुस्तान्विप्रांस्ते भुजङ्गमा ।
दिव्यैरोपधिजातैश्च विषसहरणेन च ॥ ३७ ॥

पित्रोर्ननाम चरणौ स ततो जगतीपति ।
मरुत्तश्च स तं प्रीत्या परिष्वज्येदमब्रवीत् ॥ ३८ ॥

मानहा भव शत्रूणां चिर पालय मेदिनीम् ।
पुत्रपौत्रैश्च मोदस्व मा च ते सन्तु विद्विष. ॥ ३९ ॥

तत समेत्य नकुल पर्यपृच्छन्त ते द्विजा ।
कुतस्त्व समनुप्राप्तो यज्ञ साधु समागतम् ॥ ९ ॥

किं वल परम तुभ्य किं श्रुत किं परायणम् ।
कथ भवन्त विद्याम यो नो यज्ञ विगर्हसे ॥ १० ॥

अविलुप्यागम कृत्स्न विविधैर्यज्ञियै कृतम् ।
यथागम यथान्याय कर्तव्य च तथा कृतम ॥ ११ ॥

पूजार्हा पूजिताश्चात्र विधिवच्छास्त्रदर्शनात् ।
मन्त्राहुतिहुतश्चाग्निर्दत्त देयममत्सरम ॥ १२ ॥

तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहा ॥ १३ ॥

पालनेन विशस्तुष्टा कामैस्तुष्टा वरस्त्रिय ।
अनुक्रोशैस्तथा शूद्रा दानशेषै पृथक्जना ॥ १४ ॥

ज्ञातिसवन्धिनस्तुष्टा शौचेन च नृपस्य न ।
देवा हविर्भि पुण्यैश्च रक्षणै शरणागता ॥ १५ ॥

यदत्र तथ्य तद्ब्रूहि सत्य सत्य द्विजातिषु ।
यथाश्रुत यथादृष्ट पृष्टो ब्राह्मणकाम्यया ॥ १६ ॥

श्रद्धेयवाक्य प्राजस्त्व दिव्यरूप बिभर्षि च ।
समागतश्च विप्रैस्त्व तद्भवान्वक्तुमर्हति ॥ १७ ॥

इति पृष्टो द्विजैस्तै स प्रहसन्नकुलोऽब्रवीत् ।
नैषा मृषा मया वाणी प्रोक्ता दर्पेण वै द्विजा ॥ १८ ॥

यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् ।
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ॥ १९ ॥

इत्यवश्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः ।
शृणुताव्यग्रमनसः शंसतो मे यथातथम् ॥ २० ॥

अनुभूतं च दृष्टं च यन्मयाऽद्भुतमुत्तमम् ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥ २१ ॥

स्वर्गं यथा द्विजः प्राप्तः सभार्यः ससुतस्नुषः ।
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ २२ ॥

नकुल उवाच ॥

हन्त वो वर्तयिष्यामि दानस्य फलमुत्तमम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः ॥ २३ ॥

धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्तदा ॥ २४ ॥

सभार्यः सह पुत्रेण सस्नुषस्तपसि स्थितः ।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ २५ ॥
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह सुव्रतः ।
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ॥ २६ ॥
भुङ्क्तेऽन्यस्मिन्कदाचित्सः षष्ठे काले द्विजोत्तम ।
कदाचिद्धर्मिणस्तस्य दुर्भिक्षे सति दारुणे ॥ २७ ॥
नाविद्यत तदा विप्राः संचयस्तन्निबोधत ।
क्षीणौषधिसमावेशे द्रव्यहीनोऽभवत्तदा ॥ २८ ॥

काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम् ।
क्षुधा परिगताः सर्वे प्रातिष्ठन्त तदा तु ते ॥ २९ ॥

उञ्छं तदा शुक्लपक्षे मध्यं तपति भास्करे ।
उष्णार्तश्च क्षुधार्तश्च विप्रस्तपसि संस्थितः ॥ ३० ॥

उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः ।
स तथैव क्षुधाविष्टः सार्धं परिजनेन ह ॥ ३१ ॥

क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ।
अथ षष्ठे गते काले यवप्रस्थमुपार्जयत् ॥ ३२ ॥

यवप्रस्थं तु तं सक्तूनकुर्वत तपस्विनः ।
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ॥ ३३ ॥

कुडवं कुडवं सर्वे व्यभजन्त तपस्विनः ।
अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा ॥ ३४ ॥

ते तं दृष्ट्वातिथिं प्राप्तं प्रहृष्टमनसोऽभवन् ।
तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ॥ ३५ ॥

विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ।
अनसूया जितक्रोधाः साधवो वीतमत्सराः ॥ ३६ ॥

त्यक्तमानमदक्रोधा धर्मज्ञा द्विजसत्तमाः ।
स ब्रह्मचर्यं गोत्रं ते तस्य ख्यात्वा परस्परम् ॥ ३७ ॥

कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ।
[illegible] ॥

शुचय सक्तवश्चेमे नियमोपार्जिता प्रभो ।
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजर्षभ ॥ ३९ ॥

इत्युक्त प्रतिगृह्याथ सक्तूना कुडव द्विज ।
भक्षयामास राजेन्द्र, न च तुष्टिं जगाम स ॥ ४० ॥

स उञ्छवृत्तिस्त प्रेक्ष्य क्षुधा परिगत द्विजम् ।
आहार चिन्तयामास कथ तुष्टो भवेदिति ॥ ४१ ॥

तस्य भार्याब्रवीद्वाक्य मद्भागो दीयतामिति ।
गच्छत्वेष यथाकाम परितुष्टो द्विजोत्तम ॥ ४२ ॥

इति ब्रुवन्तीं ता साध्वीं भार्या स्वा स द्विजोत्तम ।
क्षुधा परिगता ज्ञात्वा तान्सक्तून्नाभ्यनन्दत ॥ ४३ ॥

आत्मानुमानतो विद्वान्स तु विप्रर्षभस्तदा ।
जानन्वृद्धा क्षुधार्ता च श्रान्ता ग्लाना तपस्विनीम् ॥ ४४ ॥

त्वगस्थिभूता वेपन्तीं ततो भार्यामुवाच ह ।
अपि कीटपतङ्गाना मृगाणा चैव शोभने ॥ ४५ ॥

स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेव वक्तुमर्हसि ।
अनुकम्प्यो नर पत्न्या पुष्टो रक्षित एव च ॥ ४६ ॥

प्रपतेद्यशसो दीप्तात्स च लोकान्न चाप्नुयात् ।
धर्मकामार्थकार्याणि शुश्रूषा कुलसन्ततिः ॥ ४७ ॥

दारेष्वधीनो धर्मश्च पितॄणामात्मनस्तथा ।
न वेत्ति धर्मतो भार्यां रक्षणे योऽक्षम पुमान् ॥ ४८ ॥

अयशो महदाप्नोति नरकांश्चैव गच्छति ।
इत्युक्ता सा तत. प्राह धर्मार्थौ नौ समौ द्विज ॥ ४९ ॥

सक्तुप्रस्थचतुर्भागं गृहाणेदं प्रसीद मे ।
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ॥ ५० ॥

स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजर्षभ ।
ऋतुर्मातु. पितुर्बीजं दैवतं परमं पतिः ॥ ५१ ॥

भर्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ।
पालनाद्धि पतिस्त्वं मे भर्तासि मरणाच्च मे ॥ ५२ ॥

पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्प्रयच्छ मे ।
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम ॥ ५३ ॥

उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ।
इत्युक्तः स तया सक्तून् प्रगृह्येदं वचोऽब्रवीत् ॥ ५४

द्विज, सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम ।
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ५५ ॥

पुत्र उवाच ॥

सक्तूनिमान प्रगृह्य त्वं देहि विप्राय सत्तम ।
इत्येव सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥ ५६ ॥

भवान हि परिपाल्यो मे सर्वदैव प्रयत्नतः ।
साधूनां काङ्क्षितं यस्मात पितुर्वृद्धस्य पालनम् ॥ ५७ ॥

पुत्रार्थे विहितो ह्येष वार्द्धके परिपालनम् ।
श्रुतिरेषा हि विप्रर्षे, त्रिषु लोकेषु शाश्वती ॥ ५८ ॥

प्राणधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ॥ ५९ ॥

पितोवाच ॥

अपि वर्षसहस्री त्वं बालस्त्वं मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत्सुतात् ॥ ६० ॥

बालानां क्षुद्बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ६१ ॥

जीर्णं तु वयसा पुत्र, न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ६२ ॥

पुत्र उवाच ॥

अपत्यमस्मि ते पुंसस्त्राणात्पुत्र इति स्मृतः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥ ६३ ॥

पितोवाच ॥

रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥ ६४ ॥

इत्युक्त्वाऽदाय तान् सक्तून्प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ६५ ॥

भुक्त्वा तानपि सक्तून् स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ ६६ ॥

तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ॥ ६७ ॥

सन्तानात्तव सन्तानं मम विप्र, भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे ॥ ६८ ॥

तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः ।
पुत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ६९ ॥

धर्माद्याहि यथा त्रेता वह्निस्त्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेताः किलाक्षयाः ॥ ७० ॥

पितॄनृणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं साधु लोकानुपाश्नुते ॥ ७१ ॥

श्वशुर उवाच ॥

वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै ।
कर्शितां सुव्रताचारे, क्षुधा विह्वलचेतसम् ॥ ७२ ॥

कथं सक्तून् ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि, नैवं त्वं वक्तुमर्हसि ॥ ७३ ॥

षष्ठे काले व्रतवतीं शौचशीलतपोऽन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ॥ ७४ ॥

बाला क्षुधार्ता नारी च रक्ष्या त्व सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ ७५ ॥

स्नुषोवाच ॥

गुरोर्मम गुरुस्त्वं वै यतो दैवं तु दैवतम् ।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो ॥ ७६ ॥

देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः ।
तव विप्र, प्रसादेन लोकान् प्राप्स्यामहे शुभान् ॥ ७७ ॥

अवेक्ष्या इति कृत्वाहं दृढभक्तेति वा द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ॥ ७८ ॥

श्वशुर उवाच ॥

अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ॥ ७९ ॥

तस्मात्सक्तून् ग्रहीष्यामि वधु, नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे, त्वां हि धर्मभृतां वरे ॥ ८० ॥

इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजाय ते ।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ॥ ८१ ॥

प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ॥ ८२ ॥

शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः ।
यथाशक्ति विसृष्टेन प्रीतोऽस्मि द्विजसत्तम ।
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ॥ ८३ ॥

गगनात्पुष्पवर्षं च पश्येद् पतितं भुवि ।
सुरर्षिदेवगन्धर्वा ये च देवपुरस्सराः ॥ ८४ ॥

स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिता ।
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये ॥ ८५ ॥

काङ्क्षन्ते दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ।
पितृलोकगता सर्वे तारिता पितरस्त्वया ॥ ८६ ॥

अनागताश्च बहव सुबहूनि युगान्युत ।
ब्रह्मचर्येण दानेन यज्ञेन तपसा तथा ॥ ८७ ॥

असकरेण धर्मेण तस्माद्गच्छ दिवं द्विज ।
श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत ॥ ८८ ॥

तस्माद्देवाश्च दानेन प्रीता ब्राह्मणसत्तम ।
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा ॥ ८९ ॥

कृच्छ्रकाले तत स्वर्गो विजित कर्मणा त्वया ।
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति ॥ ९० ॥

क्षुधा परिगतज्ञानो धृतिं त्यजति चैव ह ।
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ॥ ९१ ॥

यदा दानरुचि स्याद्वै तदा धर्मो न सीदति ।
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ॥ ९२ ॥

धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ।
द्रव्यागमे नृणां सूक्ष्मं पात्रे दानं तत परम् ॥ ९३ ॥

कालः परतरो दानाच्छ्रद्धा चैव तत परा ।
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ॥ ९४ ॥

स्वर्गार्गल लोभबीज रागगुप्त दुरासदम् ।
त तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रिया ॥ ९५ ॥

ब्राह्मणास्तपसा युक्ता यथाशक्ति प्रदायिन ।
सहस्रशक्तिश्च शत शतशक्तिर्दशापि च ॥ ९६ ॥

दद्यादपश्च य शक्त्या सर्वे तुल्यफला स्मृता ।
रन्तिदेवो हि नृपतिरप प्रादादकिंचन ॥ ९७ ॥

शुद्धेन मनसा विप्र, नाकपृष्ठ ततो गत ।
न धर्म प्रीयते तात, दानैर्दत्तैर्महाफलै ॥ ९८ ॥

न्यायलब्धैर्यथा सूक्ष्मै श्रद्धापूतै स तुष्यति ।
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृप ॥ ९९ ॥

एका दत्त्वा स पारक्या नरक समपद्यत ।
आत्ममासप्रदानेन शिबिरौशीनरो नृप ॥ १०० ॥

प्राप्य पुण्यकृता लोकान् मोदते दिवि सुव्रत ।
विभवो न नृणा पुण्य स्वशक्त्या स्वर्जित सताम् ॥ १०१ ॥

न यज्ञैर्विविधैर्विप्र, यथान्यायेन संचितै ।
क्रोधाद्दानफल हन्ति लोभात्स्वर्ग न गच्छति ॥ १०२ ॥

न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ।
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणै ॥ १०३ ॥

न चाश्वमेधैर्बहुभि फल सममिद तव ।
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाक्षय ॥ १०४ ॥

विरजो ब्रह्मसदन गच्छ विप्र, यथासुखम् ।
सर्वेषा वो द्विजश्रेष्ठ, दिव्य यानमुपस्थितम् ॥ १०५ ॥

आरोहत यथाकाम धर्मोऽस्मि द्विज, पश्य माम् ।
तारितो हि त्वया देहो लोके कीर्ति स्थिरा च ते ॥ १०६ ॥

सभार्य सहपुत्रश्च सस्नुपश्च दिव व्रज ।
इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विज ॥ १०७ ॥

सदार ससुतश्चैव सस्नुपश्च दिव गत ।
तस्मिन्विप्रे गते स्वर्गं ससुते सस्नुपे तदा ॥ १०८ ॥

भार्याचतुर्थे धर्मज्ञे ततोऽह निसृतो बिलात् ।
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ॥ १०९ ॥

दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तै ।
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम ॥ ११० ॥

तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह ।
शरीरार्धं च मे विप्रा, शातकुम्भमय कृतम ॥ १११ ॥

पश्यतेम सुविपुल तपसा तस्य धीमत ।
कथमेवविध स्याद्वै पार्श्वमन्यदिति द्विजा ॥ ११२ ॥

तपोवनानि यज्ञाश्च हृष्टोऽभ्येमि पुन पुन ।
यज्ञ त्वहमिम श्रुत्वा कुरुराजस्य धीमत ॥ ११३ ॥

आशया परया प्राप्तो न चाह काञ्चनीकृत ।
ततो मयोक्त तद्वाक्य प्रहस्य ब्राह्मणर्षभा ॥ ११४ ॥

सक्तुप्रस्थेन यज्ञोऽयं सम्मितो नेति सर्वथा ।
सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृतः ॥ ११५ ॥

न हि यज्ञो महानेष सदृशस्तैर्मतो मम ।
इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरांस्तथा ।
जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ॥ ११६ ॥

वैशम्पायन उवाच ॥

एतत्ते सर्वमाख्यातं मया परपुरञ्जय ।
यदाश्चर्यमभूत्तत्र वाजिमेधे महाक्रतौ ॥ ११७ ॥

न विस्मयस्ते नृपते, यज्ञे कार्यः कथंचन ।
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥ ११८ ॥

अद्रोहः सर्वभूतेषु सन्तोषः शीलमार्जवम् ।
तपो दमश्च सत्यं च प्रदानं चेति सम्मितम् ॥ ११९ ॥

इति श्रीमहाभारते अश्वमेधपर्वणि नकुलोपाख्याने
नवतितमोऽध्यायः

## ॥ युधिष्ठिरशक्रसंवादः ॥



वैशम्पायन उवाच ॥

ततः सनादयञ्छक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच तम् ॥ १ ॥

स्वभ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसन्तप्तः सहस्राक्षमिदं वचः ॥ २ ॥

भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥ ३ ॥

सुकुमारी सुखार्हा च राजपुत्री पुरंदर ।
साम्माभि. मह गच्छेत तद्भवाननुमन्यताम् ॥ ४ ॥

शक्र उवाच ॥

भ्रातॄन्द्रक्ष्यमि स्वर्गे त्वमग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ॥ ५ ॥

निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ ६ ॥

युधिष्ठिर उवाच ॥

अयं श्वा भूतभव्येश, भक्तो मां नित्यमेव हि ।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ॥ ७ ॥

प्राणत्यागादप्यहं नैव मोक्तुं
यतेयं वै नित्यमेतद्व्रतं मे ॥ १२ ॥

इन्द्र उवाच ॥

शुना दृष्टं क्रोधवशा हरन्ति
यद्दत्तमिष्टं विवृतमथो हुतं च ।
तस्माच्छुनस्त्यागमिमं कुरुष्व
शुनस्त्यागात्प्राप्स्यसे देवलोकम् ॥ १३ ॥

त्यक्त्वा भ्रातॄन्दयितां चापि कृष्णां
प्राप्तो लोकः कर्मणा स्वेन वीर ।
श्वानं चैनं न त्यजसे कथं नु
त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ १४ ॥

युधिष्ठिर उवाच ॥

न विद्यते संधिरथापि विग्रहो
मृतैर्मर्त्यैरिति लोकेषु निष्ठा ।
न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो न जीवताम् ॥ १५

भीतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र,
भक्तत्यागश्चैव समो मतो मे ॥ १६ ॥

वैशम्पायन उवाच ॥

तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच ।

युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ १७ ॥

धर्मराज उवाच ॥

अभिजातोऽसि राजेन्द्र, पितुर्वृत्तेन मेधया।
अनुक्रोशेन चानेन सर्वभूतेषु भारत ॥ १८ ॥

पुरा द्वैतवने चासि मया पुत्र,परीक्षितः।
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ॥ १९ ॥

भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ।
मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि ॥ २० ॥

अयं श्वा भक्त इत्येवं त्यक्तो देवरथस्त्वया।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिपः ॥ २१ ॥

अतस्तवाक्षया लोकाः स्वशरीरेण भारत।
प्राप्तोऽसि भरतश्रेष्ठ, दिव्यां गतिमनुत्तमाम् ॥ २२ ॥

वैशम्पायन उवाच ॥

ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ २३ ॥

प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः।
सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्मिणः ॥ २४ ॥

स तं रथं समास्थाय राजा कुरुकुलोद्वहः।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसावृत्य रोदसी ॥ २५ ॥

ततो देवनिकायस्थो नारदः सर्वलोकवित् ।
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपा. ॥ २६ ॥

येऽपि राजर्षयः सर्वे ते चापि समुपस्थिताः ।
कीर्तिं प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ॥ २७ ॥

लोकानावृत्य यशसा तेजसा वृत्तसंपदा ।
स्वशरीरेण संप्राप्तं नान्यं शुश्रुम पाण्डवात् ॥ २८ ॥

तेजांसि यानि दृष्टानि भूमिष्ठेन त्वया विभो ।
वेश्मानि भुवि देवानां पश्यामूनि सहस्रशः ॥ २९ ॥

नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत् ।
देवानामन्त्र्य धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ॥ ३० ॥

शुभं वा यदि वा पापं भ्रातृणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि लोकानन्यान्न कामये ॥ ३१ ॥

राज्ञस्तु वचनं श्रुत्वा देवराजः पुरंदरः ।
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ॥ ३२ ॥

स्थानेऽस्मिन्वस राजेन्द्र, कर्मभिर्निर्जिते शुभैः ।
किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ॥ ३३ ॥

सिद्धिं प्राप्तोऽसि परमां यथा नान्यः पुमान्कचित् ।
नैव ते भ्रातरः स्थानं सम्प्राप्ताः कुरुनन्दन ॥ ३४ ॥

अद्यापि मानुषो भावः स्पृशते त्वां नराधिप ।
स्वर्गोऽयं पश्य देवर्षीन्सिद्धांश्च त्रिदिवालयान् ॥ ३५ ॥

युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम्।
पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत्॥ ३६॥

तैर्विना नोत्सहे वस्तुमिह दैत्यनिवर्हण।
गन्तुमिच्छामि तत्राहं यत्र ते भ्रातरो गताः॥ ३७॥

यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता।
द्रौपदी योषितां श्रेष्ठा यत्र चैव गता मम॥ ३८॥

इति श्रीमहाभारते महाप्रस्थानिकपर्वणि युधिष्ठिरस्वर्गारोहे
तृतीयोऽध्यायः॥

# ॥ शिबिचरित्रम् ॥

लोमश उवाच ॥

एष उज्जानको नाम पावकिर्यत्र शान्तवान् ।
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ १ ॥

ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥ २ ॥

समाधीनां समासस्तु पाण्डवेय, श्रुतस्त्वया ।
तद्द्रक्ष्यसि महाराज, भृगुतुङ्गं महागिरिम् ॥ ३ ॥

वितस्तां पश्य राजेन्द्र, सर्वपापप्रमोचनीम् ।
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ॥ ४ ॥

जलां चोपजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ ५ ॥

तां देवसमितिं तस्य वासवश्च विशां पते ।
अभ्यागच्छन्नृपवरं ज्ञातुमग्निश्च भारत ॥ ६ ॥

जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ॥ ७ ॥

ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ।
शरणार्थी तदा राजन, निलिल्ये भयपीडितः ॥ ८ ॥

इति प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥

श्येन उवाच ॥

धर्मात्मानं त्वाहुरेकं सर्वे राजन्, महीक्षितः ।
स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि ॥ १ ॥

विहितं भक्षणं राजन्, पीड्यमानस्य मे क्षुधा ।
मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि ॥ २ ॥

राजोवाच ॥

सन्त्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ३ ॥

एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदानं परं धर्मं कथं श्येनेह पश्यसि ॥ ४ ॥

प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन, लक्ष्यते ।
मत्सकाशे जीवितार्थी तस्य त्यागो विगर्हितः ॥ ५ ॥

यो हि कश्चिद्द्विजान्हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च त्यजते तुल्यं तेषां हि पातकम् ॥ ६ ॥

श्येन उवाच ॥

आहारात्सर्वभूतानि संभवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ७ ॥

शक्येत दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ८ ॥

भक्ष्याद्वियोजितस्याद्य मम प्राणा विशां पते ।
विसृज्य कायमेष्यन्ति पन्थानमकुतोभयम् ॥ ९ ॥

प्रमृते मयि धर्मात्मन्, पुत्रदारादि नङ्क्ष्यति ।
रक्षमाणः कपोतं त्व बहून्प्राणान्न रक्षसि ॥ १० ॥

धर्मं यो बाधते धर्मो न स धर्मः कुवर्त्म तत् ।
अविरोधात्तु यो धर्म. स धर्मः सत्यविक्रम ॥ ११ ॥

विरोधिषु महीपाल, निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र त धर्मं समुपाचरेत् ॥ १२ ॥

गुरुलाघवमादाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन, कुरु धर्मविनिश्चयम् ॥ १३ ॥

राजोवाच ॥

बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षिराट् किं त्वं धर्मज्ञश्चास्यसंशयम् ॥ १४ ॥

तथा हि धर्मसंयुक्त बहुचित्र च भाषसे
न तेऽस्त्यविदितं किंचिदिति त्वां लक्षयाम्यहम ॥ १५ ॥

शरणेऽपि परित्यागं कथं साध्विति मन्यसे ।
आहारार्थं समारम्भस्तव चायं विहङ्गम ॥ १६ ॥

शक्यश्चाप्यन्यथाकर्तुमाहारोऽप्यधिकस्त्वया ।
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि ॥ १७ ॥

श्येन उवाच ॥

न वराहं न चोक्षाणं न मृगान्विविधांस्तथा ।
भक्षयामि महाराज, किं ममान्येन केनचित् ॥ १८ ॥

यस्तु मे देवविहितो भक्ष्यः क्षत्रियपुङ्गव ।
तमुत्सृज महीपाल, कपोतमिममेव मे ॥ १९ ॥

श्येनः कपोतानत्तीति स्थितिरेषा सनातनी ।
मा राजन्, सारमज्ञात्वा कदलीस्कन्धमासज ॥ २० ॥

राजोवाच ॥

राष्ट्रं शिवीनामृद्धं वै ददानि तव खेचर ।
यं वा कामयसे कामं श्येन, सर्वं ददानि ते ॥ २१ ॥

विनेमं पक्षिणं श्येन, शरणार्थिनमागतम् ।
येनेमं वर्जयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् ॥ २२ ॥

श्येन उवाच ॥

उशीनर, कपोते ते यदि स्नेहो नराधिप।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥ २३ ॥

यदा समं कपोतेन तव मांसं नृपोत्तम ।
तदा देयं तु तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ २४ ॥

राजोवाच ॥

अनुग्रहमिमं मन्ये श्येन, यन्माभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥ २५ ॥

लोमश उवाच ॥

उत्कृत्य स स्वयं मांस राजा परमधर्मवित् ।
तुलयामास कौन्तेय, कपोतेन समं विभो ॥ २६ ॥

ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २७ ॥

न विद्यते यदा मांस कपोतेन सम धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ २८ ॥

श्येन उवाच ॥

इन्द्रोऽहमस्मि धर्मज्ञ, कपोतो हव्यवाडयम ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥ २९ ॥

यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशां पते ।
एषा ते भास्वती कीर्तिर्लोकानभिभविष्यति ॥ ३० ॥

यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥ ३१ ॥

इत्येवमुक्त्वा राजानमारुरोह दिवं पुनः ।
उशीनरोऽपि धर्मात्मा धर्मेणावृत्य रोदसी ॥ ३२ ॥

विभ्राजमानो वपुषाप्यारुरोह त्रिविष्टपम ।
तदेतत्सदनं राजन , राज्ञस्तस्य महात्मनः ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम ॥ ३३ ॥

इति श्रीमहाभारते आरण्यपर्वणि लोमशतीर्थयात्रापर्वणि श्येनकपोतीये एकत्रिंशदधिकशततमोऽध्यायः ॥

# ॥ व्याधकपोतवृत्तान्तः ॥

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरण पाल्यमानस्य यो धर्मस्त नवीहि मे ॥ १ ॥

भीष्म उवाच ॥

महान्धर्मो महाराज, शरणागतपालने ।
अर्हं प्रष्टु भवाश्चैव प्रश्न भरतसत्तम ॥ २ ॥

शिबिप्रभृतयो राजन्, राजान शरणागतान ।
परिपाल्य महात्मान ससिद्धि परमा गता ॥ ३ ॥

श्रूयते च कपोतेन शत्रु शरणमागत ।
पूजितश्च यथान्याय स्वैश्च मासैनिमन्त्रित ॥ ४ ॥

युधिष्ठिर उवाच ॥

कथ कपोतेन पुरा शत्रु शरणमागत ।
स्वमास भोजित का च गति लेभे स भारत ॥ ५ ॥

भीष्म उवाच ॥

शृणु राजन, कथा दिव्या सर्वपापप्रणाशिनीम ।
नृपतेर्मुचुकुन्दस्य कथिता भार्गवेण वै ॥ ६ ॥

इममर्थ पुरा पार्थ मुचुकुन्दो नराधिप ।
भार्गव परिपप्रच्छ प्रणत पुरुषर्षभ ॥ ७ ॥

लोमश उवाच ॥

उत्कृत्य स स्वयं मांस राजा परमधर्मवित् ।
तुलयामास कौन्तेय, कपोतेन समं विभो ॥ २६ ॥

म्रियमाण: कपोतस्तु मांसेनात्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २७ ॥

न विद्यते यदा मांसं कपोतेन सम धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ २८ ॥

श्येन उवाच ॥

इन्द्रोऽहमस्मि धर्मज्ञ, कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥ २९ ॥

यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशां पते ।
एषा ते भास्वती कीर्तिर्लोकानभिभविष्यति ॥ ३० ॥

यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वता: ॥ ३१ ॥

इत्येवमुक्त्वा राजानमारुरोह दिवं पुन: ।
उशीनरोऽपि धर्मात्मा धर्मेणावृत्य रोदसी ॥ ३२ ॥

विभ्राजमानो वपुषाप्यारुरोह त्रिविष्टपम् ।
तदेतत्सदनं राजन, राज्ञस्तस्य महात्मन: ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम् ॥ ३३ ॥

इति श्रीमहाभारते आरण्यपर्वणि लोमशतीर्थयात्रापर्वणि श्येनकपोतीये एकत्रिंशदधिकशततमोऽध्याय: ॥

---

# ॥ व्याधकपोतवृत्तान्तः ॥

युधिष्ठिर उवाच ॥

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरण पाल्यमानस्य यो धर्मस्त ब्रवीहि मे ॥ १ ॥

भीष्म उवाच ॥

महान्धर्मो महाराज, शरणागतपालने ।
अर्हं प्रष्टु भवाश्चैव प्रश्न भरतसत्तम ॥ २ ॥

शिविप्रभृतयो राजन्, राजान शरणागतान ।
परिपाल्य महात्मान ससिद्धि परमा गता ॥ ३ ॥

श्रूयते च कपोतेन शत्रु शरणमागत ।
पूजितश्च यथान्याय स्वैश्च मासैर्निमन्त्रित ॥ ४ ॥

युधिष्ठिर उवाच ॥

कथ कपोतेन पुरा शत्रु शरणमागत ।
स्वमास भोजित का च गति लेभे स भारत ॥ ५ ॥

भीष्म उवाच ॥

शृणु राजन कथा दिव्या सर्वपापप्रणाशिनीम् ।
नृपतेर्मुचुकुन्दस्य कथिता भार्गवेण वै ॥ ६ ॥

इममर्थ पुरा पार्थ मुचुकुन्दो नराधिप ।
भार्गव परिपप्रच्छ प्रणत पुरुषर्षभ ॥ ७ ॥

तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।
इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ ८ ॥

मुनिरुवाच ॥

धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् ।
शृणुष्वावहितो राजन्, वदतो मे महाभुज ॥ ९ ॥

कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसम्मितः ।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १० ॥

काकोल इव कृष्णाङ्गो रक्ताक्षः कालसम्मितः ।
दीर्घजङ्घो ह्रस्वपादो महावक्त्रो महाहनुः ॥ ११ ॥

नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवाः ।
स हि तैः संपरित्यक्तस्तेन रौद्रेण कर्मणा ॥ १२ ॥

नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः ।
आत्मानं योऽभिसन्धत्ते सोऽन्यस्य स्यात्कथं हितः ॥ १३ ॥

यन्नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १४ ॥

स वै क्षारकमादाय द्विजान्हत्वा वने सदा ।
चकार विक्रयं तेषां पतङ्गानां जनाधिप ॥ १५ ॥

एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत्सुमहान्कालो न चाधर्ममबुध्यत ॥ १६ ॥

तस्य भार्यासनाथस्य रममाणस्य शाश्वतम् ।
दैवयोगविमूढस्य नान्या वृत्तिररोचत ॥ १७ ॥

अथ कदाचित्तस्याथ वनस्थस्य समन्ततः ।
पातयन्निव वृक्षांस्तान्सुमहान्वातसम्भ्रमः ॥ १८ ॥

मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम् ।
सञ्छन्नन्तु मुहूर्तेन नौमालेनेव सागरः ॥ १९ ॥

वारिधारासमूहेन सम्प्रविष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुन्धराम् ॥ २० ॥

ततो धाराकुले काले सम्भ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥ २१ ॥

नैव निम्नं स्थलं वापि सोऽविन्दत विहङ्गहा ।
पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥ २२ ॥

पक्षिणो वर्षवेगेन हता लीनास्तदाभवन् ।
मृगसिंहवराहाश्च स्थलमाश्रित्य शेरते ॥ २३ ॥

महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥ २४ ॥

स तु शीतहतैर्गात्रैर्जगाम न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ २५ ॥

दृष्ट्वार्तोऽपि हि पापात्मा स तां पञ्जरकेऽक्षिपत् ।
स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत्परे ॥ २६ ॥

पापात्मा पापकारित्वात्पापमेव चकार सः ।
सोऽपश्यत्तरुषण्डेषु मेघनीलं वनस्पतिम् ॥ २७ ॥

सेव्यमानं विहङ्गैश्चैश्छायावासफलार्थिभिः ।
धात्रा परोपकाराय स साधुरिव निर्मितः ॥ २८ ॥

अथाभवत्क्षणेनैव वियद्विमलतारकम् ।
महत्सर इवोत्फुल्लकुमुदच्छुरितोदकम् ॥ २९ ॥

ताराढ्यं कुमुदाकारमाकाशं निर्मलं बहु ।
घनैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः ॥ ३० ॥

दिशो विलोकयामास विगाढां प्रेक्ष्य शर्वरीम् ।
दूरतो मे निवेशश्च अस्माद्देशादिति प्रभो ॥ ३१ ॥

कृतबुद्धिर्द्रुमे तस्मिन्वस्तु तां रजनीं ततः ।
साञ्जलि प्रणतिं कृत्वा वाक्यमाह वनस्पतिं ॥ ३२ ॥

शरणं यामि यान्यस्मिन्दैवतानि वनस्पतौ ।
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताविष्टस्ततः सुष्वाप पक्षिहा ॥ ३३ ॥

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥

---

अथ [illegible] शाखायां विहङ्गः ससुहृज्जनः ।
[illegible] राजन, वय चित्रतनूरुहः ॥ १ ॥

तस्य कान्तगता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥ २ ॥

वातवर्षं महच्चासीन्न चागच्छति मे प्रिया ।
किन्तु तत्कारणं येन साद्यापि न निवर्तते ॥ ३ ॥

अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ।
तया विरहितं हीदं शून्यमद्य गृहं मम ॥ ४ ॥

पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥ ५ ॥

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीशून्यमरण्यसदृशं भवेत् ॥ ६ ॥

यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नायाति मे कान्ता न कार्यं जीवितेन मे ॥ ७ ॥

न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपविष्टेत शेते च शयिते मयि ॥ ८ ॥

हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोषिते दीनवदना क्रुद्धे च प्रियवादिनी ॥ ९ ॥

पतिव्रता पतिगतिः पतिप्रियहिते रता ।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥ १० ॥

सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥ ११ ॥

वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् ।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम् ॥ १२ ॥

धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥ १३ ॥

भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिन्लोकयात्रासहायिनी ॥ १४ ॥

तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ॥ १५ ॥

नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥ १६ ॥

यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ १७ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥

---

भीष्म उवाच ॥

एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः ।
गृहीता शकुनिस्तेन कपोती वाक्यमब्रवीत् ॥ १ ॥

कपोत्युवाच ॥

अहोऽतीव सुभाग्याहं यस्य मे दयितः पतिः ।
असतो वा सतो वापि गुणानेव प्रभाषते ॥ २ ॥

न सा स्त्री ह्यभिमन्तव्या यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ ३ ॥

अग्निसाक्षिकमित्येव भर्ता वै दैवतं परम् ।
दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ॥ ४ ॥

भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ।
इति सञ्चिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ॥ ५ ॥

कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ।
हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा ॥ ६ ॥

शरणागतसत्राता भव कान्त, विशेषतः ।
एष शाकुनिकः शेते तव वासं समाश्रितः ॥ ७ ॥

शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ।
यो हि कश्चिद्द्विजं हन्याद्गां च लोकस्य मातरम् ॥ ८ ॥

शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ।
अस्माकं विहिता वृत्तिः कापोती ज्ञातिधर्मतः ॥ ९ ॥

सा न्याय्यात्मवता नित्यं त्वद्विधेनानुवर्तितुम् ।
यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ॥ १० ॥

स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ।
स त्वं सन्तानवानद्य पुत्रवानसि च द्विज ॥ ११ ॥

तत्स्वदेहे दया त्यक्त्वा धर्मार्थो परिगृह्य च ।
पूजामस्मै प्रयुङ्क्ष्व त्व प्रीयेतास्य मनो यथा ॥ १२ ॥

मत्कृते मा च सन्ताप कुर्वीथास्त्व विहङ्गम ।
शरीरयात्राकृत्यार्थमन्यान्दारानुपैष्यसि ॥ १३ ॥

इति सा शकुनी वाक्य पञ्जरस्था तपस्विनी ।
अतिदु खान्विता प्रोक्त्वा भर्तार समुदैक्षत ॥ १४ ॥

इति तृतीयोऽध्याय ॥



## चतुर्थोऽध्यायः ॥



भीष्म उवाच ॥

स्वपत्न्या वचन श्रुत्वा धर्मयुक्तिसमन्वितम् ।
हर्षेण महता युक्तो वाष्पव्याकुललोचन ॥ १ ॥

त वै शाकुनिक दृष्ट्वा विधिदृष्टेन कर्मणा ।
स पक्षी पूजयामास यत्नात्त पक्षिजीविनम् ॥ २ ॥

उवाच स्वागत तेऽद्य ब्रूहि कि करवाणि ते ।
सन्तापश्च न कर्तव्य स्वगृहे वर्तते भवान् ॥ ३ ॥

तद्ब्रवीतु भवान् क्षिप्र किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वा त्व हि न शरणागत ॥ ४ ॥

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ ५ ॥

शरणागतस्य कर्तव्यमातिथ्यं हि प्रयत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ ६ ॥

पंचयज्ञांस्तु यो मोहान्न करोति गृहाश्रमे ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ ७ ॥

तद्ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥ ८ ॥

तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मे शीतं सन्त्राणं हि विधीयताम् ॥ ९ ॥

एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथाशक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ ॥ १० ॥

स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽभ्यदीपयत् ॥ ११ ॥

स सन्दीप्तं महत्कृत्वा तमाह शरणागतम् ।
प्रतापय सुविस्रब्धं स्वगात्राण्यकुतोभयः ॥ १२ ॥

स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहङ्गमम् ॥ १३ ॥

हर्षेण महताविष्टो वास्य व्याकुललोचनः ।
तथैव शकुनिं दृष्ट्वा विधिदृष्टेन कर्मणा ॥ १४ ॥

दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।
स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥ १५ ॥

न मेऽस्ति विभवो येन नाशयेयं क्षुधां तव ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ १६ ॥

संचयो नास्ति चास्माकं मुनीनामिव भोजने ।
इत्युक्त्वा त तदा तत्र विवर्णवदनोऽभवत् ॥ १७ ॥

कथन्नु खलु कर्तव्यमिति चिन्ताकुलस्तदा ।
बभूव भरतश्रेष्ठ, गर्हयन्वृत्तिमात्मनः ॥ १८ ॥

मुहूर्ताल्लब्धसञ्ज्ञस्तु स पक्षी पक्षिघातिनम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १९ ॥

इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम् ।
हर्षेण महताविष्ट. स पक्षी वाक्यमब्रवीत् ॥ २० ॥

ऋषीणां देवतानां च पितॄणां च महात्मनाम् ।
श्रुतः पूर्वं मया धर्मो महानतिथिपूजने ॥ २१ ॥

कुरुष्वानुग्रहं सौम्य, सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ॥ २२ ॥

ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव ।'
तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ॥ २३ ॥

अग्निमध्ये प्रविष्टं तु लुब्धो दृष्ट्वाथ पक्षिणम् ।
चिन्तयामास मनसा किमिदं वै मया कृतम् ॥ २४ ॥

अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मः सुमहान्घोरो भविष्यति न संशयः ॥ २५ ॥

एवं बहुविधं भूरि विललाप स लुब्धकः ।
गर्हयन्स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम् ॥ २६ ॥

इति चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः ॥

भीष्म उवाच ॥

ततः स लुब्धकः पश्यन्क्षुधयापि परिप्लुतः ।
कपोतमग्निपतितं वाक्यं पुनरुवाच च ॥ १ ॥

किमीदृशं नृशंसेन मया कृतमबुद्धिना ।
भविष्यति हि मे नित्य पातकं कृतजीविनः ॥ २ ॥

स विनिन्दंस्तथात्मानं पुन. पुनरुवाच ह ।
अविश्वास्यः सुदुर्बुद्धिः सदा निकृतिनिश्चय ॥ ३ ॥

शुभं कर्म परित्यज्य सोऽहं शकुनिलुब्धकः ।
नृशसस्य ममाशायं प्रत्यादेशो न सशयः ॥ ४ ॥

दत्त स्वमांसं दहता कपोतेन महात्मना ।
सोऽहं त्यक्ष्ये प्रियान्प्राणान्पुत्रान्दारांस्तथैव च ॥ ५ ॥

विमानिशतकोटीभिरावृतं पुण्यकर्मभिः ।
ततः स्वर्गं गतः पक्षी विमानवरमास्थितः ।
कर्मणा पूजितस्तत्र रेमे स सह भार्यया ॥ १२ ॥

इति षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ॥

---

भीष्म उवाच ॥

विमानस्थौ तु तौ राजन्, लुब्धकः स ददर्श ह ।
दृष्ट्वा तौ दम्पती राजन, व्यचिन्तयत तां गतिम् ॥ १ ॥

ईदृशेनैव तपसा गच्छेय परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ २ ॥

महाप्रस्थानमासाद्य लुब्धकः पक्षिजीवकः ।
निश्चेष्टो मरुदाहारो निर्मम. स्वर्गकाङ्क्षया ॥ ३ ॥

ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्माभिभूषितम ।
नानापक्षिगणाकीर्णं सर. शीतजलं शिवम ॥ ४ ॥

पिपासार्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः ।
उपवासकृशोऽत्यर्थं स तु पार्थिव, लुब्धकः ॥ ५ ॥

अनपेक्ष्यैव संहृष्टश्वापदाध्युषित वनम् ।
महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ॥ ६ ॥

प्रविशन्नेव स वनं निगृहीतः स कण्टकैः ।
स कण्टकैर्विभिन्नाङ्गो लोहितार्द्रीकृतच्छविः ॥ ७ ॥

बभ्राम तस्मिन्विजने नानामृगसमाकुले ।
ततो द्रुमाणां महता पवनेन वने तदा ॥ ८ ॥

उदतिष्ठत संघर्षात्सुमहान्हव्यवाहनः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ ९ ॥

ततः स देहमोक्षार्थं सम्प्रहृष्टेन चेतसा ।
अभ्यधावत वर्धन्तं पावकं लुब्धकस्तदा ॥ १० ॥

ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मषः ।
जगाम परमां सिद्धिं ततो भरतसत्तम ॥ ११ ॥

ततः स्वर्गस्थमात्मानमपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥ १२ ॥

एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥ १३ ॥

यापि चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥ १४ ॥

एवमेतत्पुरावृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥ १५ ॥

यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसोऽपि प्रमादतः ॥ १६ ॥

युधिष्ठिर, महानेष धर्मो धर्मभृतां वरः।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ॥ १७ ॥

न निष्कृतिर्भवेत्तस्य यो हन्याच्छरणागतम् ।
इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम् ।
न दुर्गतिमवाप्नोति स्वर्गलोकं च गच्छति ॥ १८ ॥

इति सप्तमोऽध्यायः ॥

इति श्रीमहाभारते शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि
कपोतलुब्धकसंवादे
१४३—१४९ अध्यायाः ॥

# ॥ ययातिचरितम् ॥

श्रीपराशर उवाच ॥

यति ययाति सयाति आयाति वियाति कृतिसंज्ञा नहुषस्य षट् पुत्रा महाबलपराक्रमा बभूवु । यतिस्तु राज्य नैच्छत् । ययातिस्तु भूभृदभवत् । उशनसश्च दुहितर देवयानी वार्षपर्वणी च शर्मिष्ठामुपयेमे । अत्रानुवशश्लोको भवति । यदु च तुर्वसु चैव देवयानी व्यजायत । द्रुह्यु चानु च पूरु च शर्मिष्ठा वार्षपर्वणी ॥ काव्यशापाच्चाकालेनैव ययातिर्जरामवाप । प्रसन्नशुक्रवचनाच्च स्वजरा सङ्क्रमयितु ज्येष्ठ पुत्र यदुमुवाच । वत्स, त्वन्मातामहशापादियमकालेनैव जरा मामुपस्थिता । तामह तस्यैवानुग्रहाद्भवत सचारयामि । एक वर्षसहस्रमतृप्तो विषयेषु त्वद्वयसा विषयानह भोक्तुमिच्छामि । नात्र भवता प्रत्याख्यान कर्तव्यमित्युक्ते स यदुर्नैच्छत्ता जरामादातुम् । त च पिता शशाप, 'त्वत्प्रसूतिर्न राज्यार्हा भविष्यति' इति । अनन्तर तुर्वसु द्रुह्युमनु च पृथिवीपतिर्जराग्रहणार्थं स्वयौवनप्रदानाय च अभ्यर्थयामास । तैरप्येकैकेन प्रत्याख्यातस्तान् शशाप । अथ शर्मिष्ठातनयमशेषकनीयास पूरु तथैवाह । स चातिप्रवणमतिः सबहुमान पितर प्रणम्य महाप्रसादोऽयमस्माकमित्युदारमभिधाय जरा जग्राह । स्वकीय च यौवन स्वपित्रे ददौ । सोऽपि पौरव यौवनमासाद्य धर्माविरोधेन यथाकाम यथाकालोपपन्न यथोत्साह विषयाश्चचार । सम्यक्च प्रजापालनमकरोत् । 'विश्वाच्या देवयान्या च सहोपभोग भुक्त्वा कामानामन्त प्राप्स्यामि' इत्यनुदिन चोपभोगत कामानतिरम्यान्मेने । ततश्चैवमगायत ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १ ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तमिति मत्वा शमं व्रजेत् ॥ २ ॥

यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिश. ॥ ३ ॥

पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा मम तेषूपजायते ।
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ ४ ॥

तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥ ५ ॥

श्रीपराशर उवाच ॥

पूरोः सकाशादादाय जरां दत्वा च यौवनम ।
राज्येऽभिषिच्य पूरु च प्रययौ तपसे वनम ॥ ६ ॥

दिशि दक्षिणपूर्वस्यां तुर्वसुं च समादिशत ।
प्रतीच्यां च तथा द्रुह्यु दक्षिणायां ततो यदुम ॥ ७ ॥

उदीच्यां च तथैवानुं कृत्वा मण्डलिनो नृपान ।
सर्वपृथ्वीपतिं पूरु सोऽभिषिच्य वन ययौ ॥ ८ ॥'

इति श्रीविष्णुपुराणे चतुर्थांशे
दशमोऽध्यायः ॥

———

# ॥ द्रौपदीयुधिष्ठिरसंवादः ॥

द्रौपद्युवाच ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ १ ॥

असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २ ॥

बलिरुवाच ॥

क्षमा स्विच्छ्रेयसी तात, उताहो तेज इत्युत ।
एतन्मे संशयं तात, यथावद्ब्रूहि पृच्छते ॥ ३ ॥

श्रेयो यदत्र धर्मज्ञ, ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ४ ॥

तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ५ ॥

प्रह्लाद उवाच ॥

न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात, विजानीहि द्वयमेतदसंशयम् ॥ ६ ॥

यो नित्यं क्षमते तात, बहून्दोषान्स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथारयः ॥ ७ ॥

सर्वभूतानि चाप्यस्य न नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात, पण्डितैरपि वर्जिता ॥ ८ ॥

अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम् ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ९ ॥

यानं वस्त्राण्यलंकाराञ्छयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ १० ॥

आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥ ११ ॥

न चैनं भर्तृपूजाभिः पूजयन्ति कथं चन ।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् ॥ १२ ॥

क्षमिणं तादृशं तात, ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ १३ ॥

अथास्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ १४ ॥

तथा च नित्यमुदिता यदि नाल्पमपीश्वरात्
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते ॥ १५ ॥

एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने, दोषानिमान्विद्ध्यक्षमावताम् ॥ १६ ॥

अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा ॥ १७ ॥

मित्रैः सह विरोधं च प्राप्नुते तेजसावृतः ।
आप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा ॥ १८ ॥

सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
सन्तापद्वेषमोहांश्च शत्रूंश्च लभते नरः ॥ १९ ॥

क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषोऽनयात् ।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ॥ २० ॥

योऽपकर्तॄंश्च हन्तॄंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ २१ ॥

यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ॥ २२ ॥

तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ।
काले काले तु संप्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥ २३ ॥

काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ २४ ॥

क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
एते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥ २५ ॥

पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २६ ॥

अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २७ ॥

अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथानृजून् ॥ २८ ॥

सर्वस्यैकोऽपराधस्ते क्षन्तव्य. प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ २९ ॥

अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ ३० ॥

मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्य मृदुना किंचित्तस्मात्तीव्रात्तरं मृदु ॥ ३१ ॥

देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
नादेशकाले किंचित्स्याद्देशकालौ प्रतीक्षताम् ॥ ३२ ॥

तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ।
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ॥ ३३ ॥

अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ।
तदहं तेजस· कालं तव मन्ये नराधिप ॥ ३४ ॥

धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ।
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ॥ ३५ ॥

तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ।
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं चैतद्यो वेद स महीपतिः ॥ ३६ ॥

इति प्रथमोऽध्यायः ॥



क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ।
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ॥ १० ॥

बलीयसां मनुष्याणां त्यजत्यात्मानमात्मना ।
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ॥ ११ ॥

तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ।
विद्वांस्तथैव यः शक्तः क्लिश्यमानो न कुप्यति ॥ १२ ॥

अनाशयित्वा क्लेष्टारं परलोके च नन्दति ।
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ॥ १३ ॥

क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ।
मन्योर्हि विजयं कृष्णे, प्रशंसन्तीह साधवः ॥ १४ ॥

क्षमावतो जयो नित्यं साधोरिह सतां मतम् ।
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ॥ १५ ॥

तमेवं बहुदोषं तु क्रोधं साधुविवर्जितम् ।
मादृशः प्रसृजेत्कस्मात्सुयोधनवधादपि ॥ १६ ॥

तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम् ॥ १७ ॥

यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १८ ॥

क्रुद्धो हि कार्यं सुश्रोणि, न यथावत्प्रपश्यति ।
नाकार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ १९ ॥

एवं संकुपिते लोके जन्म कृष्णे, न विद्यते ।
प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने ॥ ३० ॥

ताः क्षिपेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि, तादृशे ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३१ ॥

यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ३२ ॥

क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।
क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम ॥ ३३ ॥

आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ॥ ३४ ॥

प्रभाववानपि नरस्तस्य लोकाः सनातनाः ।
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ३५ ॥

अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावता कृष्णे, काश्यपेन महात्मना ॥ ३६ ॥

क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम ।
य एतदेवं जानाति स सर्वं क्षन्तुमर्हति ॥ ३७ ॥

क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौच क्षमयेदं धृतं जगत् ॥ ३८ ॥

अति यज्ञविदां लोकान्क्षमिणः प्राप्नुवन्ति च ।
अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ॥ ३९ ॥

अन्ये वै ईजुषां लोकाः कर्मिणामपरे तथा ।
क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः ॥ ४० ॥

क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनां ।
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ॥ ४१ ॥

तां क्षमां तादृशीं कृष्णे, कथमस्मद्विधस्त्यजेत् ।
यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च धिष्ठिताः ॥ ४२ ॥

क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ४३ ॥

क्षमावतामयं लोकः परश्चैव क्षमावतां ।
इह संमानमृच्छन्ति परत्र च शुभां गतिम् ॥ ४४ ॥

येषां मन्युर्मनुष्याणां क्षमयाभिहतः सदा ।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥ ४५ ॥

इति गीतां काश्यपेन गाथां नित्यं क्षमावताम् ।
श्रुत्वा गाथां क्षमायास्त्वं तुष्य द्रौपदि, मा क्रुधः ॥ ४६ ॥

पितामहः शान्तनवः शमं संपूजयिष्यति ।
कृष्णश्च देवकीपुत्रः शमं सपूजयिष्यति ॥ ४७ ॥

आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः ।
कृपश्च सञ्जयश्चैव शममेव वदिष्यतः ॥ ४८ ॥

सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ ४९ ॥

एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ॥ ५० ॥

कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भाविनि ॥ ५१ ॥

सुयोधनो नार्हतीति क्षमामेवं न विन्दति ।
अर्हस्तत्राहमित्येवं तस्मान्मां विन्दते क्षमा ॥ ५२ ॥

एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्ता ह्यहमञ्जसा ॥ ५३ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥



द्रौपद्युवाच ॥

नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे वृत्ते वोढव्ये तेऽन्यथा मतिः ॥ १ ॥

कर्मभिश्चिन्तितो लोको गत्यां गत्यां पृथग्विधः ।
तस्मात्कर्माणि नित्यानि तस्मान्मोक्षं स यास्यति ॥ २ ॥

नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ ३ ॥

त्वां च व्यसनमभ्यागादिदं भारत, दुःसहम्।
यत्त्वं नार्हसि नार्पामे भ्रातरस्ते महौजसः ॥ ४ ॥

न हि तेऽभ्यगमज्जातु तदानीं नाद्य भारत।
धर्मात्प्रियतरं किंचिदपि चेज्जीविताादिह ॥ ५ ॥

धर्मार्थमेव ते राज्यं धर्मार्थं जीवित च ते।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ६ ॥

भीमसेनार्जुनौ चोभौ माद्रेयौ च मया सह।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ७ ॥

राजानं धर्मगोप्तारं धर्मो रक्षति रक्षित।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ ८ ॥

अनन्या हि नरव्याघ्र, नित्यदा धर्ममेव ते।
बुद्धिः सततमन्वेति छायेव पुरुषं निजा ॥ ९ ॥

नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः।
अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्द्धत ॥ १० ॥

स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान्।
दैवतानि पितॄंश्चैव सतत पार्थ, सेवसे ॥ ११ ॥

ब्राह्मणाः सर्वकामैस्ते सतत पार्थ, तर्पिताः।
यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ १२ ॥

भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका।
आरण्यकेभ्यो लोहानि भाजनानि प्रयच्छसि ॥ १३ ॥

नादेयं ब्राह्मणेभ्यस्ते गृहे किंचन विद्यते ।
यदिदं वैश्वदेव ते शान्तये क्रियते गृहे ॥ १४ ॥

तद्दत्वातिथिभूतेभ्यो राजन्, शिष्टेन जीवसि ।
इष्टयः पशुबन्धाश्च काम्यनैमत्तिकाश्च ये ॥ १५ ॥

वर्तन्ते पाकयज्ञाश्च यज्ञकर्म च नित्यदा ।
अस्मिन्नपि महारण्ये विजने दस्युसेविते ॥ १६ ॥

राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ।
अश्वमेधो राजसूय. पुण्डरीकोऽथ गोसवः ॥ १७ ॥

एतैरपि महायज्ञैरिष्ट ते भूरिदक्षिणैः ।
राजन, परीतया बुद्धया विषमेऽक्षपराजये ॥ १८ ॥

राज्यं वसून्यायुधानि भ्रातॄन्मां चासि निर्जितः ।
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ॥ १९ ॥

कथमक्षव्यसनजा बुद्धिरापतिता तव ।
अतीव मोहमायाति मनश्च परिभूयते ॥ २० ॥

निशाम्य ते दु खमिदमिमां चापदमीदृशम् ।
अत्राप्युदाहरन्तीममितिहास पुरातनम् ॥ २१ ॥

ईश्वरस्य वशे लोकास्तिष्ठन्ते नात्मनो यथा ।
धातैव खलु भूतानां सुखदु खे प्रियाप्रिये ॥ २२ ॥

दधाति सर्वमीशान. पुरस्ताच्छुक्रमुच्चरन ।
यथा दारुमयी योषा नरवीर, समाहिता ॥ २३ ॥

ईरयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ।
आकाश इव भूतानि व्याप्य सर्वाणि भारत ॥ २४ ॥

ईश्वरो विदधातीह कल्याणं यच्च पापकम् ।
शकुनिस्तन्तुबद्धो वा नियतोऽयमनीश्वरः ॥ २५ ॥

ईश्वरस्य वशे तिष्ठन्नान्येषां नात्मनः प्रभुः ।
मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ॥ २६ ॥

स्रोतसो मध्यमापन्नः कूलाद्वृक्ष इव च्युतः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः ॥ २७ ॥

नात्माधीनो मनुष्योऽयं कालं भजति कंचन ।
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ॥ २८ ॥

ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च ।
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ॥ २९ ॥

धातुरेवं वशं यान्ति सर्वभूतानि भारत ।
आर्ये कर्मणि युञ्जानः पापे वा पुनरीश्वरः ॥ ३० ॥

व्याप्य भूतानि चरते न चायमिति लक्ष्यते ।
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम् ॥ ३१ ॥

येन कारयते कर्म शुभाशुभफलं विभुः ।
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः ॥ ३२ ॥

यो हन्ति भूतैर्भूतानि मोहयित्वात्ममायया ।
अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः ॥ ३३ ॥

अन्यथा परिवर्तन्ते वेगा इव नभस्वत. ।
अन्यथैव हि मन्यन्ते पुरुपास्तानि तानि च ॥ ३४ ॥

अन्यथैव प्रभुस्तानि करोति विकरोति च ।
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ॥ ३५ ॥

अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ।
एवं स भगवान्देवः स्वयंभूः प्रपितामहः ॥ ३६ ॥

हिनस्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ।
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ॥ ३७ ॥

क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ।
न मातृपितृवद्राजन्, धाता भूतेपु वर्तते ॥ ३८ ॥

रोपादिव प्रवृत्तोऽयं यथायमितरो जनः ।
आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान ॥ ३९ ॥

अनाथान्सुखिनश्चैव विह्वलामीव चिन्तया ।
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ॥ ४० ॥

धातारं गर्हये पार्थ, विपम योऽनुपश्यति ।
आर्य, शास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्वा धाता किं फलमश्नुते ॥ ४१ ॥

कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४२ ॥

अथ कर्म कृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ४३ ॥

इति तृतीयोऽध्यायः ॥



## चतुर्थोऽध्यायः ॥

युधिष्ठिर उवाच ॥

वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि, त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ १ ॥

नाहं कर्मफलान्वेषी राजपुत्रि, चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २ ॥

अस्तु वात्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे वा वसता कृष्णे, यथाशक्ति करोमि तत् ॥ ३ ॥

धर्मं चरामि सुश्रोणि,न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां व्रतमवेक्ष्य च ।
धर्म एव मनः कृष्णे, स्वभावाच्चैव मे धृतम् ॥ ४ ॥

धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम् ।
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ॥ ५ ॥

यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ।
अतिवादाद्वदाम्येष मा धर्ममभिशङ्कथाः ॥ ६ ॥

धर्माभिशङ्की पुरुषस्तिर्यग्गतिपरायणः ।
धर्मो यस्याभिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ॥ ७ ॥

वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ।
वेदाध्यायी धर्मपरः कुले जातो मनस्विनि ॥ ८ ॥

स्थविरेषु स योक्तव्यो राजर्षिर्धर्मचारिभिः ।
पापीयान्स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ॥ ९ ॥

शास्त्रातिगो मन्दबुद्धिर्यो धर्ममभिशङ्कते ।
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ॥ १० ॥

मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ।
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ॥ ११ ॥

अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ।
प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ॥ १२ ॥

शापानुग्रहणे शक्तान्देवेभ्योऽपि गरीयसः ।
एते हि धर्ममेवादौ वर्णयन्ति सदानघे ॥ १३ ॥

कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ।
अतो नार्हसि कल्याणि, धातारं धर्ममेव च ॥ १४ ॥

राज्ञि, मूढेन मनसा क्षेप्तुं शङ्कितुमेव च ।
*उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ॥ १५ ॥*

धर्माभिशङ्की नान्यस्मात्प्रमाणमधिगच्छति ।
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यकः ॥ १६ ॥

इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ १७ ॥

प्रायश्चित्तं न तस्यास्ति यो धर्ममभिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ॥ १८ ॥

प्रमाणाद्धि निवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभातिगो मूढो नरकं प्रतिपद्यते ॥ १९ ॥

यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि, सोऽमुत्रानन्त्यमश्नुते ॥ २० ॥

आर्षंप्रमाणमुत्क्रम्य धर्मं न प्रतिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ २१ ॥

यस्य नार्षंप्रमाणं स्याच्छिष्टाचारश्च भामिनि ।
न वै तस्य परो लोको नायमस्तीति निश्चयः ॥ २२ ॥

शिष्टैराचरितं धर्मं कृष्णे, मास्माभिशङ्कथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ २३ ॥

धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि, गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २४ ॥

अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ २५ ॥

निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं किंचिदाप्नुयुः ॥ २६ ॥

तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ २७ ॥

नाचरिष्यन्परे धर्मं परे परतरे च ये ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः ॥ २८ ॥

ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥ २९ ॥

फलदं त्विह विज्ञाय धातारं श्रेयसि ध्रुवम् ।
धर्मं ते व्यचरन्कृष्णे, तद्धि श्रेयः सनातनम् ॥ ३० ॥

स नायमफलो धर्मो नाधर्मोऽफलवानपि ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥ ३१ ॥

त्वमात्मनो विजानीहि जन्म कृष्णे, यथाश्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥ ३२ ॥

एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमाप्नोति धीरोऽल्पेनापि तुष्यति ॥ ३३ ॥

बहुनापि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किंचित्प्रेत्य शर्मास्ति वा पुनः ॥ ३४ ॥

कर्मणां श्रुतपुण्यानां पापानां च फलोदयः ।
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ३५ ॥

नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
अपि कल्पसहस्रेण न च श्रेयोऽधिगच्छति ॥ ३६ ॥

रक्ष्याण्येतानि देवाना गूढमाया हि देवताः ।
कृताशाश्च प्रताशाश्च तपसा दग्धकिल्बिषा. ॥ ३७ ॥

प्रसादैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ।
न फलादर्शनाद्धर्म. शङ्कितव्यो न देवताः ॥ ३८ ॥

यष्टव्य च प्रयत्नेन दातव्य चानसूयता ।
कर्मणां फलमस्तीह तथैतद्धर्मशाश्वतम् ॥ ३९ ॥

ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद काश्यप ।
तस्मात्ते सशयः कृष्णे, नीहार इव नश्यतु ॥ ४० ॥

व्यवस्य सर्वमस्तीति नास्तिक्य भावमुत्सृज ।
ईश्वर चापि भूतानां धातार मा च वै क्षिप ॥ ४१ ॥

शिक्षस्वैनं नमस्वैन मा ते भूद्बुद्धिरीदृशी ।
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे, नातिमंस्था. कथचन ॥ ४२ ॥

इति चतुर्थोऽध्यायः ॥

इति श्रीमहाभारते आरण्यपर्वणि द्रौपदीयुधिष्ठिरसंवादे
२८—३१ अध्यायाः ॥

## ॥ सावित्र्युपाख्यानम् ॥

मार्कण्डेय उवाच ॥

शृणु राजन्, कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथा प्राप्तं सावित्र्या राजकन्यया ॥ १ ॥

आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ २ ॥

यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ३ ॥

क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥ ४ ॥

अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ५ ॥

हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ६ ॥

एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ ७ ॥

रूपिणी तु तदा राजन्, दर्शयामास तं नृपम् ।
अग्निहोत्रात्समुत्थाय हर्षेण महतान्विता ।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥ ८ ॥

सावित्र्युवाच ॥

ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च भक्त्या च तुष्टास्मि तव पार्थिव ॥ ९ ॥

वरं वृणीष्वाश्वपते मद्रराज, यदीप्सितम् ।
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथंचन ॥ १० ॥

अश्वपतिरुवाच ॥

अपत्यार्थे समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि, भवेयुः कुलभावना ॥ ११ ॥

तुष्टासि यदि मे देवि वरमेतं वृणोम्यहम् ।
सन्तानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १२ ॥

सावित्र्युवाच ॥

पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामह ॥ १३ ॥

प्रसादाच्चैव तस्मात्ते स्वयंभुविहिताद्भुवि ।
कन्या तेजस्विनी सौम्य, क्षिप्रमेव भविष्यति ॥ १४ ॥

उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन ।
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ १५ ॥

मार्कण्डेय उवाच ॥

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति ॥ १६ ॥

अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये चावसद्वीरः प्रजा धर्मेण पालयन् ॥ १७ ॥

कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ १८ ॥

राजपुत्र्यास्तु गर्भः स मालव्या भरतर्षभ ।
व्यवर्धत तदा शुक्ले तारापतिरिवाम्बरे ॥ १९ ॥

प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तम ॥ २० ॥

सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ २१ ॥

सा विग्रहवतीव श्रीर्व्यवर्द्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ २२ ॥

तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा समेनिरे जनाः ॥ २३ ॥

तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ २४ ॥

अथोपोष्य शिरःस्नाता दैवतामभिगम्य सा ।
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ॥ २५ ॥

ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुः समीपमगमद्देवी श्रीरिव रूपिणी ॥ २६ ॥

साभिवाद्य पितुः पादौ शेषां पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता ॥ २७ ॥

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ २८ ॥

राजोवाच ॥

पुत्रि, प्रदानकालस्ते न च कश्चिद्वृणाति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ २९ ॥

प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३० ॥

श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि, गदतो मे वचः शृणु ॥ ३१ ॥

अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३२ ॥

इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३३ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतामित्यचोदयत् ॥ ३४ ॥

साभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३५ ॥

सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३६ ॥

मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३७ ॥

एवं सर्वेषु तीर्थेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ३८ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥



मार्कण्डेय उवाच ॥

अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १ ॥

ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २ ॥

नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३ ॥

नारद उवाच ॥

क्व गताभूत्सुतेयं ते कुतश्चैवागता शुभा ।
किमर्थं युवतीं भर्त्रे न चैनां सम्प्रयच्छसि ॥ ४ ॥

अश्वपतिरुवाच ॥

कार्येण खल्वनेनैव प्रेपितायैव चागता ।
एतस्याः शृणु देवर्षे, भर्तारं योऽनया वृतः ॥ ५ ॥

मार्कण्डेय उवाच ॥

सा ब्रूहि विस्तरेणेति पित्रा सचोदिता शुभा ।
तदैव तस्य वचनं प्रतिगृह्येदमब्रवीन ॥ ६ ॥

सावित्र्युवाच ॥

आसीच्छाल्वेपु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यात. पश्चाधान्धो वभूव ह ॥ ७ ॥

विनष्टचक्षुपस्तस्य वालपुत्रस्य धीमतः ।
सामीप्येन हृत राज्य छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ८ ॥

स वालवत्सया सार्द्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रत. ॥ ९ ॥

तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १० ॥

नारद उवाच ॥

अहो वत महत्पापं सावित्र्या नृपते, कृतम ।
अजानन्त्या यदनया सत्यवान्गुणवान्वृतः ॥ ११ ॥

सत्यं वदत्यस्य पिता सत्य माता प्रभापते ।
तथास्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ १२ ॥

बालस्याश्वा' प्रियाश्चास्य करोत्यश्वांश्च मृण्मयान् ।
चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ १३ ॥

राजोवाच ॥

अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान्पितृवत्सलः ॥ १४ ॥

नारद उवाच ॥

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वित' ॥ १५ ॥

अश्वपतिरुवाच ॥

अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाप्यथवा प्रियदर्शनः ॥ १६ ॥

नारद उवाच ॥

साङ्कृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ १७ ॥

ययातिरिव चोदार. सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८ ॥

स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
स मैत्र. सोऽनसूयश्च स ह्रीमान्धुतिमांश्च सः ॥ १९ ॥

नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २० ॥

अश्वपतिरुवाच ॥

गुणैरुपेतं सर्वैस्त भगवन्प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१

नारद उवाच ॥

एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यश्चातिवर्तितुम् ॥ २२ ॥

एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २३ ॥

राजोवाच ॥

एहि सावित्रि, गच्छ त्वमन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २४ ॥

यथा मे भगवानाह नारदो देवसत्कृत ।
संवत्सरेण सोऽल्पायुर्देहन्यास करिष्यति ॥ २५ ॥

सावित्र्युवाच ॥

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २६ ॥

दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीय वृणोम्यहम ॥ २७ ॥

मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ २८ ॥

नारद उवाच ॥

स्थिरा बुद्धिर्नरश्रेष्ठ, सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात्कथंचन ॥ २९ ॥

नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३० ॥

राजोवाच ॥

अविचार्यं त्वेतदुक्तं तथ्यं च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ॥ ३१ ॥

नारद उवाच ॥

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ ३२ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा समुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सज्जं वैवाहिकमकारयत ॥ ३३ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

मार्कण्डेय उवाच ॥

अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ १ ॥

ततो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २ ॥

मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ॥ ३ ॥

तत्रापश्यन्महाभागं शालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृप तदा ॥ ४ ॥

स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५ ॥

तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ६ ॥

तस्य सर्वमभिप्रायमितिकर्तव्यतां च तां ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७ ॥

अश्वपतिरुवाच ॥

सावित्री नाम राजर्षे, कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ, स्नुषार्थे त्वं गृहाण मे ॥ ८ ॥

द्युमत्सेन उवाच ॥

च्युताः स्म राज्याद्वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे
निवत्स्यते क्लेशमिमं सुता तव ॥ ९ ॥

अश्वपतिरुवाच ॥

सुखं च दुःखं च भवाभवात्मक
यदा विजानाति सुताहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं
विनिश्चयेनाभिगतोऽस्मि ते नृप ॥ १० ॥

आशां नार्हसि मे हन्तुं सौहृदात्प्रणतस्य च ।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि ॥ ११ ॥

अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतस्ततः ॥ १२ ॥

द्युमत्सेन उवाच ॥

पूर्वमेवाभिलषितः संबन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ १३ ॥

अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः ।
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥ १४ ॥

ततः सर्वान्समानाय्य द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १५ ॥

दत्वा सोऽश्वपतिः कन्यां यथार्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६ ॥

सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सापि तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १७ ॥

गते पितरि सर्वाणि सन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्र कापायमेव च ॥ १८ ॥

परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषा तुष्टिमादधे ॥ १९ ॥

श्वश्रू शरीरसत्कारै सर्वैराच्छादनादिभि ।
श्वशुर देवसत्कारैर्वाच सयमनेन च ॥ २० ॥

तथैव प्रियवादेन नैपुणेन शमेन च ।
रहश्चैवोपचारेण भर्तार पर्यतोपयत् ॥ २१ ॥

एव तत्राश्रमे तेषा तदा निवसता सताम् ।
कालस्तपस्यता कश्चिदपाक्रमत भारत ॥ २२ ॥

सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम् ।
नारदेन यदुक्त तद्वाक्य मनसि वर्तते ॥ २३ ॥

इति तृतीयोऽध्याय ॥



## चतुर्थोऽध्यायः ॥

---

मार्कण्डेय उवाच ॥

तत काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्त स कालो मर्तव्य यत्र सत्यवता नृप ॥ १ ॥

गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ।
यद्वाक्य नारदेनोक्त वर्तते हृदि नित्यश ॥ २ ॥

चतुर्थेऽहनि मर्तव्यमिति सचिन्त्य भाविनी ।
व्रत त्रिरात्रमुद्दिश्य दिवारात्र स्थिताभवत् ॥ ३ ॥

त श्रुत्वा नियम तस्या भृश दु खान्वितो नृप ।
उत्थाय वाक्य सावित्रीमब्रवीत्परिसान्त्वयन ॥ ४ ॥

द्युमत्सेन उवाच ॥

अतितीव्रोऽयमारम्भस्त्वयारब्धो नृपात्मजे ।
तिसृणा वसतीना हि स्थान परमदुश्चरम् ॥ ५ ॥

सावित्र्युवाच ॥

न कार्यस्तात, सन्ताप पारयिष्याम्यह व्रतम् ।
व्यवसायकृत हीद व्यवसायश्च कारणम् ॥ ६ ॥

द्युमत्सेन उवाच ॥

व्रत भिन्धीति वक्तु त्वा नास्मि शक्त कथचन ।
पारयस्वेति वचन युक्तमस्मद्विधो वदेन ॥ ७ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा द्युमत्सेनो विरराम महामना
तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते ॥ ८ ॥

श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दु खान्वितायास्तिष्ठन्त्या सा रात्रिर्व्यत्यवर्तत ॥ ९ ॥

अथ तद्दिवस चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्निकी. क्रिया ॥ १० ॥

तत सर्वान्द्विजान्वृद्धान् श्वश्रू श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ ११ ॥

अवैधव्याशिषस्ते तु सावित्र्यर्थं हिता शुभा ।
ऊचुस्तपस्विन सर्वे तपोवननिवासिन ॥ १२ ॥

एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिर सर्वा प्रत्यगृह्णात्तपस्विनाम् ॥ १३ ॥

त कालं त मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्त नारदवचश्चिन्तयन्ती सुदु खिता ॥ १४ ॥

ततस्तु श्वश्रूश्वशुरावूचतुस्ता नृपात्मजाम् ।
एकान्तमास्थिता वाक्यं प्रीत्या भरतसत्तम ॥ १५ ॥

श्वशुरावूचतु ॥

व्रत यथोपदिष्ट तु तथा तत्पारित त्वया ।
आहारकाल. सप्राप्त क्रियता यदनन्तरम ॥ १६ ॥

सावित्र्युवाच ॥

अस्त गते मयादित्ये भोक्तव्य कृतकामया ।
एष मे हृदि संकल्प समयश्च कृतो मया ॥ १७ ॥

मार्कण्डेय उवाच ॥

एव सभाषमाणाया सावित्र्या भोजन प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् ॥ १८ ॥

सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वया गमिष्यामि न हि त्वा हातुमुत्सहे ॥ १९ ॥

सत्यवानुवाच ॥

वनं न गतपूर्वं ते दुःखं पन्थाश्च भाविनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २० ॥

सावित्र्युवाच ॥

उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि ॥ २१ ॥

सत्यवानुवाच ॥

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् ॥ २२ ॥

मार्कण्डेय उवाच ॥

साभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ २३ ॥

इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ २४ ॥

गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् ॥ २५ ॥

संवत्सरः किंचिदूनो न निष्क्रान्ताहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २६ ॥

द्युमत्सेन उवाच ॥

यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २७ ॥

तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि, सत्यवतः पथि ॥ २८ ॥

मार्कण्डेय उवाच ॥

उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ २९ ॥

सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३० ॥

नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह सावित्रीं पश्येति मधुरं वचः ॥ ३१ ॥

निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।
मृतमेव हि भर्तारं काले मुनिवचः स्मरन् ॥ ३२ ॥

अनुव्रजन्ती भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ३३ ॥

इति चतुर्थोऽध्यायः ॥

## पञ्चमोऽध्यायः ॥

---

मार्कण्डेय उवाच ॥

अथ भार्यासहाय स फलान्यादाय वीर्यवान् ।
कठिन पूरयामास तत काष्ठान्यपाटयत् ॥ १ ॥

तस्य पाटयत काष्ठ स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।
सोऽभिगम्य प्रिया भार्यामुवाच श्रमपीडित ॥ २ ॥

सत्यवानुवाच ॥

व्यायामेन ममानेन जाता शिरसि वेदना ।
अङ्गानि चैव सावित्रि, हृदय दूयतीव च ॥ ३ ॥

अस्वस्थमिव चात्मान लक्षये मितभाषिणि ।
शूलैरिव शिरो विद्धमिद सलक्षयाम्यहम् ॥ ४ ॥

तत्स्वप्तुमिच्छे कल्याणि, न स्थातु शक्तिरस्ति मे ।
सा समासाद्य सावित्री भर्तारमुपगम्य च ॥ ५ ॥

उत्सङ्गेऽस्य शिर कृत्वा निषसाद महीतले ।
तत सा नारदवचो विमृशन्ती तपस्विनी ॥ ६ ॥

त मुहूर्त क्षण वेला दिवस च युयोज ह ।
मुहूर्तादेव सापश्यत्पुरुष रक्तवाससम् ॥ ७ ॥

बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ।
श्यामावदात रक्ताक्ष पाशहस्त भयावहम् ॥ ८ ॥

स्थित सत्यवत पार्श्वे निरीक्षन्त तमेव च ।
त दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनै शिर ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ॥ ९ ॥

सावित्र्युवाच ॥
दैवत त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश, कस्त्व किं च चिकीर्षसि ॥ १० ॥

यम उवाच ॥
पतिव्रतासि सावित्रि, तथैवच तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मा त्व शुभे, यमम ॥ ११ ॥

अय ते सत्यवान्भर्ता क्षीणायु पार्थिवात्मज ।
नेष्यामि तमह बद्ध्वा विद्ध्येतन्मे चिकीर्षितम ॥ १२ ॥

सावित्र्युवाच ॥
श्रूयते भगवन्दूतास्तवागच्छन्ति मानवान ।
नेतु किल भवान्कस्मादागतोऽसि स्वय प्रभो ॥ १३ ॥

मार्कण्डेय उवाच ॥
इत्युक्त पितृराजस्ता भगवान्स्वचिकीर्षितम ।
यथावत्सर्वमाख्यातु तत्प्रियार्थं प्रचक्रमे ॥ १४ ॥

अय च धर्मसयुक्तो रूपवान्गुणसागर ।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागत ॥ १५ ॥

तत सत्यवत कायात्पाशबद्ध वश गतम ।
अङ्गुष्ठमात्र पुरुष निश्चकर्ष यमो बलात् ॥ १६ ॥

ततः समुद्धृतप्राणं गतश्वास हृतप्रभम ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १७ ॥

यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ।
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ १८ ॥

यम उवाच ॥

निवर्त गच्छ सावित्रि, कुरुष्वास्यौर्द्ध्वदैहिकम् ।
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया ॥ १९ ॥

सावित्र्युवाच ॥

यत्र मे नीयते भर्ता स्वय वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेप धर्मः सनातनः ॥ २० ॥

तपसा गुरुभक्त्या च भर्तृस्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहृता गतिः ॥ २१ ॥

प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ २२ ॥

नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २३ ॥

एकस्य धर्मेण सतां मतेन
सर्वे स्म तं मार्गमनुप्रपन्नाः ।

मा वै द्वितीयं मा तृतीयं च वाञ्छे-
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २४ ॥

यम उवाच ॥

निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ २५ ।

सावित्र्युवाच ॥

च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसन्निभः ॥ २६ ॥

यम उवाच ॥

ददानि तेऽहं तमनिन्दिते वरं
यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ २७ ॥

सावित्र्युवाच ॥

श्रमः कुतो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः
सुरेश, भूयश्च वचो निबोध मे ॥ २८ ॥

सता सकृत्सङ्गतमीप्सित परं
ततः परं मित्रमिति प्रचक्षते ।
न चाफल सत्पुरुषेण सङ्गत
ततः सता सन्निवसेत्समागमे ॥ २९ ॥

यम उवाच ॥
मनोऽनुकूल बहुबुद्धिवर्द्धन
त्वया यदुक्त वचन हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवित
वर द्वितीय वरयस्व भामिनि ॥ ३० ॥

सावित्र्युवाच ॥
हृत पुरा मे श्वशुरस्य धीमत
स्वमेव राज्य लभता स पार्थिव ।
जह्यात्स्वधर्मान्न च मे गुरुर्यथा
द्वितीयमेतद्वरयामि ते वरम् ॥ ३१ ॥

यम उवाच ॥
स्वमेव राज्य प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात्परिहास्यते नृप ।
कृतेन कामेन मया नृपात्मजे,
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३२ ॥

सावित्र्युवाच ॥
प्रजास्त्वयैता नियमेन सयता
नियम्य चैता नयसे निकामया ।

ततो यमत्व तव देव, विश्रुत
निबोध चेमा गिरमीरिता मया ॥ ३३ ॥

अद्रोह सर्वभूतेपु कर्मणा मनसा गिरा ।
अनुग्रहश्च दान च सता धर्म सनातन ॥ ३४ ॥

एवप्रायश्च लोकोऽय मनुष्या भक्तिपेशला. ।
सन्तस्ते चाप्यमित्रेपु दया प्राप्तेपु कुर्वते ॥ ३५ ॥

यम उवाच ॥

पिपासितस्येव यथा भवेत्पय-
स्तथा त्वया वाक्यमिद समीरितम ।
विना पुन सत्यवतोऽस्य जीवित
वर वृणीष्वेह शुभे यदिच्छसि ॥ ३६ ॥

सावित्र्युवाच ॥

ममानपत्य पृथिवीपति पिता
भवेत्पितु पुत्रशत तथौरसम ।
कुलस्य सन्तानकर च यद्भवे-
त्तृतीयमेतद्वरयामि ते वरम् ॥ ३७ ॥

यम उवाच ॥

कुलस्य सन्तानकर सुवर्चस
शत सुताना पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे,
निवर्त दूर हि पथस्त्वमागता ॥ ३८ ॥

सावित्र्युवाच ॥

न दूरमेतन्मम भर्तृसन्निधौ
मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां
मयोच्यमाना शृणु भूय एव च ॥ ३९ ॥

विवस्वतस्त्वं तनय प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण चरन्ति ताः प्रजा-
स्ततस्तवेहेश्वर, धर्मराजता ॥ ४० ॥

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ४१ ॥

सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४२ ॥

यम उवाच ॥

उदाहृतं ते वचनं यदङ्गने
शुभे, न तादृक्त्वदृते श्रुतं मया ।
अनेन तुष्टोऽस्मि विनास्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ ४३ ॥

*सावित्र्युवाच ॥*

ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत्कुलोद्वहम् ।

शतं सुतानां बलवीर्यशालिना-
मिदं चतुर्थं वरयामि ते वरम् ॥ ४४ ॥

यम उवाच ॥

शतं सुतानां बलवीर्यशालिनां
भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ४५ ॥

सावित्र्युवाच ॥

सतां सदा शाश्वतधर्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति ।
सतां सद्भिर्नाफलः संगमोऽस्ति
सद्भयो भयं नानुवर्तन्ति सन्तः ॥ ४६ ॥

सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राजन् ,
सतां मध्ये नावसीदन्ति सन्तः ॥ ४७ ॥

आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति परस्परम् ॥ ४८ ।

न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं
तस्मात्सन्तो रक्षितारो भवन्ति ॥ ४९ ॥

यम उवाच ॥

यथा यथा भाषसि धर्मसंहितं
मनोऽनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ५० ॥

सावित्र्युवाच ॥

न तेऽपवर्गः सुकृताद्विनाकृत-
स्तथा यथान्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं
यथा मृता ह्येवमहं पतिं विना ॥ ५१ ॥

न कामये भर्तृविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं
न भर्तृहीना व्यवसामि जीवितुम् ॥ ५२ ॥

वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति ॥ ५३ ॥

मार्कण्डेय उवाच ॥

तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ५४ ॥

एष भद्रे, मया मुक्तो भर्ता ते कुलनन्दिनि ।
अरोगस्तव नेयश्च सिद्धार्थ स भविष्यति ॥ ५५ ॥

चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ॥ ५६ ॥

त्वयि पुत्रशत चैव सत्यवाञ्जनयिष्यति ।
ते चापि सर्वे राजान क्षत्रिया पुत्रपौत्रिण ॥ ५७ ॥

ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वता ।
पितुश्च ते पुत्रशत भविता तव मातरि ॥ ५८ ॥

मालव्या मालवा नाम शाश्वता पुत्रपौत्रिण ।
भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमा ॥ ५९ ॥

एव तस्यै वर दत्त्वा धर्मराज प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवन ययौ ॥ ६० ॥

सावित्र्यपि यमे याते भर्तार प्रतिलभ्य च ।
जगाम तत्र यत्रास्य भर्तु शाव कलेवरम् ॥ ६१ ॥

सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ६२ ॥

सज्ञा च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुन पुनरुदीक्ष्य वै ॥ ६३ ॥

सत्यवानुवाच ॥

सुचिर बत सुप्तोऽस्मि किमर्थं नावबोधित ।
क्व चासौ पुरुष श्यामो योऽसौ मा सचकर्ष ह ॥ ६४ ॥

सावित्र्युवाच ॥

सुचिरं त्वं प्रसुप्तोऽसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देव प्रजासंयमनो यमः ॥ ६५ ॥

विश्रान्तोऽसि महाभाग, विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६६ ॥

मार्कण्डेय उवाच ॥

उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान ॥ ६७ ॥

फलाहारोऽस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयत. काष्ठं शिरसो मे रुजाभवत् ॥ ६८ ॥

शिरोभितापसन्तप्तः स्थातुं चिरमशक्नुवन ।
तवोत्सङ्गे प्रसुप्तोऽस्मि इति सर्वं स्मरे शुभे ॥ ६९ ॥

त्वयोपगूढस्य च मे निद्रयापहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम ॥ ७० ॥

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत ॥ ७१ ॥

तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ७२ ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकर. ॥ ७३ ॥

नक्तचराश्चरन्त्येते हृष्टा क्रूराभिभाषिण ।
श्रूयन्ते पर्णशब्दाश्च मृगाणा चरता वने ॥ ७४ ॥

एता घोर शिवा नादान्दिश दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्रा कम्पयन्त्यो मनो मम ॥ ७५ ॥

सत्यवानुवाच ॥

वन प्रतिभयाकार घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थान गन्तु चैव न शक्ष्यसि ॥ ७६ ॥

सावित्र्युवाच ॥

अस्मिन्नद्य वने दग्धे शुष्कवृक्ष स्थितो ज्वलन् ।
वायुना धम्यमानोऽत्र दृश्यतेऽग्नि क्वचित्क्वचित् ॥ ७७ ॥

ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वत ।
काष्ठानीमानि सन्तीह जहि सन्तापमात्मन ॥ ७८ ॥

यदि नोत्सहसे गन्तु सरुज त्वा हि लक्षये ।
न च ज्ञास्यसि पन्थान तमसा सवृत वने ॥ ७९ ॥

श्व प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेका रुचित यदि तेऽनघ ॥ ८० ॥

सत्यवानुवाच ॥

शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि सगम त्वत्प्रसादजम् ॥ ८१ ॥

न कदाचिद्विकाले हि गतपूर्वो मयाश्रम ।
अनागतायां सन्ध्याया माता मे प्ररुणद्धि माम् ॥ ८२ ॥

दिवापि मयि निष्क्रान्ते सन्तप्येते गुरू मम ।
विचिनोति हि मा तात सहैवाश्रमवासिभि ॥ ८३ ॥

मात्रा पित्रा च सुभृश दु खिताभ्यामह पुरा ।
उपालब्धश्च बहुशश्चिरेणागच्छसीति हि ॥ ८४ ॥

का त्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरद्वये मयि च महदु ख भविष्यति ॥ ८५ ॥

पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ ।
भृश सुदु खितौ वृद्धौ बहुश प्रीतिसयुतौ ॥ ८६ ॥

त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक ।
यावद्धरिष्यसे पुत्र, तावन्नौ जीवित ध्रुवम ॥ ८७ ॥

वृद्धयोरन्धयोर्दृष्टिस्त्वयि वश प्रतिष्ठित ।
त्वयि पिण्डश्च कीर्तिश्च सन्तान चावयोरिति ॥ ८८ ॥

माता वृद्धा पिता वृद्धस्तयोर्यष्टिरह किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्था गमिष्यत ॥ ८९ ॥

निद्रायाश्चाभ्यसूयामि यस्या हेतो पिता मम ।
माता च सशय प्राप्ता मत्कृतेऽनपकारिणी ॥ ९० ॥

अह च सशय प्राप्त कृच्छ्रामापदमास्थित ।
मातापितृभ्या हि विना नाह जीवितुमुत्सहे ॥ ९१ ॥

व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षु पिता मम ।
एकैकमस्या वेलाया पृच्छत्याश्रमवासिनाम् ॥ ९२ ॥

नात्मानमनुशोचामि यथाहं पितरं शुभे ।
भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम् ॥ ९३ ॥

मत्कृतेन हि तावद्य सन्तापं परमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह ।
तयोः प्रियं मे कर्तव्यमिति जानामि चाप्यहम् ॥ ९४ ॥

मार्कण्डेय उवाच ॥

एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सुस्वरं प्ररुरोद ह ॥ ९५ ॥

ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि नेत्राभ्यां सावित्री धर्मचारिणी ॥ ९६ ॥

यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तृणां मम पुण्यास्तु शर्वरी ॥ ९७ ॥

न स्मराम्युक्तपूर्वां वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ ९८ ॥

सत्यवानुवाच ॥

कामये दर्शनं पित्रोः याहि सावित्रि, मा चिरम् ।
पुरा मातुः पितुर्वापि यदि पश्यामि विप्रियम् ॥ ९९ ॥

न जीविष्ये वरारोहे, सत्येनात्मानमालभे ।
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ।
मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात् ॥ १०० ॥

मार्कण्डेय उवाच ॥

सावित्री तत उत्थाय केशान्संयम्य भामिनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥१०१ ॥

उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
सर्वा दिश. समालोक्य कठिने दृष्टिमादधे ॥ १०२ ॥

तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतं ते.नेष्यामि परशु त्वहम ॥ १०३ ॥

कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशु भर्तु. सकाशे पुनरागमत ॥ १०४ ॥

वामे स्कन्धे तु वामोरुर्भर्तुर्बाहु निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १०५ ॥

सत्यवानुवाच ॥

अभ्यासगमनाद्भीरु, पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०६ ॥

आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे, गच्छ पन्थानं मा विचारय ॥ १०७ ॥

पलाशखण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा ।
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ॥ १०८ ॥

स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः स प्रायादाश्रम प्रति ॥ १०९ ॥

इति पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ॥

मार्कण्डेय उवाच ॥

एतस्मिन्नेव काले तु द्युमत्सेनो महाबल ।
लब्धचक्षु प्रसन्नाया दृष्ट्या सर्वं ददर्श ह ॥ १ ॥

स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतो परामार्तिं जगाम भरतर्षभ ॥ २ ॥

तावाश्रमान्नदीश्चैव वनानि च सरांसि च ।
तस्या निशि विचिन्वन्तौ दम्पती परिजग्मतु ॥ ३ ।

श्रुत्वा शब्द तु य कंचिदुन्मुखौ सुतशङ्कया ।
सावित्र्या सहितोऽभ्येति सत्यवानित्यभापताम् ॥ ४ ॥

भिन्नैश्च परुपै पादै सव्रणै शोणितोक्षितै ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावत ॥ ५ ॥

ततोऽभिसृत्य तैर्विप्रै सर्वैराश्रमवासिभि ।
परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम ॥ ६ ॥

तत्र भार्यासहाय स वृतो वृद्धैस्तपोधनै ।
आश्वासितोऽपि चित्रार्थै पूर्वराज्ञा कथाश्रयै ॥ ७ ॥

ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्ये वृत्तानि पुत्रस्य स्मरन्तौ भृशदु खितौ ॥ ८ ॥

पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ ।
हा पुत्र हा साध्वि वधु क्वासि कासीत्यरोदताम् ।
ब्राह्मणः सत्यवाक्तेपामुवाचेदं तयोर्वचः ॥ ९ ॥

सुवर्चा उवाच ॥

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान ॥ १० ॥

गौतम उवाच ॥

वेदाः साङ्गा मयाधीतास्तपो मे सचितं महन् ।
कौमारं ब्रह्मचर्यं च गुरवोऽग्निश्च तोपिताः ॥ ११ ॥

समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।
वायुभक्षोपवासश्च कृतो मे विधिवत्सदा ॥ १२ ॥

अनेन तपसा वेद्मि सर्वं परचिकीर्षितम् ।
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥ १३ ॥

शिष्य उवाच ॥

उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान ॥ १४ ॥

ऋपय ऊचुः ॥

यथास्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान ॥ १५ ॥

भारद्वाज उवाच ॥

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान ॥ १६ ॥

दाल्भ्य उवाच ॥

यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताहारमकृत्वा च तथा जीवति सत्यवान् ॥ १७ ॥

ापस्तम्ब उवाच ॥

यथा वदन्ति शान्ताया दिशि वै मृगपक्षिणः ।
पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् ॥ १८ ॥

म्य उवाच ॥

सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ १९ ॥

ार्कण्डेय उवाच ॥

एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्सर्वांस्ततः स्थिर इवाभवत् ॥ २० ॥

ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१ ॥

ब्राह्मणा ऊचुः ॥

पुत्रेण सगतं त्वां तु चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ २२ ॥

समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ २३ ॥

सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः ।
भूयो भूयः समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २४ ॥

ततोऽग्निं तत्र सज्वाल्य द्विजास्ते सर्व एव हि ।
उपासाचक्रिरे पार्थ, द्युमत्सेन महीपतिम् ॥ २५ ॥

शैव्या च सत्यवाश्चैव सावित्री चैकत स्थिता ।
सर्वस्तैरभ्यनुज्ञाता विशोका समुपाविशन् ॥ २६ ॥

ततो राज्ञा सहासीना सर्वे ते वनवासिन ।
जातकौतूहला पार्थ, पप्रच्छुर्नृपते सुतम् ॥ २७ ॥

ऋषय ऊचु ॥

प्रागेव नागत कस्मात्सभार्येण त्वया विभो ।
विराले चागत कस्मात्कोऽनुबन्धस्तवाभवत् ॥ २८ ॥

सन्तापित पिता माता वय चैव नृपात्मज ।
कस्मादिति न जानीमस्तत्सर्वं वक्तुमर्हसि ॥ २९ ॥

सत्यवानुवाच ॥

पित्राहमभ्यनुज्ञात सावित्रीसहितो गत ।
अथ मेऽभूच्छिरोदु स वन काष्ठानि भिन्दत ॥ ३० ॥

सुप्तश्चाह वेदनया चिरमित्युपलक्षये ।
तावत्काल न च मया सुप्तपूर्वं कदाचन ॥ ३१ ॥

सर्वेपामेव भवता सन्तापो मा भवेदिति ।
अतो विरात्रागमन नान्यदस्तीह कारणम् ॥ ३२ ॥

गौतम उवाच ॥

अकस्माच्चक्षुप प्राप्तिर्द्युमत्सेनस्य ते पितु ।
नास्य त्व कारण वेत्सि सावित्री वक्तुमर्हति ॥ ३३ ॥

श्रोतुमिच्छामि सावित्रि, त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्रि, सावित्रीमिव तेजसा ॥ ३४ ॥

त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ॥ ३५ ॥

सावित्र्युवाच ॥

एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव यत् ॥ ३६ ॥

मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३७ ॥

सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३८ ॥

अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३९ ॥

चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ ४० ॥

चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं स्थिरं व्रतम् ॥ ४१ ॥

एतत्सर्वं मयाख्यातं कारणं विस्तरेण वः
यथा वृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४२ ॥

ऋषय ऊचुः ॥

निमज्जमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं
समुद्धृतं साध्वि, पुनः कुलीनया ॥ ४३ ॥

मार्कण्डेय उवाच ॥

तथा प्रशस्य ह्यभिपूज्य चैव
वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा
शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ४४ ॥

इति षष्ठोऽध्यायः ॥



## सप्तमोऽध्यायः ॥



मार्कण्डेय उवाच ॥

तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपौर्वाह्णिका सर्वे समेयुस्ते तपोधनाः ॥ १ ॥

तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ २ ॥

ततः प्रकृतयः सर्वाः शल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ ३ ॥

त मन्त्रिणा हत्त श्रुत्वा ससहाय सबान्धवम् ।
न्यवेदयंस्तथावृत्तं विद्रुत च द्विपद्बलम् ॥ ४ ॥

ऐकमत्यं च सर्वस्य जनस्याथ नृप प्रति ।
सचक्षुर्वाप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५ ॥

अनेन निश्चयेनेह वय प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्ग च ते बलम् ॥ ६ ॥

प्रयाहि राजन्, भद्र ते घुष्टस्ते नगरे जय. ।
अध्यास्व चिररात्राय पितृपैतामहं पदम् ॥ ७ ॥

चक्षुष्मन्तं च तं दृष्ट्वा राजान वपुषान्वितम् ।
मूर्ध्ना निपातिताः सर्वे विस्मयोत्फुल्ललोचना ॥ ८ ॥

ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिन. ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगर प्रति ॥ ९ ॥

शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृता· ॥ १० ॥

ततोऽभिषिषिचुः प्रीत्या द्युमत्सेन पुरोहिताः ।
पुत्रं चास्य महात्मान यौवराज्येऽभ्यषेचयन् ॥ ११ ॥

ततः कालेन महता सावित्र्याः कीर्तिवर्द्धनम् ।
तद्वै पुत्रशत जज्ञे शूराणामनिवर्तिनाम् ॥ १२ ॥

भ्रातॄणां सोदराणां च तथैवास्याभवन्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलम् ॥ १३ ॥

एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ १४ ॥

तथैवैषापि कल्याणी द्रौपदी शीलसम्मता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ १५ ॥

वैशम्पायन उवाच ॥
एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्, काम्यके न्यवसत्तदा ॥ १६ ॥

यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ १७ ॥

इति सप्तमोऽध्यायः ॥

इति श्रीमहाभारते आरण्यकपर्वणि पतिव्रतामाहात्म्ये सावित्र्युपाख्यान
२९२—२९८ अध्यायाः ॥



# ॥ शैव्याचरित्रम् ॥

श्रूयते च पुरा राजा ख्यातः शतधनुर्भुवि ।
पत्नी च तस्य शैव्याभूत्पतिधर्मपरायणा ॥ १ ॥

पतिव्रता महाभागा सत्यशौचदयान्विता ।
सर्वलक्षणसंपन्ना सपत्ना विनयेन च ॥ २ ॥

स तु राजा तया सार्धं देवदेवं जनार्दनम् ।
आराधयामास विभुं परमेण समाधिना ॥ ३ ॥

होमैर्जपैस्तथा दानैरुपवासैश्च भक्तितः ।
पूजाभिश्चानुदिवसं तन्मना नान्यमानसः ॥ ४ ॥

स कदा तु समं स्नातौ तौ तु भार्यापती जले ।
भागीरथ्याः समुत्तीर्णौ कार्तिक्यां समुपोषितौ ॥ ५ ॥

पापण्डिनमथायान्तं संमुखं तावपश्यताम् ।
चापाचार्यस्य तस्यासौ सखा राज्ञो महात्मनः ॥ ६ ॥

अतस्तद्गौरवात्तेन सहालापमथाकरोत् ।
न तु सा वाग्यता देवी तस्य पत्नी पतिव्रता ॥ ७ ॥

उपोषितास्मीति रविं तस्मिन्दृष्टे ददर्श ह ।
समागम्य यथान्यायं दंपती तौ यथाविधि ॥ ८ ॥

विष्णो प्रजादिकं सर्वं कृतवन्तौ द्विजोत्तम ।
कालेन गच्छता राजा ममारासौ सपत्नजित् ॥ ९ ॥

अन्वारुरोह सा देवी चितास्थं भूपतिं पतिम् ।
स तु तेनापचारेण श्वा जज्ञे वसुधापतिः ॥ १० ॥

उपोषितेन पाषण्डसल्लापो यत्कृतोऽभवत् ।
सापि जातिस्मरा जज्ञे काशीराजसुता शुभा ॥ ११ ॥

सर्वविज्ञानसंपूर्णा सर्वलक्षणपूजिता ।
तां पिता दातुकामोऽभूद्वराय विनिवारितः ॥ १२ ॥

तयैव तन्व्या विरतो विवाहारम्भतो नृपः ।
ततः सा दिव्यया दृष्ट्या दृष्ट्वा श्वानं निजं पतिम् ॥ १३ ॥
विदिशाख्यं पुरं गत्वा तदवस्थं ददर्श तम् ।
तं दृष्ट्वैव महाभागं श्वानभूतं पतिं तदा ॥ १४ ॥
ददौ तस्मै सदाहारं सत्कारप्रवणं शुभा ।
भुञ्जन्दत्तं तया सोऽन्नमतिमृष्टमभीप्सितम् ॥ १५ ॥
स्वजातिललितं कुर्वन्बहु चाटु चकार वै ।
अतीव व्रीडिता बाला कुर्वता चाटु तेन सा ॥ १६ ॥
प्रणामपूर्वमाहेदं दयितं तं कुयोनिजम् ।
स्मर्यतां तन्महाराज, दाक्षिण्याल्लपितं त्वया ॥ १७ ॥
येन श्वयोनिमापन्नो मम चाटुकरो भवान् ।
पाषण्डिनं समाभाष्य तीर्थस्नानादनन्तरम् ।
प्राप्तोऽसि कुत्सितां योनिं किं न स्मरसि तद्विभो ॥ १८ ॥

पराशर उवाच ॥

तयैव स्मारिते तस्मिन्पूर्वजातिकृते तदा ।
दध्यौ चिरमथावाप निर्वेदमतिदुर्लभम् ॥ १९ ॥

निर्विण्णचित्तः स ततो निर्गत्य नगराद्बहिः ।
मरुप्रपतनं कृत्वा सार्गालीं योनिमागतः ॥ २० ॥

सापि द्वितीये संप्राप्ते वीक्ष्य दिव्येन चक्षुषा ।
ज्ञात्वा सृगालं त द्रष्टुं ययौ कोलाहलं गिरिम् ॥ २१ ॥

तत्रापि दृष्ट्वा तं प्राह सार्गालीं योनिमागतम् ।
भर्तारमतिचार्वङ्गी तनया पृथिवीपतेः ॥ २२ ॥

पत्न्युवाच ॥

अपि स्मरसि राजेन्द्र, श्वयोनिस्थस्य यन्मया ।
प्रोक्तं ते पूर्वचरितं पाषण्डालापसंश्रयम् ॥ २३ ॥

पुनस्तयोक्तः स ज्ञात्वा सत्यं सत्यवतां वरः ।
कानने स निराहारस्तत्याज स्वकलेवरम् ॥ २४ ॥

भूयस्ततो वृको जज्ञे गत्वा तं निर्जने वने ।
स्मारयामास भर्तारं पूर्ववृत्तमनिन्दिता ॥ २५ ॥

न त्वं वृको महाभाग, राजा शतधनुर्भवान् ।
श्वा भूत्वा त्वं सृगालोऽभूर्वृकत्वं सांप्रत गतः ॥ २६ ॥

स्मारितेन यदा त्यक्तस्तेनात्मा गृध्रतां गतः ।
अवाप सा पुनश्चैनं बोधयामास मानिनी ॥ २७ ॥

नरेन्द्र, स्मर्यतामात्मा ह्यल ते गृध्रचेष्टया ।
पापण्डालापजातोऽय दोषो यद्गृध्रता गत ॥ २८ ॥

तत काकत्वमापन्न समनन्तरजन्मनि ।
उवाच तन्वी भर्तारमुपलभ्यात्मयोगत ॥ २९ ॥

अशेषभूभृत पूर्वं वश्या यस्मै बलिं ददु ।
स त्व काकत्वमापन्नो जातोऽद्य बलिभुक्प्रभो ॥ ३० ॥

एवमेव वकत्वेऽपि स्मारित स पुरातनम् ।
तत्याज भूपति प्राणान्मयूरत्वमवाप च ॥ ३१ ॥

मयूरत्वे तत सा वै चकारानुगतिं शुभा ।
दत्तै प्रतिक्षण भोज्यैर्नीला तज्जातिभोजनै ॥ ३२ ॥

ततस्तु जनको राजा वाजिमेध महाक्रतुम् ।
चकार तस्यावभृथे स्नापयामास त तदा ॥ ३३ ॥

स्नात्वा स्वय च तन्वङ्गी स्मारयामास त पतिम् ।
यथासौ श्वसृगालाद्या योनीर्जग्राह पार्थिव ॥ ३४ ॥

स्मृतजन्मक्रम सोऽथ तत्याज स्वकलेवरम् ।
जज्ञे स जनकस्यैव पुत्रोऽसौ सुमहात्मन ॥ ३५ ॥

तत सा पितर तन्वी विवाहार्थमचोदयत् ।
स चापि कारयामास तस्या राजा स्वयवरम् ॥ ३६ ॥

स्वयवरे कृते सा त सप्राप्त पतिमात्मन ।
वरयामास भूयोऽपि भर्तृभावेन भामिनी ॥ ३७ ॥

बुभुजे च तया सार्धं स भोगान्नृपनन्दनः।
पितर्युपरते राज्यं विदेहेषु चकार स. ॥ ३८ ॥

इयाज यज्ञान्सुबहून्ददौ दानानि चार्थिनाम।
पुत्रानुत्पादयामास युयुधे च सहारिभिः ॥ ३९ ॥

राज्यं भुक्त्वा यथान्यायं पालयित्वा वसुन्धराम्।
तत्याज स प्रियान्प्राणान्संग्रामे धर्मतो नृपः ॥ ४० ॥

ततश्चितास्थं तं भूयो भर्तारं सा शुभेक्षणा।
अन्वारुरोह विधिवद्यथापूर्वं मुदान्विता ॥ ४१ ॥

ततोऽवाप तया सार्धं राजपुत्र्या स पार्थिवः।
ऐन्द्रानतीत्य वै लोकाँल्लोकान्कामदुहोऽक्षयान् ॥ ४२ ॥

स्वर्गाक्षयत्वमतुलं दांपत्यमतिदुर्लभम्।
प्राप्तं पुण्यफलं प्राप्य सशुद्धिं तां द्विजोत्तम ॥ ४३ ॥

एष पाषण्डसंभाषदोष. प्रोक्तो मया द्विज।
तथाश्वमेधावभृथस्नानमाहात्म्यमेव च ॥ ४४ ॥

तस्मात्पापाण्डिभिः पापैरालापस्पर्शनं त्यजेत्।
विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥ ४५ ॥

क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते।
तस्यावलोकनात्सूर्यं प्रपश्येन्मतिमान्नरः ॥ ४६ ॥

किं पुनर्यस्य संत्यक्ता त्रयी सर्वात्मना द्विज।
पाषण्डभोजिभिः पापैर्वेदवादविरोधिभिः ॥ ४७ ॥

सहालापस्तु संसर्गः सहास्या चातिपापिनी ।
पाषण्डिभिर्दुराचारैस्तस्मात्तान्परिवर्जयेत् ॥ ४८ ॥

पाषण्डिनो विकर्मस्थान्वैडालव्रतिकाञ्शठान् ।
हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ ४९ ॥

दूरतस्तैस्तु संपर्कस्त्याज्यश्चाप्यतिपापिभिः ।
एते नग्नास्तवाख्याता दृष्टाः श्राद्धोपघातकाः ।
एषां संभाषणात्पुंसां दिनपुण्यं प्रणश्यति ॥ ५० ॥

इति श्रीविष्णुपुराणे तृतीयांशे
अष्टादशोऽध्यायः ॥



# ॥ पतिव्रतामाहात्म्यम् ॥

पुत्र उवाच ॥

कौशिको ब्राह्मणः कश्चित्प्रतिष्ठानेऽभवत्पुरे ।
सोऽन्यजन्मकृतैः पापैः कुष्ठरोगातुरोऽभवत् ॥ १ ॥

तं तथा व्याधितं भार्या पतिं देवमिवार्चयत् ।
पादाभ्यङ्गाङ्गसंवाहस्नानाच्छादनभोजनैः ॥ २ ॥

श्लेष्ममूत्रपुरीषासृक्प्रवाहक्षालनेन च ।
रहस्ये चोपचारेण प्रियसंभाषणेन च ॥ ३ ॥

सततं पूज्यमानोऽपि तयातीव विनीतया ।
अतितीव्रप्रकोपत्वान्निर्भर्त्सयति दारुणः ॥ ४ ॥

तथापि प्रणता साध्वी तममन्यत दैवतम् ।
तं तथाप्यतिबीभत्सं सर्वश्रेष्ठममन्यत ॥ ५ ॥

अचङ्क्रमणशीलोऽपि स कदाचिद्द्विजोत्तमः ।
प्राह भार्यां नयस्वेति त्वं मां तस्या निवेशनम् ॥ ६ ॥

या सा वेश्या मया दृष्टा राजमार्गे गृहे सता ।
तां मे प्रापय धर्मज्ञे, सैव मे हृदि वर्तते ॥ ७ ॥

दृष्टा सूर्योदये बाला रात्रिश्चेयमुपागता ।
दर्शनानन्तरं सा मे हृदयान्नापसर्पति ॥ ८ ॥

यदि मा चारुसर्वाङ्गी पीनश्रोणिपयोधरा ।
नोपगूहति तन्वङ्गी तन्मां द्रक्ष्यसि वै मृतम् ॥ ९ ॥

वामः कामो मनुष्याणां बहुभिः प्राप्यते च सः ।
ममाशक्तिश्च गमने सङ्कुलं प्रतिभाति मे ॥ १० ॥

ततस्तदा वचनं श्रुत्वा भर्तुः कामातुरस्य सा ।
तत्पत्नी व्याकुला जाता महाभागा पतिव्रता ॥ ११ ॥

गाढं परिकरं बद्ध्वा शुल्कमादाय चाधिकम् ।
स्कन्धे भर्तारमारोप्य जगाम मृदुगामिनी ॥ १२ ॥

निशि मेघावृते व्योम्नि चलद्विद्युच्च दृश्यते ।
राजमार्गे प्रियं भर्तुः चिकीर्षन्ती द्विजाङ्गना ॥ १३ ॥

पथि शूले तथा प्रोतमचोरं चोरशङ्कया ।
माण्डव्यमतिदुःखार्तमन्धकारे च स द्विजः ॥ १४ ॥

पत्नीस्कन्धसमारूढश्चालयामास कौशिकः ।
वामाङ्घ्रिणाथ संक्रुद्धो माण्डव्यस्तमुवाच ह ॥ १५ ॥

येनाहमेवमत्यर्थं दुःखितश्चालितो वृथा ।
इत्थं कष्टमनुप्राप्तः स पापात्मा नराधमः ॥ १६ ॥

सूर्योदयेऽवशः प्राणैर्वियोक्ष्यति न संशयः ।
भास्करालोकनादेव स विनाशमवाप्स्यति ॥ १७ ॥

तस्य भार्या ततः श्रुत्वा तं शापमतिदारुणम् ।
प्रोवाच व्यथिता सूर्यो नैवोदयमुपैष्यति ॥ १८ ॥

ततः सूर्योदयाभावादभवत्सन्तता निशा ।
बहून्यहःप्रमाणानि ततो देवा भयं ययुः ॥ १९ ॥

निस्स्वाध्यायवषट्कारं स्वधास्वाहाविवर्जितम् ।
कथं नु खल्विदं सर्वं न गच्छेत्संक्षयं जगत् ॥ २० ॥

अहोरात्रव्यवस्थाया विना मासर्तुसंक्षयः ।
तत्संक्षयाच्च त्वयने ज्ञायेते दक्षिणोत्तरे ॥ २१ ॥

विना चायनविज्ञानं कालः संवत्सरः कुतः ।
पतिव्रताया वचनान्नोद्गच्छति दिवाकरः ॥ २२ ॥

सूर्योदयं विना नैव स्नानदानादिका क्रिया ।
अग्नेर्विहरणं चैव क्रत्वभावश्च लक्ष्यते ॥ २३ ॥

न कालेन विना चेष्टिर्न च यज्ञादिका क्रिया ।
नश्यन्ति सर्वभूतानि तमोभूते चराचरे ॥ २४ ॥

नैवाप्यायनमस्माकं विना होमेन जायते ।
वयमाप्यायिता मर्त्यैर्यज्ञभागैर्यथोचितैः ॥ २५ ॥

वृष्ट्यादिनानुगृह्णीमो मर्त्यान्सस्याभिवृद्धये ।
निष्पादितास्वोषधीषु मर्त्या यज्ञैर्यजन्ति नः ॥ २६ ॥

एवं वयं प्रयच्छामः कामान्यज्ञादिपूजिताः ।
अधो हि वर्षाम वयं मर्त्याश्चोर्ध्वं प्रवर्षिणः ॥२७ ॥

तोयवर्षेण हि वयं हविर्वर्षेण मानवाः ।
योऽस्माकं न प्रयच्छन्ति नित्यनैमित्तिकीः क्रियाः ॥ २८ ॥

क्रतुभागं दुरात्मानः स्वय वाश्नन्ति लोलुपाः ।
विनाशाय वयं तेषां तोयसूर्याग्निमारुताः ॥ २९ ॥

क्षितिं च संदूषयामः पापानामपकारिणाम् ।
दुष्टतोयादिदोषेण तेषां दुष्कृतकर्मणाम् ॥ ३० ॥

उपसर्गाः प्रवर्तन्ते मरणाय सुदारुणाः ।
ये त्वस्मान्प्रीणयित्वा तु भुञ्जते शेषमात्मना ॥ ३१ ॥

तेषां पुण्यतमाँल्लोकान्वितरामो महात्मनाम ।
तन्नास्ति सर्वमेतद्धि न चोपायव्यवस्थितम ॥ ३२ ॥

कथं नु दिनसङ्गः स्यादन्योन्यमवदन्सुराः ।
तेषामेव समेतानां यज्ञव्युच्छित्तिशङ्किनाम् ॥ ३३ ॥

देवानां वचनं श्रुत्वा प्राह देव प्रजापति ।
तेजः परं तेजसैव तपसा च तपस्तथा ।
प्रशाम्यत्यमरास्तस्माच्छृणुध्वं वचन मम ॥ ३४ ॥

पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकर. ।
तस्य चानुदयाद्धानिर्मर्त्यानां भवतां यथा ॥ ३५ ॥

तस्मात्पतिव्रतामत्रेरनसूयां तपस्विनीम् ।
प्रसादयत वै पत्नीं भानोरुदयकाम्यया ॥ ३६ ॥

पुत्र उवाच ॥

तैः सा प्रसादिता गत्वा प्राहेष्ट व्रियतामिति ।
अयाचन्त दिन देवा भवत्विति यथा पुरा ॥ ३७ ॥

अनसूयोवाच ॥

पतिव्रताया माहात्म्य न हीयेत कथ त्विति ।
समान्यता तथा साध्वी तथा प्रेग्याम्यहं सुरा ॥ ३८ ॥

यथा पुनरहोरात्रसस्था समुपजायते ।
यथा च तस्या स पतिर्न शापान्नाशमेष्यति ॥ ३९ ॥

पुत्र उवाच ॥

एवमुक्त्वा सुरास्तस्या गत्वा सा मन्दिर शुभा ।
उवाच कुशल पृष्ट्वा धर्म भर्तुस्तथात्मन ॥ ४० ॥

कच्चिन्नन्दसि कल्याणि, स्वभर्तु मुखदायिनी ।
कच्चिदखिलदेवेभ्यो मन्यसे ह्यधिक पतिम ॥ ४१ ॥

भर्तु शुश्रूषणादेव मया प्राप्त महत्फलम् ।
सर्वकामफलावाप्ति पत्यु शुश्रूषणात्स्त्रिय ॥ ४२ ॥

पञ्चर्णानि मनुष्येण साध्वि, देयानि सर्वदा ।
तथात्मवर्णधर्मेण कर्तव्यो धनसचय ॥ ४३ ॥

प्राप्तश्चार्थस्तथा पात्रे विनियोज्यो विधानत ।
सत्यार्जवतपोदानदयायुक्तो भवेत्सदा ॥ ४४ ॥

क्रिया च शास्त्रनिर्दिष्टा रागद्वेषविवर्जिता ।
कर्तव्याहरह श्रद्धापुरस्कारेण शक्तित ॥ ४५ ॥

स्वजातिविहितानेव लोकान्प्राप्नोति मानव ।
क्लेशेन महता साध्वि, प्राजापत्यादिकान्क्रमात् ॥ ४६ ॥

स्त्रियश्चैवं समस्तस्य नरैर्दुःखार्जितस्य वै ।
पुण्यस्यार्धापहारिण्यः पतिशुश्रूषयैव हि ॥ ४७ ॥

नास्ति स्त्रीणां पृथग्यज्ञो न श्राद्धं नाप्युपोषितम् ।
भर्तुः शुश्रूषयैवैता लोकानिष्टाञ्जयन्ति हि ॥ ४८ ॥

तस्मात्साध्वि, महाभागे, पतिशुश्रूषणं प्रति ।
त्वया मतिः सदा कार्या यतो भर्ता परा गतिः ॥ ४९ ॥

यद्देवेभ्यो यच्च पित्रादिकेभ्यः
कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च ।
तस्याऽर्धं वै केवलानन्यचित्ता
नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥ ५० ॥

पुत्र उवाच ॥

तस्यास्तद्वचनं श्रुत्वा प्रतिपूज्य तदादरात् ।
प्रत्युवाचात्रिपत्नीं तामनसूयामिदं वचः ॥ ५१ ॥

धन्यास्म्यनुगृहीतास्मि देवस्याप्यवलोकतः ।
यन्मे प्रकृतिकल्याणि, श्रद्धां वर्द्धयसे पुनः ॥ ५२ ॥

जानाम्येतन्न नारीणां किंचित्पतिसमा गतिः ।
तत्प्रीतिश्चोपकाराय इह लोके परत्र च ॥ ५३ ॥

पतिप्रसादादिह च प्रेत्य चैव यशस्विनी ।
नारी सुखमवाप्नोति नार्या भर्ता हि दैवतम् ॥ ५४ ॥

सा त्वं ब्रूहि महाभागे, प्राप्ताया मम मन्दिरम् ।
आर्यायाः किं नु कर्तव्यं मयार्येणापि वा शुभे ॥ ५५ ॥

अनसूयोवाच ॥

एते देवा सहेन्द्रेण मामुपागम्य दुःखिताः ।
त्वद्वाक्यापास्तसत्कर्मदिननक्तनिरूपणाः ॥ ५६ ॥

याचन्तेऽहर्निशासंस्था यथावदविखण्डिताम् ।
अहं तदर्थमायाता शृणु चैतद्वचो मम ॥ ५७ ॥

दिनाभावात्समस्तानामभावो यागकर्मणाम् ।
तदभावात्सुरास्तुष्टिं नोपयान्ति तपस्विनि ॥ ५८ ॥

अह्नश्चैव समुच्छेदादुच्छेदः सर्वकर्मणाम् ।
तदुच्छेदादनावृष्ट्या जगदुच्छेदमेष्यति ॥ ५९ ॥

तत्त्वमिच्छामि धैर्येण जगदुद्धर्तुमापदः ।
प्रसीद साध्वि, लोकानां पूर्ववद्वर्ततां रविः ॥ ६० ॥

ब्राह्मण्युवाच ॥

माण्डव्येन महाभागे, शप्तो भर्ता ममेश्वरः ।
सूर्योदये विनाशं त्वं प्राप्स्यसीत्यतिमन्युना ॥ ६१ ॥

अनसूयोवाच ॥

यदि ते रोचते भद्रे, ततस्तद्वचनादहम् ।
करोमि पूर्ववद्देहं भर्तारं वचनात्तव ॥ ६२ ॥

मयापि सर्वथा स्त्रीणां माहात्म्यं वरवर्णिनि।
पतिव्रतानामाराध्यमिति संमानयामि ते ॥ ६३ ॥

पुत्र उवाच ॥

तथेत्युक्ते तया सूर्यमाजुहाव तपस्विनी ।
अनसूयार्घ्यमुद्यम्य अर्द्धरात्रे तदा निशि ॥ ६४ ॥

ततो विवस्वान्भगवान्फुल्लपद्मारुणाकृतिः ।
शैलाधिराजमुदयमारुरोहोरुमण्डलः ॥ ६५ ॥

समनन्तरमेवास्य भर्ता प्राणैर्व्ययुज्यत ।
पपात च महीपृष्ठे पतन्तं जगृहे च सा ॥ ६६ ॥

अनसूयोवाच ॥

न विषादस्त्वया भद्रे, कर्तव्यः पश्य मे बलम् ।
पतिशुश्रूषयावाप्तं तपसः किं चिरेण मे ॥ ६७ ॥

यथा भर्तृसमं नान्यमपश्यं पुरुषं क्वचित् ।
रूपतः शीलतो बुद्ध्या वाङ्माधुर्यादिभूषणैः ॥ ६८ ॥

तेन सत्येन विप्रोऽयं व्याधिमुक्तः पुनर्युवा ।
प्राप्नोतु जीवितं भार्यासहायः शरदां शतम् ॥ ६९ ॥

यथा भर्तृसमं नान्यमहं पश्यामि दैवतम् ।
तेन सत्येन विप्रोऽयं पुनर्जीवत्वनामयः ॥ ७० ॥

कर्मणा मनसा वाचा भर्तुराराधनं प्रति ।
यथा ममोद्यमो नित्यं तथायं जीवताद्विजः ॥ ७१ ॥

पुत्र उवाच ॥

ततो विप्रः समुत्तस्थौ व्याधिमुक्तः पुनर्युवा ।
स्वभाभिर्भासयन्वेश्म वृन्दारक इवाजरः ॥ ७२ ॥

ततोऽपतत्पुष्पवृष्टिर्देववाद्यानि सस्वनुः ।
लेभिरे च मुदं देवा अनसूयामथाब्रुवन् ॥ ७३ ॥

देवा ऊचुः ॥

वरं वृणीष्व कल्याणि, देवकार्यं महत्कृतम् ।
आदित्योदयसद्भावाद्वरं वरय सुव्रते ।
त्वया यस्मात्ततो देवा वरदास्ते तपस्विनि ॥ ७४ ॥

अनसूयोवाच ॥

यदि देवाः प्रसन्ना मे पितामहपुरोगमाः ।
वरदा वरयोग्या च यद्यहं भवतां मता ॥ ७५ ॥

तद्यान्तु मम पुत्रत्वं ब्रह्मविष्णुमहेश्वराः ।
योगं च प्राप्नुयां भर्तृसहिता क्लेशमुक्तये ॥ ७६ ॥

पुत्र उवाच ॥

एवमस्त्विति देवास्तां ब्रह्मविष्णुशिवादयः ।
उक्त्वा जग्मुर्यथान्यायमनुमान्य तपस्विनीम् ॥ ७७ ॥

इति श्रीमार्कण्डेयपुराणे पतिव्रतामाहात्म्ये
षोडशाध्यायः ॥



# ॥ सुकन्याचरित्रम् ॥



व्यासः ॥

वैवस्वतसुतः श्रीमाञ्छर्यातिर्नाम पार्थिवः ।
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहाः ॥ १ ॥

राजपुत्र्यः सुरूपाश्च सर्वलक्षणसंयुताः ।
पत्न्यः प्रेमयुताः सर्वाः प्रियाः राज्ञः सुसंमताः ॥ २

एका पुत्री तु तासां वै सुकन्या नाम सुन्दरी ।
पितुः प्रिया च मातॄणां सर्वासां चारुहासिनी ॥ ३ ।

नगरान्नातिदूरेऽभूत्सरो मानससन्निभम् ।
बद्धसोपानमार्गं च स्वच्छपानीयपूरितम् ॥ ४ ॥

हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
दात्यूहसारसाकीर्णं सर्वपक्षिगणावृतम् ॥ ५ ॥

पञ्चधा कमलोपेतं चञ्चरीकसुसेवितम् ।
पार्श्वतश्च द्रुमाकीर्णं वेष्टितं पादपैः शुभैः ॥ ६ ॥

सालैस्तमालैः सरलैः पुन्नागाशोकमण्डितम् ।
वटाश्वत्थकदम्बैश्च कदलीखण्डराजितम् ॥ ७ ॥

जम्बीरैर्बीजपूरैश्च खर्जूरैः पनसैस्तथा ।
क्रमुकैर्नारिकेलैश्च केतकैः काञ्चनद्रुमैः ॥ ८ ॥

यूथिकाजालकै शुभ्रै सवृत मल्लिकागणै ।
जम्बाम्रतिन्त्रिणीभिश्च करञ्जकुटजावृतम् ॥ ९ ॥

पलाशनिम्बखदिरबिल्वामलकमण्डितम् ।
बभूव कोकिलारावकेकास्वनविराजितम ॥ १० ॥

तत्समीपे शुभे देशे पादपाना गणावृते ।
भार्गवश्च्यवन शान्तस्तापस सस्थितो मुनि ॥ ११ ॥

ज्ञात्वासौ विजनस्थान तपस्येथे समाहित ।
कृत्वा न्द्वासन मौनमाधाय जितमारुत ॥ १२ ॥

इन्द्रियाणि च सयम्य त्यक्ताहारस्तपोनिधि ।
जलपानादिरहितो ध्यायन्नास्ते पराम्बिकाम् ॥ १३ ॥

सवल्मीकोऽभवद्राजन , लताभि परिवेष्टित ।
कालेन महता राजन , समाकीर्ण पिपीलिकै ॥ १४ ॥

तथा स सवृतो धीमान्मृत्पिण्ड इव सर्वत ।
कदाचित्स महीपाल कामिनीगणसवृत ॥ १५ ॥

आजगाम सरो राजन्विहर्तुमिदमुत्तमम् ।
शर्याति सुन्दरीवृन्दसयुत सलिलेऽमले ॥ १६ ॥

क्रीडासक्तो महीपालो बभूव कमलाकरे ।
सुकन्या वनमासाद्य विजहार सखीवृता ॥ १७ ॥

सुमनासि विचिन्वन्ती चञ्चला चञ्चलोपमा ।
सर्वाभरणसयुक्ता रणत्ररणनूपुरा ॥ १८ ॥

चङ्क्रम्यमाणा वल्मीकं च्यवनस्य समासदन् ।
क्रीडासक्तोपविष्टा सा वल्मीकस्य समीपतः ॥ १९ ॥

ददर्श चास्य रन्ध्रे वै खद्योत इव ज्योतिषी ।
किमेतदिति संचिन्त्य समुद्धर्तुं मनो दधे ॥ २० ॥

गृहीत्वा कण्टकं तीक्ष्णं त्वरमाणा कृशोदरी ।
सा दृष्टा मुनिना बाला समीपस्था कृतोद्यमा ॥ २१

विचरन्ती सुकेशान्ता मन्मथस्येव कामिनी ।
तां वीक्ष्य सुदतीं तत्र क्षामकण्ठस्तपोनिधिः ॥ २२

तामभाषत कल्याणीं किमेतदिति भार्गव. ।
दूरं गच्छ विशालाक्षि, तापसोऽहं वरानने ॥ २३ ॥

मा भिन्दस्वाद्य वल्मीकं कण्टकेन कृशोदरि ।
तेनेदं प्रोच्यमानापि सा चास्य न शृणोति वै ॥ २४

किमु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ।
दैवेन नोदिता भित्त्वा जगाम नृपकन्यका ॥ २५ ॥

क्रीडन्ती शङ्कमाना सा किं कृतं तु मयेति च ।
चुक्रोध स तया विद्धनेत्र. परममन्युमान् ॥ २६ ॥

वेदनाभ्यर्दितः कामं परितापं जगाम ह ।
शकृन्मूत्रनिरोधोऽभूत्सैनिकानां तु तत्क्षणात् ॥ २७ ॥

विशेषेण तु भूपस्य सामात्यस्य समन्ततः ।
गजोष्ट्रतुरगाणां च सर्वेषां प्राणिनां तदा ॥ २८ ॥

ततो रुद्धे शकृन्मूत्रे शर्यातिर्दुःखितोऽभवत् ।
सैनिकैः कथितं तस्मै शकृन्मूत्रनिरोधनम् ॥ २९ ॥

चिन्तयामास भूपालः कारणं दुःखसंभवे ।
विचिन्त्याह ततो राजा सैनिकान्स्वजनांस्तथा ॥ ३० ॥

गृहमागत्य चिन्तार्तः केनेदं दुष्कृतं कृतम् ।
सरसः पश्चिमे भागे वनमध्ये महातपाः ॥ ३१ ॥

च्यवनस्तापसस्तत्र तपश्चरति दुश्चरम् ।
केनाप्यपकृतं तत्र तापसेऽग्निसमप्रभे ॥ ३२ ॥

तस्मात्पीडा समुत्पन्ना सर्वेषामिति निश्चयः ।
तपोवृद्धस्य वृद्धस्य वरिष्ठस्य विशेषतः ॥ ३३ ॥

केनाप्यपकृतं मन्ये भार्गवस्य महात्मनः ।
ज्ञातं वा यदि वाज्ञातं तस्येदं फलमुत्तमम् ॥ ३४ ॥

कैश्च दुष्टैः कृतं तस्य हेलनं तापसस्य ह ।
इति पृष्टास्तमूचुस्ते सैनिका वदनार्दिताः ।
मनोवाक्कायजनितं न विद्मोऽपकृतं वयम् ॥ ३५ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

व्यास उवाच ॥

इति पप्रच्छ तान्सर्वान्राजा चिन्ताकुलस्तथा ।
पर्यप्रच्छत्सुहृद्वर्गं साम्ना चोग्रतयापि च ॥ १ ॥

पीडयमानं जनं वीक्ष्य पितरं दुःखितं तथा ।
विचिन्त्य शूलभेदं सा सुकन्या चेदमब्रवीत् ॥ २ ॥

वने मया पितस्तत्र वल्मीको वीरुधा वृतः ।
क्रीडन्त्या सुदृढो दृष्टश्छिद्रद्वयसमन्वितः ॥ ३ ॥

तत्र खद्योतवद्दीप्ते ज्योतिषी वीक्षिते मया ।
सूच्या विद्धे महाराज, पुनः खद्योतशङ्कया ॥ ४ ॥

जलक्लिन्ना तदा सूची मया दृष्टा पितः, किल ।
हा हेति च श्रुतः शब्दो मन्दो वल्मीकमध्यतः ॥ ५ ॥

तदाहं विस्मिता राजन्, किमेतदिति शङ्कया ।
न जाने किं मया विद्धं तस्मिन्वल्मीकमण्डले ॥ ६ ॥

राजा श्रुत्वा तु शर्यातिः सुकन्यावचनं मृदु ।
मुनेस्तद्धेलनं ज्ञात्वा वल्मीकं क्षिप्रमभ्यगात् ॥ ७ ॥

तत्रापश्यत्तपोवृद्धं च्यवनं दुःखितं भृशम् ।
स्फोटयामास वल्मीकं मुनिदेहावृतं भृशम् ॥ ८ ॥

प्रणम्य दण्डवद्भूमौ राजा तं भार्गवं प्रति ।
तुष्टाव विनयोपेतस्तमुवाच कृताञ्जलिः ॥ ९ ॥

पुत्र्या मम महाभाग, क्रीडन्त्या दुष्कृतं कृतम् ।
अज्ञानाद्बालया ब्रह्मन्, कृतं तत्क्षन्तुमर्हसि ॥ १० ॥

अक्रोधना हि मुनयो भवन्तीति मया श्रुतम् ।
तस्मात्त्वमपि बालाया क्षन्तुमर्हसि साम्प्रतम् ॥ ११ ॥

व्यास उवाच ॥

इति श्रुत्वा वचस्तस्य च्यवनो वाक्यमब्रवीत् ।
विनयोपनतं दृष्ट्वा राजानं दुःखितं भृशम् ॥ १२ ॥

च्यवन उवाच ॥

राजन्नाहं कदाचिद्वै करोमि क्रोधमण्वपि ।
न मयान्नैव शप्तस्त्वं दुहित्रा पीडने कृते ॥ १३ ॥

नेत्रे पीडा समुत्पन्ना मम चाद्य निरागसः ।
तेन पापेन जानामि दुःखितस्त्वं महीपते ॥ १४ ॥

अपराधं परं कृत्वा देवीभक्तस्य को जनः ।
सुखं लभेत यद्यपि भवेत्त्राता शिवः स्वयम् ॥ १५ ॥

किं करोमि महीपाल, नेत्रहीनो जरावृतः ।
अन्धस्य परिचर्यां च कः करिष्यति पार्थिव ॥ १६ ॥

राजोवाच ॥

सेवका बहवः सेवां करिष्यन्ति तवानिशम् ।
क्षमस्व मुनिशार्दूल, स्वल्पक्रोधा हि तापसाः ॥ १७ ॥

च्यवन उवाच ॥

अन्धोऽहं निर्जनो राजन्, तपस्तप्तुं कथं क्षमः ।
त्वदीयाः सेवकाः किन्ते करिष्यन्ति मम प्रियम् ॥ १८ ॥

क्षमापयसि चेन्मां त्वं कुरु मे वचनं नृप ।
देहि मे परिचर्यार्थं कन्यां कमललोचनाम् ॥ १९ ॥

तुष्येऽनया महाराज, पुत्र्या तव महामते ।
करिष्यामि तपश्चाहं सा मे सेवां करिष्यति ॥ २० ॥

एवं कृते सुखं मे स्यात्तव चैव भविष्यति ।
सन्तुष्टे मयि राजेन्द्र, सैनिकानां न संशयः ॥ २१ ॥

विचिन्त्य मनसा भूप, कन्यादानं समाचर ।
न चात्र दूषणं किञ्चित्तापसोऽहं यतव्रतः ॥ २२ ॥

व्यास उवाच ॥

शर्यातिर्वचनं श्रुत्वा मुनेश्चिन्तातुरोऽभवत् ।
न दास्येऽप्यथवा दास्ये किञ्चिन्नोवाच भारत ॥ २३ ॥

कथमन्धाय वृद्धाय कुरूपाय सुतामिमाम् ।
देवकन्योपमां दत्वा सुखी स्यामात्मसंभवाम् ॥ २४ ॥

को वात्मनः सुखार्थाय पुत्र्याः संसारजं सुखम् ।
हरतेऽल्पमतिः पापो जानन्नपि शुभाशुभम् ॥ २५ ॥

प्राप्य सा च्यवनं सुभ्रूः पञ्चबाणशरार्दिता ।
अन्धं वृद्धं पतिं प्राप्य कथं कालं नयिष्यति ॥ २६ ॥

यौवने दुर्जय कामो विशेषेण सुरूपया ।
आत्मतुल्य पति प्राप्य किमु वृद्ध विलोचनम् ॥ २७ ॥

गौतम तापस प्राप्य रूपयौवनसयुता ।
अहल्या वासवेनाशु वञ्चिता वरवर्णिनी ॥ २८ ॥

शप्ता च पतिना पश्चाज्ज्ञात्वा धर्मविपर्ययम् ।
तस्माद्भवतु मे दु ख न ददामि सुकन्यकाम् ॥ २९ ॥

इति सचिन्त्य शर्यातिर्विमना स्वगृह ययौ ।
सचिवाश्च समाहूय मन्त्र चक्रेऽतिदु खित ॥ ३० ॥

भो मन्त्रिणो, ब्रुवन्त्वद्य कि कर्तव्य मयाधुना ।
पुत्री देयाय विप्राय भोक्तव्य दु खमेव वा ।
विचारयध्व मिलिता हित स्यान्मम वै कथम ॥ ३१ ॥

मन्त्रिण ऊचु ॥

कि ब्रूमोऽस्मिन्महाराज, सङ्कटेऽतिदुरासदे ।
दुर्भगाय सुकन्यैषा कथ देयातिसुन्दरी ॥ ३२ ॥

व्यास उवाच ॥

तदा चिन्ताकुल वीक्ष्य पितर मन्त्रिणस्तदा ।
सुकन्या त्विङ्गित ज्ञात्वा प्रहस्येदमुवाच ह ॥ ३३ ॥

पित , कस्माद्भवानद्य चिन्ताव्याकुलितेन्द्रिय ।
मत्कृते दु खसविग्नो विषण्णवदनोऽसि वै ॥ ३४ ॥

अह गत्वा मुनि तत्र समाश्वास्य मयार्दितम् ।
करिष्यामि प्रसन्न तमात्मदानेन वै पित ।॥ ३५ ॥

इति राजा वचः श्रुत्वा भाषितं यत्सुकन्यया ।
तामुवाच प्रसन्नात्मा सचिवानां च शृण्वताम् ॥ ३६ ॥

कथं पुत्रि, त्वमन्धस्य परिचर्यां वनेऽबला ।
करिष्यसि जरार्तस्य क्रोधनस्य विशेषत ॥ ३७ ॥

कथमन्धाय चानेन रूपेण रतिसन्निभाम् ।
ददामि जरया ग्रस्तदेहाय सुखवाञ्छया ॥ ३८ ॥

पित्रा पुत्री प्रदातव्या वयोज्ञातिबलाय च ।
धनधान्यसमृद्धाय नाधनाय कदाचन ॥ ३९ ॥

क्व ते रूपं विशालाक्षि, क्वासौ वृद्धो वनेचरः ।
कथं देया मया पुत्री तस्मै चातिवराय च ॥ ४० ॥

उटजे नियत वासो यस्य नित्य मनोहरे ।
कथमम्बुजपत्राक्षि, कल्पनीयो मया तव ॥ ४१ ॥

मरणं मे वर प्राप्तं सैनिकानां तथैव च ।
न ते प्रदानमन्धाय रोचते पिकभाषिणि ॥ ४२ ॥

भवितव्यं भवत्येव धैर्यं नैव त्यजाम्यहम् ।
सुस्थिरा भव सुश्रोणि, न दास्येऽन्धाय कर्हिचित् ॥ ४३ ॥

राज्यं तिष्ठतु वा यातु देहोऽयं च तथैव मे ।
न त्वां दास्याम्यहं तस्मै नेत्रहीनाय बालिके ॥ ४४ ॥

सुकन्या त तदा प्राह श्रुत्वा तद्वचनं पितुः ।
प्रसन्नवदनातीव स्नेहयुक्तमिदं वचः ॥ ४५ ॥

सुकन्योवाच ॥

न मे चिन्ता पित., कार्या देहि मा मुनयेऽधुना ।
सुखं भवतु सर्वेषा लोकानां मत्कृतेन हि ॥ ४६ ॥

सेवयिष्यामि संतुष्टा पतिं परमपावनम ।
भक्त्या परमया चापि वृद्धं च विजने वने ॥ ४७ ॥

सती धर्मपरा चाहं चरिष्यामि सुसंमतम् ।
न भोगेच्छास्ति मे तात, स्वस्थ चित्तं ममानघ ॥ ४८ ॥

व्यास उवाच ॥

तच्छ्रुत्वा भाषितं तस्या मन्त्रिणो विस्मयं गताः ।
राजा च परमप्रीतो जगाम मुनिसन्निधौ ॥ ४९ ॥

गत्वा प्रणम्य शिरसा तमुवाच तपोधनम् ।
स्वामिन्, गृहाण पुत्रीं मे सेवार्थं विधिवद्विभो ॥ ५० ॥

इत्युक्त्वास्मै ददौ पुत्रीं विवाहविधिना नृप. ।
प्रतिगृह्य मुनिः कन्या प्रसन्नो भार्गवोऽभवत् ॥ ५१ ॥

पारिबर्हं न जग्राह दीयमानं नृपेण ह ।
कन्यामेवाग्रहीत्काम परिचर्यार्थमात्मनः ॥ ५२ ॥

प्रसन्नेऽस्मिन्मुनौ जातं सैनिकानां सुख तदा ।
राज्ञश्च परमाह्लाद. संजातस्तत्क्षणादपि ॥ ५३ ॥

दत्वा पुत्रीं यदा राजा गमनाय गृहं प्रति ।
मति चकार तन्वङ्गी तदोवाच नृपं सुता ॥ ५४ ॥

सुकन्योवाच ।

गृहाण मम वासांसि भूपणानि च मे पितः ।
वल्कलं परिधानाय प्रयच्छाजिनमुत्तमम् ॥ ५५ ॥

वेपं तु मुनिपत्नीनां कृत्वा तपसि सेवनम् ।
करिष्यामि तथा तात, यथा ते कीर्तिरच्युता ॥ ५६ ॥

भविष्यति भुवः पृष्ठे तथा स्वर्गे रसातले ।
परलोकसुखायाहं चरिष्यामि दिवानिशम् ॥ ५७ ॥

दत्वान्धाय च वृद्धाय सुन्दरीं युवतीं तु माम् ।
चिन्ता त्वया न कर्तव्या शीलनाशसमुद्भवा ॥ ५८ ॥

अरुन्धती वसिष्ठस्य धर्मपत्नी यथा भुवि ।
तथैवाहं भविष्यामि नात्र कार्या विचारणा ॥ ५९ ॥

अनसूया यथा साध्वी भार्यात्रेः प्रथिता भुवि ।
तथैवाहं भविष्यामि पुत्री कीर्तिकरी तव ॥ ६० ॥

सुकन्यावचनं श्रुत्वा राजा परमधर्मवित् ।
दत्वाजिनं रुरोदाशु वीक्ष्य तां चारुहासिनीम् ॥ ६१ ॥

त्यक्त्वा भूपणवासांसि मुनिवेपधरां सुताम् ।
विवर्णवदनो भूत्वा स्थितस्तत्रैव पार्थिवः ॥ ६२ ॥

राज्ञ्यः सर्वाः सुतां दृष्ट्वा वल्कलाजिनधारिणीम् ।
रुरुदुर्भृशशोकार्ता वेपमाना इवाभवन ॥ ६३ ॥

तामापृच्छय महीपालो मन्त्रिभिः परिवारितः ।
ययौ स्वनगरं राजा मुक्त्वा पुत्रीं शुचार्पिताम् ॥ ६४ ॥

द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः ॥

---

व्यास उवाच ॥

गते राजनि सा बाला पतिसेवापरायणा ।
बभूव च तथाग्नीनां सेवने धर्मतत्परा ॥ १ ॥

फलान्यादाय स्वादूनि मूलानि विविधानि च ।
ददौ सा मुनये बाला पतिसेवापरायणा ॥ २ ॥

पतिं तप्तोदकेनाशु स्नापयित्वा मृगत्वचा ।
परिवेष्ट्य शुभायां तु बृस्यां स्थापितवत्यपि ॥ ३ ॥

तिलान्यवकुशानग्रे परिकल्प्य कमण्डलुम् ।
तमुवाच नित्यकर्म कुरुष्व मुनिसत्तम ॥ ४ ॥

तमुत्थाप्य करे कृत्वा समाप्ते नित्यकर्मणि ।
बृस्यां वा संस्तरे बाला भर्तारं सन्यवेशयत् ॥ ५ ॥

पश्चादानीय पक्वानि फलानि च नृपात्मजा ।
भोजयामास च्यवनं नीवारान्नं सुसंस्कृतम् ॥ ६ ॥

भुक्तवन्तं पतिं तृप्तं दत्वाचमनमादरात् ।
पश्चाच्च पूगपत्राणि ददौ चादरसंयुता ॥ ७ ॥

गृहीतमुखवासं तं संवेश्य च शुभासने ।
गृहीत्वाज्ञां शरीरस्य चकार साधनं ततः ॥ ८ ॥

फलाहारं स्वयं कृत्वा पुनर्गत्वा च सन्निधौ ।
प्रोवाच प्रणयोपेता किमाज्ञापयसे प्रभो ॥ ९ ॥

पादसंवाहनं तेऽद्य करोमि यदि मन्यसे ।
एवं सेवापरा नित्यं बभूव पतितत्परा ॥ १० ॥

सायं होमावसाने सा फलान्याहृत्य सुन्दरी ।
अर्पयामास मुनये स्वादूनि च मृदूनि च ॥ ११ ॥

ततः शेषाणि बुभुजे प्रेमयुक्ता तदाज्ञया ।
सुस्पर्शास्तरणं कृत्वा शाययामास तं मुदा ॥ १२ ॥

सुप्ते सुखं प्रिये कान्तपादसंवाहनं तदा ।
चकार पृच्छती धर्मं कुलस्त्रीणां कृशोदरी ॥ १३ ॥

पादसंवाहनं कृत्वा निशि भक्तिपरायणा ।
निद्रितं च मुनिं ज्ञात्वा सुष्वाप चरणान्तिके ॥ १४ ॥

शुचौ प्रतिष्ठितं वीक्ष्य तालवृन्तेन भामिनी ।
कुर्वाणा शीतलं वायुं सिषेवे स्वपतिं तदा ॥ १५ ॥

हेमन्ते काष्ठसंभारं कृत्वाग्निज्वालनं पुरः ।
स्थापयित्वा तथापृच्छत्सुखं नेऽस्तीति चासकृत् ॥ १६ ॥

ब्राह्मे मुहूर्ते चोत्थाय जलपात्र च मृत्तिकाम् ।
समर्पयित्वा शौचार्थं समुत्थाप्य पति प्रिया ॥ १७ ॥

स्थानाद्दूरे च सस्थाप्य दूर गत्वा स्थिराभवत् ।
कृतशौच पति ज्ञात्वा गत्वा जग्राह त पुन ॥ १८ ॥

आनीयाश्रममव्यग्रा चोपवेश्यासने शुभे ।
मृज्जलाभ्या च प्रक्षाल्य पादावस्य यथाविधि ॥ १९ ॥

दत्वाचमनमात्र तु दन्तधावनमाचरेत् ।
समर्प्य दन्तकाष्ठ च यथोक्त नृपनन्दिनी ॥ २० ॥

चकारोष्ण जल शुद्ध समानीत सुपावनम ।
स्नानार्थं जलमाहृत्य पप्रच्छ प्रणयान्विता ॥ २१ ॥

किमाज्ञापयसे ब्रह्मन्, कृत वै दन्तधावनम् ।
उष्णोदक सुसपन्न कुरु स्नान समन्त्रकम् ॥ २२ ॥

वर्तते होमकालोऽय सन्ध्या पूर्वा प्रवर्तते ।
विधिवद्धवन कृत्वा देवतापूजन कुरु ॥ २३ ॥

एव कन्या पति लब्ध्वा तपस्विनमनिन्दिता ।
नित्य पर्यचरत्प्रीत्या तपसा नियमेन च ॥ २४ ॥

अग्नीनामतिथीना च शुश्रूषा कुर्वती सदा ।
आराधयामास मुदा च्यवन सा शुभानना ॥ २५ ॥

कस्मिंश्चिदथ काले तु रविजावश्विनावुभौ ।
च्यवनस्याश्रमाभ्याशे क्रीडमानौ समागतौ ॥ २६ ॥

जले स्नात्वा तु तां कन्यां निवृत्तां स्वाश्रमं प्रति ।
गच्छन्तीं चारुसर्वाङ्गीं रविपुत्रावपश्यताम् ॥ २७ ॥

तां दृष्ट्वा देवकन्याभां गत्वा चान्तिकमादरात् ।
ऊचतुः समभिद्रुत्य नासत्यावतिमोहितौ ॥ २८ ॥

क्षणं तिष्ठ वरारोहे, प्रष्टुं त्वां गजगामिनि ।
आवां देवसुतौ प्राप्तौ ब्रूहि मत्य शुचिस्मिते ॥ २९ ॥

पुत्री कस्य पतिः कस्ते कथमुद्यानमागता ।
एकाकिनी तटाकेऽस्मिन्स्नानार्थं चारुलोचने ॥ ३० ॥

द्वितीया श्रीरिवाभासि कान्त्या कमललोचने ।
इच्छामस्तु वयं ज्ञातु तत्त्वमाख्याहि शोभने ॥ ३१ ॥

कोमलौ चरणौ कान्ते, स्थितौ भूमावनावृतौ ।
हृदये कुरुतः पीडां चलन्तौ चललोचने ॥ ३२ ॥

विमानार्हासि तन्वङ्गी कथं पद्भ्यां व्रजस्यधः ।
अनावृतात्र विपिने किमर्थं गमनं तव ॥ ३३ ॥

दासीशतसमायुक्ता कथं न त्वं विनिर्गता ।
राजपुत्र्यप्सरा वासि वद सत्यं वरानने ॥ ३४ ॥

धन्या माता यतो जाता धन्योऽसौ जनकस्तव ।
वक्तु त्वां नैव शक्तौ च भर्तुर्भाग्यं तवानघे ॥ ३५ ॥

देवलोकाधिका भूमिरियं चैव सुलोचने ।
प्रचलश्चरणस्तेऽत्र संपावयति भूतलम् ॥ ३६ ॥

सौभाग्याश्च मृगाः काम ये त्वां पश्यन्ति वै वने ।
ये चान्ये पक्षिणः सर्वे भूरियं चातिपावना ॥ ३७ ॥

स्तुत्याल तव चात्यर्थं सत्य ब्रूहि सुलोचने ।
पिता कस्ते पतिः क्वासौ द्रष्टुमिच्छास्ति सादरम् ॥ ३८ ॥

व्यास उवाच ॥
तयोरिति वचः श्रुत्वा राजकन्यातिसुन्दरी ।
तावुवाच त्रपाक्रान्ता देवपुत्रौ नृपात्मजा ॥ ३९ ॥

शर्यातितनयां मां वां वित्तं भार्यां मुनेरिह ।
च्यवनस्य सतीं कान्तां पित्रा दत्तां यदृच्छया ॥ ४० ॥

पतिरन्धोऽस्ति मे देवौ वृद्धश्चातीव तापस. ।
तस्य सेवामहोरात्रं करोमि प्रीतमानसा ॥ ४१ ॥

कौ युवां किमिहायातौ पतिस्तिष्ठति चाश्रमे ।
तत्रागत्य प्रकुरुतमाश्रम चाद्य पावनम ॥ ४२ ॥

तदाकर्ण्य वचो दस्रावूचतुस्त नराधिप ।
कथं त्वमपि कल्याणि, पित्रा दत्ता तपस्विने ॥ ४३ ॥

भ्राजसेऽस्मिन्वनोद्देशे विद्युत्सौदामिनी यथा ।
न देवेष्वपि तुल्या हि तव दृष्टास्ति भामिनी ॥ ४४ ॥

त्वं दिव्याम्बरयोग्यासि शोभने, नाजिनैर्वृता ।
सर्वाभरणसयुक्ता नीलालकवरूथिनी ॥ ४५ ॥

अहो विधेर्दुष्कलितं विचेष्टित
यदत्र रम्भोरु, वने विषीदसि ।

विशालनेत्रेऽन्धमिमं पतिं प्रिये,
मुनिं समासाद्य जरातुरं भृशम ॥ ४६ ॥

वृथा वृतस्तेन भृशं न शोभसे
नवं वयः प्राप्य सुनृत्यपण्डिते ।
मनोभवेनाशु शराः सुसन्धिताः
पतन्ति कस्मिन्पतिरीदृशस्तव ॥ ४७ ॥

त्वमन्धभार्या नवयौवनान्विता
कृतासि धात्रा ननु मन्दबुद्धिना ।
न चैनमर्हस्यसितायतेक्षणे,
पतिं त्वमन्यं कुरु चारुलोचने ॥ ४८ ॥

वृथैव ते जीवितमम्बुजेक्षणे,
पतिं च संप्राप्य मुनिं गतेक्षणम् ।
वने विवासं च तथाजिनाम्बर-
प्रधारणं योग्यतरं न मन्महे ॥ ४९ ॥

अतोऽनवद्याङ्गि युभयोस्त्वमेककं
वरं कुरुष्वावहिता सुलोचने ।
किं यौवनं मानिनि, संकरोषि
वृथा मुनिं सुन्दरि, सेवमाना ॥ ५० ॥

किं सेवसे भाग्यविवर्जितं तं
समुज्झितं पोषणरक्षणाभ्याम् ।
त्यक्त्वा मुनिं सर्वसुखापवर्जितं
भजानवद्याङ्गि युभयोस्त्वमेकम् ॥ ५१ ॥

त्वं नन्दने चैत्ररथे वने च
कुरुष्व कान्ते, प्रथितं विहारम् ।
अन्धेन वृद्धेन कथं हि कालं
विनेष्यसे मानिनि, मानहीनम् ॥ ५२ ॥

भूपालजा त्वं शुभलक्षणा च
जानासि ममारविहारभावम् ।
भाग्येन हीना विजने वनेऽत्र
कालं कथं वाहयसे वृथा च ॥ ५३ ॥

तस्माद्भजस्व पिकभाषिणि चारुवक्रे,
एकं द्वयोस्तव सुराय विशालनेत्रे ।
देवालयेषु च कृशोदरि, भुङ्क्ष्व भोगां-
स्त्यक्त्वा मुनिं जरठमाशु नृपेन्द्रपुत्रि ॥ ५४ ॥

किं ते सुखं चात्र वने सुकेशि
वृद्धेन सार्धं विजने मृगाक्षि ।
सेवा तथान्धस्य नव वयश्च
किं ते मतं भूपतिपुत्रि, दुर्गमम् ॥ ५५ ॥

शशिमुखि, त्वमतीव सुकोमला ।
फलजलाहरणं तव नोचितम् ॥ ५६ ॥

इति तृतीयोऽध्यायः ॥

च्यवन उवाच ॥

गच्छ कान्तेऽद्य नासत्यौ वचनान्मम सुव्रते ।
आनयस्व समीपं मे शीघ्रं देवभिषग्वरौ ॥ १८ ॥

क्रियतामाशु तद्वाक्यं नात्र कार्या विचारणा ।

व्यास उवाच ॥

एवं सा समनुज्ञाता तत्र गत्वा वचोऽब्रवीत् ॥ १९ ॥

क्रियतामाशु नासत्यौ समयेन सुरोत्तमौ ।
तच्छ्रुत्वा चाश्विनौ वाक्यं तस्यास्तौ तत्र चागतौ ॥ २० ॥

ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ।
रूपार्थं च्यवनस्तूर्णं ततोऽम्भः प्रविवेश ह ॥ २१ ॥

अश्विनावपि पश्चात्तत्प्रविष्टौ सर उत्तमम् ।
ततस्ते निःसृतास्तस्मात्सरसस्तत्क्षणात्त्रयः ॥ २२ ॥

तुल्यरूपा दिव्यदेहा युवानः सदृशाः किल ।
दिव्यकुण्डलभूषाढ्याः समानावयवास्तथा ॥ २३ ॥

तेऽब्रुवन्सहिताः सर्वे वृणीष्व वरवर्णिनि ।
अस्माकमीप्सितं भद्रे, पतिं त्वममलानने ॥ २४ ॥

यस्मिन्वाप्यधिका प्रीतिस्तं वृणुष्व वरानने ।

व्यास उवाच ॥

सा दृष्ट्वा तुल्यरूपांस्तान्समानवयसस्तथा ॥ २५ ॥

एकस्वरांस्तुल्यवेषान्त्रीन्वै देवसुतोपमान् ।
सा तु संशयमापन्ना वीक्ष्य तान्सदृशाकृतीन् ॥ २६ ॥

अजानती पतिं सम्यग्व्याकुला समचिन्तयत् ।
किं करोमि त्रयस्तुल्याः कं वृणोमि न वेद्म्यहम् ॥ २७ ॥

पति देवसुता ह्येते संशये पतितास्म्यहम् ।
इन्द्रजालमिद सम्यग्देवाभ्यामिह कल्पितम ॥ २८ ॥

कर्तव्यं किं मया चात्र मरण समुपागतम् ।
न मया पतिमुत्सृज्य वरणीयः कथञ्चन ॥ २९ ॥

देवस्त्वाधुनिक. कश्चिदित्येषा मम धारणा ।
इति सञ्चिन्त्य मनसा परां विश्वेश्वरीं शिवाम् ॥ ३० ॥
दध्यौ भगवतीं देवीं तुष्टाव च कृशोदरी ।

सुकन्योवाच ॥

शरण त्वां जगन्मात , प्राप्तास्मि भृशदु खिता ॥ ३१ ॥
रक्ष मेऽद्य सतीधर्म नमामि चरणौ तव ।
नम· पद्मोद्भवे देवि, नम· शङ्करवल्लभे ॥ ३२ ॥

विष्णुप्रिये, नमो लक्ष्मि, वेदमात· सरस्वति ।
इद जगत्त्वया सृष्ट सर्व स्थावरजङ्गमम ॥ ३३ ॥
पासि त्वमिदमव्यग्रा तथात्सि लोकशान्तये ।
ब्रह्मविष्णुमहेशानां जननी त्व सुसंमता ॥ ३४ ॥
बुद्धिदासि त्वमज्ञानां ज्ञानिनां मोक्षदा सदा ।
आद्या त्व प्रकृति. पूर्णा पुरुषप्रियदर्शना ॥ ३५ ॥
भुक्तिमुक्तिप्रदासि त्वं प्राणिनां विशदात्मनाम ।
अज्ञानां दु खदा काम सत्वाना सुखसाधना ॥ ३६ ॥

## चतुर्थोऽध्यायः ॥

व्यास उवाच ॥

तयोस्तद्भाषितं श्रुत्वा त्रेपमाना नृपात्मजा ।
धैर्यमालम्ब्य तौ तत्र बभाषे मितभाषिणी ॥ १ ॥

देवौ वां रविपुत्रौ च सर्वज्ञौ सुरसंमतौ ।
सतीं मां धर्मशीलां च नैवं वादितुमर्हथ ॥ २ ॥

पित्रा दत्ता सुरश्रेष्ठौ मुनये योगधर्मिणे ।
कथं गच्छामि तं मार्गं पुंश्चलीगणसेवितम् ॥ ३ ॥

द्रष्टायं सर्वलोकस्य कर्मसाक्षी दिवाकरः ।
कश्यपाच्चैव संभूतो नैवं भाषितुमर्हथ ॥ ४ ॥

कुलकन्या पतिं त्यक्त्वा कथमन्यं भजेन्नरम् ।
असारेऽस्मिन् हि संसारे जानन्तौ धर्मनिर्णयम् ॥ ५ ॥

यथेच्छं गच्छतं देवौ शापं दास्यामि वानघौ ।
सुकन्याहं च शर्यातेः पतिभक्तिपरायणा ॥ ६ ॥

व्यास उवाच ॥

इत्याकर्ण्य वचस्तस्या नासत्यौ विस्मितौ भृशम् ।
तावब्रूतां पुनस्त्वेनां शङ्कमानौ भयं मुनेः ॥ ७ ॥

राजपुत्रि, प्रसन्नौ ते धर्मेण वरवर्णिनि ।
वरं वरय सुश्रोणि, दास्याव. श्रेयसे तव ॥ ८ ॥

जानीहि प्रमदे नूनमावा देवभिषग्वरौ ।
युवानं रूपसंपन्नं प्रकुर्यावः पतिं तव ॥ ९ ॥

ततस्त्रयाणामस्माकं पतिमेकतमं वृणु ।
समानरूपदेहानां मध्ये चातुर्यपण्डिते ॥ १० ॥

सा तयोर्वचनं श्रुत्वा विस्मिता स्वपतिं तदा ।
गत्वोवाच तयोर्वाक्यं ताभ्यामुक्तं यदद्भुतम् ॥ ११ ॥

सुकन्योवाच ॥

स्वामिन् , सूर्यसुतौ देवौ संप्राप्तौ च वनाश्रमे ।
दृष्टौ मया दिव्यदेहौ नासत्यौ भृगुनन्दन ॥ १२ ॥

वीक्ष्य मां चारुसर्वाङ्गीं जातौ कामातुरावुभौ ।
कथितं वचनं स्वामिन् , पतिं ते नवयौवनम् ॥ १३ ॥

दिव्यदेहं करिष्यावश्चक्षुष्मन्तं मुनिं किल ।
एतेन समयेनाद्य तं शृणु त्वं मयोदितम् ॥ १४ ॥

समावयवरूपं च करिष्यावः पतिं तव ।
तत्र त्रयाणामस्माकं पतिमेकतमं वृणु ॥ १५ ॥

तच्छ्रुत्वाहमिहायाता प्रष्टुं त्वां कार्यमद्भुतम् ।
किं कर्तव्यमतः साधो, ब्रूह्यस्मिन्कार्यसङ्कटे ॥ १६ ॥

देवमायापि दुर्ज्ञेया न जाने कपटं तयोः ।
यदाज्ञापय सर्वज्ञ, तत्करोमि तवेप्सितम् ॥ १७ ॥

सिद्धिदा योगिनामम्ब, जयदा कीर्तिदा पुनः ।
शरणं त्वां प्रपन्नास्मि विस्मयं परमं गता ॥ ३७ ॥

पति दर्शय मे मातः, मग्नास्मिञ्शोकसागरे ।
देवाभ्यां चरित कूट क वृणोमि विमोहिता ॥ ३८ ॥

पति दर्शय सर्वज्ञे, विदित्वा मे सतीव्रतम ।
व्यास उवाच ॥
एवं स्तुता तदा देवी तया त्रिपुरसुन्दरी ॥ ३९ ॥

हृदयेऽस्यास्तदा ज्ञान ददावाशु सुखोदयम् ।
निश्चित्य मनसा तुल्यवयोरूपधरान्सती ॥ ४० ॥

प्रसमीक्ष्य तु तान्सर्वान्विव्रे बाला स्वक पतिम् ।
वृतेऽथ च्यवने देवौ सन्तुष्टौ तौ बभूवतु' ॥ ४१ ॥

सतीधर्म समालोक्य सप्रीतौ ददतुर्वरम् ।
भगवत्या प्रसादेन प्रपन्नौ तौ सुरोत्तमौ ॥ ४२ ॥

मुनिमामन्त्र्य तरसा गमनायोद्यतावुभौ ।
लब्ध्वा तु च्यवनो रूप नेत्रे भार्यां च यौवनम ॥ ४३ ॥

हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविद वच ।
उपकार कृतोऽय मे युवाभ्या सुरसत्तमौ ॥ ४४ ॥

किं ब्रवीमि सुरव प्राप्य ससारेऽस्मिन्ननुत्तमे ।
प्राप्य भार्यां सुकेशीं तां दुःख गेऽभवदन्यहम ॥ ४५ ॥

अन्धस्य चातिवृद्धस्य भोगहीनस्य कानने।
युवाभ्यां नयने दत्ते यौवनं रूपमद्भुतम् ॥ ४६ ॥

सम्पादितं ततः किञ्चिदुपकर्तुमहं ब्रुवे।
उपकारिणि मित्रे यो नोपकुर्यात्कथञ्चन ॥ ४७ ॥

तं धिगस्तु नरं दस्रौ, भवेच्च ऋणवान्भुवि।
तस्माद्वां वाञ्छितं किञ्चिद्दातुमिच्छामि साम्प्रतम् ॥ ४८ ॥

आत्मनो ऋणमोक्षाय देवेशौ, नूतनस्य च।
प्रार्थितं वां प्रदास्यामि यद्दलभ्यं सुरासुरैः ॥ ४९ ॥

श्रुत्वाथ वां मनोदिष्टं प्रीतोऽस्मि सुकृतेन वाम्।
श्रुत्वा तौ तु मुनेर्वाक्यमभिमन्त्र्य परस्परम् ॥ ५० ॥

तमूचतुर्मुनिश्रेष्ठं सुकन्यासहितं स्थितम्।
मुने, पितुः प्रसादेन सर्वं नौ मनमेप्सितम् ॥ ५१ ॥

उत्कण्ठा सोमपानस्य वर्तते नौ सुरैः सह।
भिषजाविति देवेन निषिद्धौ चमसग्रहे ॥ ५२ ॥

शक्रेण वितते यज्ञे ब्रह्मणः कनकाचले।
तस्मात्त्वमपि सर्वज्ञ, यदि शक्तोऽसि तापस ॥ ५३ ॥

कार्यमेतद्धि कर्तव्यं वाञ्छितं नौ सुसम्मतम्।
एतद्विज्ञाय वां ब्रह्मन्, कुरु वां सोमपायिनौ ॥ ५४ ॥

पिपासाग्निं सुदुष्प्रापां त्वत्तः सम्पयास्यति।
च्यवनस्तु तयोः प्राह तच्छ्रुत्वा वचनं मृदु ॥ ५५ ॥

सिद्धिदा योगिनामम्ब, जयदा कीर्तिदा पुन. ।
शरण त्वा प्रपन्नास्मि विस्मयं परम गता ॥ ३७ ॥

पति दर्शय मे मात , मग्नास्मिञ्शोकसागरे ।
देवाभ्या चरित कूट क वृणोमि विमोहिता ॥ ३८ ॥

पति दर्शय सर्वज्ञे, विदित्वा मे सतीव्रतम् ।

व्यास उवाच ॥

एव स्तुता तदा देवी तया त्रिपुरसुन्दरी ॥ ३९ ॥

हृदयेऽस्यास्तदा ज्ञान ददावाशु सुखोदयम् ।
निश्चित्य मनसा तुल्यवयोरूपधरान्सती ॥ ४० ॥

प्रसमीक्ष्य तु तान्सर्वान्वव्रे बाला स्वक पतिम् ।
वृतेऽथ च्यवने देवौ सन्तुष्टौ तौ बभूवतु ॥ ४१ ॥

सतीधर्म समालोक्य सप्रीतौ ददतुर्वरम् ।
भगवत्या प्रसादेन प्रपन्नौ तौ सुरोत्तमौ ॥ ४२ ॥

मुनिमामन्त्र्य तरसा गमनायोद्यतावुभौ ।
लब्ध्वा तु च्यवनो रूप नेत्रे भार्या च यौवनम् ॥ ४३ ॥

हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविद वच ।
उपकार कृतोऽय मे युवाभ्या सुरसत्तमौ ॥ ४४ ॥

किं ब्रवीमि सुख प्राप्त ससारेऽस्मिन्ननुत्तमे ।
प्राप्य भार्या सुकेशा ता दु ख गेऽभवदन्वहम् ॥ ४५ ॥

अन्धस्य चातिवृद्धस्य भोगहीनस्य कानने ।
युवाभ्या नयने दत्ते यौवन रूपमद्भुतम् ॥ ४६ ॥

सपादित तत किञ्चिदुपकर्तुमह नुवे ।
उपकारिणि मित्रे यो नोपकुर्यात्कथञ्चन ॥ ४७ ॥

त धिगस्तु नर देवौ, भवेच्च ऋणवान्भुवि ।
तस्माद्वो वाञ्छित किञ्चिद्दातुमिच्छामि साम्प्रतम् ॥ ४८ ॥

आत्मनो ऋणमोक्षाय देवेशौ, नूतनस्य च ।
प्रार्थित वा प्रदास्यामि यदलभ्य सुरासुरै ॥ ४९ ॥

श्रुत्वाथा वा मनोदिष्ट प्रीतोऽस्मि सुकृतेन वाम् ।
गत्वा तौ तु मुनेर्वाक्यमभिमन्त्र्य परस्परम् ॥ ५० ॥

तमूचतुर्मुनिश्रेष्ठ सुकन्यासहित स्थितम् ।
मुने, पितु प्रसादेन सर्व नौ मनसेप्सितम् ॥ ५१ ॥

उत्कण्ठा सोमपानस्य वर्तते नौ सुरै सह ।
भिषजाविति देवेन निषिद्धौ चमसग्रहे ॥ ५२ ॥

शक्रेण वितते यज्ञे ब्रह्मण कनकाचले ।
तस्मात्त्वमपि सर्वज्ञ, यदि शक्तोऽसि तापस ॥ ५३ ॥

कार्यमेतद्धि कर्तव्य वाञ्छित नौ सुसमतम् ।
एतद्विज्ञाय वा ब्रह्मन्, कुरु वा सोमपायिनौ ॥ ५४ ॥

पिपासास्ति सुदुष्प्रापा त्वत्त समपयास्यति ।
च्यवनस्तु तयो प्राह तच्छ्रुत्वा वचन मृदु ॥ ५५ ॥

यदह रूपसंपन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिति ॥ ५६ ॥

तस्माद्युवां करिष्यामि प्रीत्याहं सोमपायिनौ ।
मिषतो देवराजस्य सत्यमेतद्ब्रवीम्यहम् ॥ ५७ ॥

राज्ञस्तु वितते यज्ञे शर्यातेरमितद्युतेः ।
इत्याकर्ण्य वचो हृष्टौ तौ दिवं प्रतिजग्मतुः ।
च्यवनस्तां गृहीत्वा तु जगामाश्रममण्डलम् ॥ ५८ ॥

इति चतुर्थोऽध्यायः ॥

इति श्रीदेवीभागवते महापुराणे सप्तमस्कन्धे
२—४ अध्यायाः ॥

# ॥ नलोपाख्यानम् ॥

बृहदश्व उवाच ॥

आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविद ॥ १ ॥

ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रिय. सत्यवादी महानक्षौहिणीपतिः ॥ २ ॥

तथैवासीद्विदर्भेषु भीमो भीमपराक्रम· ।
तस्मै प्रसन्नो दमन· सभार्याय वरं ददौ ॥ ३ ॥

कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ।
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ॥ ४ ॥

दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येन च लोकेषु यश प्राप सुमध्यमा ॥ ५ ॥

न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ।
मानुषेष्वपि चान्येषु दृष्टपूर्वाथवा श्रुता ॥ ६ ॥

नलोऽपि नरशार्दूलो लोकेष्वप्रतिमो भुवि ।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ ७ ॥

तयोरदृष्ट कामोऽभूच्छृण्वतो सततं गुणान् ।
अन्योन्यं प्रति कौन्तेय, स व्यवर्धत हृच्छय. ॥ ८ ॥

स ददर्श ततो हंसाञ्जातरूपपरिष्कृतान् ।
वने विचरता तेषामेकं जग्राह पक्षिणम् ॥ ९ ॥

ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा ।
हन्तव्योऽस्मि न ते राजन्, करिष्यामि तव प्रियम् ॥ १० ॥

दमयन्ती सकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ ११ ॥

एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमस्ततः ॥ १२ ॥

विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्श च तान्खगान् ॥ १३ ॥

सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमास्त्वरमाणोपचक्रमे ॥ १४ ॥

दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ १५ ॥

दमयन्ति, नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ १६ ॥

तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ १७ ॥

त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ॥ १८ ॥

एवमुक्ता तु हंसेन दमयन्ती विशां पते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नले वद ॥ १९ ॥

तथेत्युक्त्वाण्डजः कन्यां विदर्भस्य विशां पते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ २० ॥

ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निश्वासपरमा तदा ॥ २१ ॥

ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
न नक्तं न दिवा शेते हाहेति रुदती पुनः ॥ २२ ॥

स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मना कार्यं दमयन्त्याः स्वयंवरम् ॥ २३ ॥

तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २४ ॥

कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ २५ ॥

एतस्मिन्नेव काले तु देवर्षिर्नारदः स्वयम् ।
न्यवेदयदिमं वृत्तं प्रसङ्गात्तु शचीपतिम् ॥ २६ ॥

इयेष गन्तुमिन्द्रश्च दमयन्त्याः स्वयंवरम् ।
अग्निर्यमस्तथा पाशी यान्तमिन्द्रमथान्वगुः ॥ २७ ॥

दृष्ट्वा पथि नलं यान्तं साक्षादिव मनोभवम् ।
दमयन्त्यां निराशास्ते तद्द्वारा तामभीप्सवः ॥ २८ ॥

अब्रुवन्नैषधं राजन्, नल, सत्यव्रतो भवान्।
अस्माकं कुरु साहाय्य दूतो भव नरोत्तम ॥ २९ ॥

तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत।
कृताञ्जलिस्तु पप्रच्छ के यूयं किं च कर्म तत् ॥ ३० ॥

एवमुक्तो नैषधेन मघवानभ्यभाषत।
इन्द्राग्नियमवारीशानस्माञ्जानीहि नैषध ॥ ३१ ॥

दमयन्त्याः सकाशे त्वं गत्वा ब्रूहि सुरा इमे।
प्राप्तुं त्वामभिलष्यन्ति ह्येतदन्यतम वृणु ॥ ३२ ॥

एवमुक्तः स शक्रेण नल प्राञ्जलिरब्रवीत्।
एकार्थं समुपेतं मां न प्रेपयितुमर्हथ ॥ ३३ ॥

इन्द्र उवाच ॥

करिष्य इति संश्रुत्य पूर्वमस्मासु नैपध।
न करिष्यसि कस्मात्त्वं व्रज नैपध, मा चिरम् ॥ ३४ ॥

बृहदश्व उवाच ॥

एवमुक्त' स देवैस्तैर्दमयन्त्या निवेशनम्।
गत्वा पृष्टस्तया कस्त्वं हेतुश्चागमनेऽत्र कः ॥ ३५ ॥

नलं मां विद्धि कल्याणि, देवदूतमिहागतम।
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यम. ॥ ३६ ॥

तेषामन्यतमं देवं पतिं वरय शोभने।
इत्युक्तवान्नलः सापि प्रत्युवाच विचार्य नु ॥ ३७ ॥

आयान्तु सहिता देवा मम यत्र स्वयंवरः ।
ततोऽहं लोकपालानां संनिधौ त्वां वृणे ततः ॥ ३८ ॥

न दोषो भविता तेऽद्य न कुप्यन्ति च देवताः ।
एवमुक्तस्तु वैदर्भ्या नलो देवानुपागमत् ॥ ३९ ॥

आदितः सर्वमाचख्यौ दमयन्त्या यथोदितम् ।
तैरादिष्टो ययौ राजा दमयन्त्याः स्वयंवरम् ॥ ४० ॥

दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ४१ ॥

तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम् ॥ ४२ ॥

ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिह ॥ ४३ ॥

संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ॥ ४४ ॥

कथं हि देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
इति संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥ ४५ ॥

वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ॥ ४६ ॥

हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ ४७ ॥

मनसा वचसा चैव यथा नाभिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ ४८ ॥

यथा देवैः स मे भर्ता विहितो निषधाधिपः ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ ४९ ॥

स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः ।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ ५० ॥

निशम्य दमयन्त्यास्तु करुणं परिदेवितम ।
निश्चयं परमं तथ्यमनुराग च नैषधे ॥ ५१ ॥

यथोक्तं चक्रिरे देवाः समर्था लिङ्गधारणे ।
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ॥ ५२ ॥

हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ।
सा समीक्ष्य तदा देवान्वरयामास नैषधम् ॥ ५३ ॥

विलज्जमाना वस्त्रान्त जग्राहायतलोचना ।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम ॥ ५४ ॥

ततो हा हेति सहसा मुक्त शब्दो नराधिपैः ।
देवैर्महर्षिभिस्तत्र साधु साध्विति भारत ॥ ५५ ॥

तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥ ५६ ॥

प्रहृष्टमनसस्तेऽपि नलायाष्टौ वरान्ददुः ।
प्रत्यक्षदर्शनं यज्ञे शक्रो गतिमनुत्तमाम ॥ ५७ ॥

अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ५८ ॥

यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्र वाञ्छति नैषधः ॥ ५९ ॥

स्रजश्चोत्तमगन्धाढ्याः सर्वे ते मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ६० ॥

गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ६१ ॥

भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।
अवाप्य नारीरत्नं तद्रेमे शच्येव वृत्रहा ॥ ६२ ॥

बृहदश्व उवाच ॥

वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ ६३ ॥

अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले, ब्रूहि क यास्यसि ॥ ६४ ॥

कलिरुवाच ॥

देवराज, गमिष्यामि दमयन्त्याः स्वयंवरम् ।

तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ६५ ॥

कलिरुवाच ॥

देवाना मानुष मध्ये यत्सा पतिमविन्दत ।
तत्र तस्या भवेन्न्याय्य विपुल दण्डधारणम् ॥ ६६ ॥

इन्द्र उवाच ॥

अस्माभि समनुज्ञातो दमयन्त्या नलो वृत ।
का च सर्वगुणोपेत नाश्रयेत नल नृपम् ॥ ६७ ॥

योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
नित्य तृप्ता गृहे यस्य देवा यज्ञेषु धर्मत ॥ ६८ ॥

यस्मिन्सत्य धृतिर्ज्ञान तप शौच दम शम ।
अहिसानिरतो यश्च सत्यवादी दृढव्रत ॥ ६९ ॥

एवरूप नल यो वै कामयेच्छपितु कले ।
आत्मान स शपेन्मूढो हन्यादात्मानमात्मना ॥ ७० ॥

ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ।
सहर्तु नोत्सहे कोप नले वत्स्यामि द्वापर ॥ ७१ ॥

भ्रशयिष्यामि त राज्यान्न भैम्या सह रस्यते ।
त्वमप्यक्षान्समाविश्य साहाय्य कर्तुमर्हसि ॥ ७२ ॥

एव स समय कृत्वा द्वापरेण कलि मह ।
आजगाम ततस्तत्र यत्र राजा स नैषध ॥ ७३ ॥

स नित्यमन्तरप्रेप्सुर्निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ ७४ ॥

कृत्वा मूत्रमुपस्पृश्य सन्ध्यामन्वास्त नैषध ।
अकृत्वा पादयो शौच तत्रैन कलिराविशत् ॥ ७५ ॥

स समाविश्य च नल समीप पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ७६ ॥

अक्षद्यूते नल जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्य नल नृपम ॥ ७७ ॥

एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्च वृषभो भूत्वा गवा पुष्करमन्वयात् ॥ ७८ ॥

तमासाद्य नल वीर पुष्कर परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहु ॥ ७९ ॥

न चक्षमे ततो राजा समाह्वान महामना ।
वैदर्भ्या प्रेक्षमाणाया पणकालममन्यत ॥ ८० ॥

आविष्ट कलिना द्यूते जीयते स्म नलस्तदा ।
तमक्षमदसमत्त सुहृदा न तु कश्चन ॥ ८१ ॥

निवारणेऽभवच्छक्तो दीव्यमानमरिन्दमम ।
तथा तत्राभवद्द्यूत पुष्करस्य नलस्य च ॥ ८२ ॥

दमयन्ती ततो दृष्ट्वा पुण्यश्लोक तथाविधम ।
बृहत्सेना तदावोचदात्मीया परिचारिकाम ॥ ८३ ॥

सूतमानय कल्याणि, महत्कार्यमुपस्थितम् ।
बृहत्सेना च वार्ष्णेयमानयामास वै क्षणात ॥ ८४ ॥

वार्ष्णेयं तु ततो भैमी प्रावोचद्देशकालवित् ।
नलस्य दयितानश्वान्योजयित्वा रथोत्तमे ॥ ८५ ॥

इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ।
दमयन्त्यास्तु तद्वाक्यं श्रुत्वैव नलसारथिः ॥ ८६ ॥

ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ।
इन्द्रसेनाह्वया कन्यामिन्द्रसेनं च बालकम् ॥ ८७ ॥

विसृज्य तौ विदर्भेषु भीमं चापृच्छ्य भूपतिम् ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ ८८ ॥

पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन ।
हृतराज्यं नलं राजन् , प्रहसन्पुष्करोऽब्रवीत् ॥ ८९ ॥

शिष्टा ते दमयन्त्येका पणस्तस्याः प्रवर्तताम् ।
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ॥ ९० ॥

व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ९१ ॥

एकवासा ह्यसंवीतो निश्चक्राम सुदुःखितः ।
दमयन्त्येकवस्त्रा च गच्छन्तं पृष्ठतोऽन्वयात् ॥ ९२ ॥

क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
ददर्श शकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ ९३ ॥

तलस्तान्परिधानेन वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ ९४ ॥

उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ ५५ ॥

वयमक्षाः सुदुर्बुद्धे, तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ ५६ ॥

पुण्यश्लोकस्तदा राजन् , दमयन्तीमथाब्रवीत् ।
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते ॥ ५७ ॥

इमे ते शकुना भूत्वा वासो भीरु, हरन्ति मे ।
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ॥ ५८ ॥

भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ।
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ॥ ५९ ॥

अवन्तीमृक्षवन्तं च समभिक्रम्य पर्वतम् ।
एष पन्था विदर्भाणामसौ गच्छति कोसलान् ॥ १०० ॥

ततः सबाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ १०१ ॥

उद्विजते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव, सकल्पं चिन्तयन्त्याः पुनः पुनः ॥ १०२ ॥

हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ १०३ ॥

श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज, नाशयिष्याम्यहं क्लमम् ॥ १०४ ॥

न च भार्यासमं किंचिद्विद्यते भिषजां मतम् ।
अभौषं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ १०५ ॥

नल उवाच ॥

एवमेतद्यदात्थ त्वं दमयन्ति, सुमध्यमे ।
न चाहं त्यक्तुकामस्त्वां किमलं भीरु, शङ्कसे ॥ १०६ ॥

इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः ।
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृताम् ॥ १०७ ॥

तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ॥ १०८ ॥

स वै विवस्त्रो विकटो मलिनः पांसुकुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ १०९ ॥

दमयन्त्यपि कल्याणी निद्रयापहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ११० ॥

सुप्तायां दमयन्त्यां तु नलो राजा विशां पते ।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा ॥ १११ ॥

किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ११२ ॥

मामियं ह्यनुरक्तैवं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ११३ ॥

न चैषा तेजसा शक्या कैश्चिद्धर्षयितु पथि ।
यशस्विनी महाभागा भक्ता चेय पतिव्रता ॥ ११४ ॥

एव तस्य तदा बुद्धिर्दमयन्त्या न्यवर्तत ।
कथ वासो विकर्तेय न च बुद्ध्येत मे प्रिया ॥ ११५ ॥

विचिन्त्यैव नलो राजा सभा पर्यचरत्तदा ।
परिधावन्नथ नल इतश्चेतश्च भारत ॥ ११६ ॥

आससाद सभोद्देशे विकोश खड्गमुत्तमम् ।
तेनार्धं वाससश्छित्वा निरस्य च परन्तप ॥ ११७ ॥

सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतन ।
ततो निवृत्तहृदय पुनरागम्य ता सभाम् ॥ ११८ ॥

दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिप ।
या न वायुर्न चादित्य पुरा पश्यति मे प्रियाम् ॥ ११९ ॥

सेयमद्य सभामध्ये शेते भूमावनाथवत् ।
इय वस्त्रावकर्तेन सवीता चारुहासिनी ॥ १२० ॥

उन्मत्तेव वरारोहा कथ बुद्धा भविष्यति ।
कथमेका सती भैमी मया विरहिता शुभा ॥ १२१ ॥

चरिष्यति महाघोरे मृगव्यालनिषेविते ।
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ॥ १२२ ॥

रक्षन्तु त्वा महाभागे, धर्मणासि समावृता ।
एवमुक्त्वा प्रिया भार्यां रूपेणाप्रतिमा भुवि ॥ १२३ ॥

कलिनापहृतज्ञानो नलः प्रातिष्ठदुन्मतः ।
गत्वा गत्वा नलो राजा पुनरेति सभां मुहु. ॥ १२४ ॥

आकृष्यमाणः कलिना सौहृदेनावकृष्यते ।
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः॥ १२५ ॥

जगामैकां वने शून्ये भार्यामुत्सृज्य दुःखितः ।

बृहदश्व उवाच ॥

अपक्रान्ते नले राजन् , दमयन्ती गतक्लमा ॥ १२६ ॥

अबुद्धयत वरारोहा संत्रस्ता विजने वने ।
अपश्यमाना भर्तारं शोकदुःखसमन्विता ॥ १२७ ॥

प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ।
हा नाथ, हा महाराज, हा स्वामिन , किं जहासि माम् ॥

हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ।
ननु नाम महाराज, धर्मज्ञः सत्यवागसि ॥ १२९ ॥

कथमुत्सृज्य गन्तासि दक्षां भार्यामनुव्रताम् ।
शक्यसे ता गिरः सम्यक्कर्तुं मयि नरेश्वर ॥ १३० ॥

यास्त्वेषां लोकपालानां संनिधौ कथिताः पुरा ।
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ॥ १३१ ॥

यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ।
पर्याप्तः परिहासोऽयमेतावत्पुरुषर्षभ ॥ १३२ ॥

भीताहमतिदुर्धर्ष, दर्शयात्मानमीश्वर ।
दृश्यसे दृश्यसे राजन्नेष नष्टोऽसि नैषध ॥ १३३ ॥

आच्छाद्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ।
नृशंस बत राजेन्द्र, यन्मामेवं गतामिह ॥ १३४ ॥

विलपन्तीं समागम्य नाश्वासयसि पार्थिव ।
कथं नु राजस्तृषितः क्षुधितः श्रमकर्शितः ॥ १३५ ॥

सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ।
ततः सा वीतशोकार्ता प्रदीप्तेव च मन्युना ॥ १३६ ॥

इतश्चेतश्च रुदती पर्यधावत दुःखिता ।
मुहुरुत्पतते बाला मुहुः पतति विह्वला ॥ १३७ ॥

मुहुरालीयते भीता मुहुः क्रोशति रोदिति ।
तां क्रन्दमानामत्यर्थमभ्याशापरिवर्तिनीम् ॥ १३८ ॥

जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ।
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ॥ १३९ ॥

नात्मानं शोचति तथा यथा शोचति नैषधम् ।
हा नाथ, मामिह वने ग्रस्यमानामनाथवत् ॥ १४० ॥

ग्राहेणानेन विजने किमर्थं नानुधावसि ।
श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ॥ १४१ ॥

कः श्रमं राजशार्दूल, नाशयिष्यति तेऽनघ ।
ततः कश्चिन्मृगव्याध उरगेणायतेक्षणाम् ॥ १४२ ॥

उत्सृज्य दमयन्तीं तु नलो राजा विशां पते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ १६३ ॥

तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ १६४ ॥

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य च ।
नागं गृहीत्वा स प्रायाद्देशं दावविवर्जितम् ॥ १६५ ॥

उवाच नागो मां विद्धि नागं कार्कोटकं नृप ।
पदानि कानिचिद्गच्छ श्रेयो धास्यामि यत्परम् ॥ १६६ ॥

ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ १६७ ॥

ततः कार्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ १६८ ॥

यत्कृते चासि निकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ १६९ ॥

गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः ॥ १७० ॥

स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
अनेन वाससा छन्नः स्वं रूपं प्रतिपत्स्यसे ॥ १७१ ॥

ततश्चान्तर्हिते नागे अयोध्यां प्रययौ नलः ।
ऋतुपर्णस्य नगरे न्यवसत्तेन पूजितः ॥ १७२ ॥

बृहदश्व उवाच ॥

हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १७३ ॥

ततश्चेदिपुरीं रम्यां सुदेवो नाम ब्राह्मणः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ १७४ ॥

पूर्णचन्द्रनिभां श्यामां चारुवृत्तपयोधराम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ १७५ ॥

मलपङ्कानुलिप्ताङ्गीं मृणालीमिव चोद्धृताम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ १७६ ॥

विध्वस्तपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम् ॥ १७७ ॥

चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंयुताम्
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया ॥ १७८ ॥

भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ १७९ ॥

करोद च भृशं राजन्, वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम ॥ १८० ॥

अथ चेदिपतेर्माता राजभान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ १८१ ॥

ग्रस्तां दृष्ट्वा क्रन्दमानां समभिक्रम्य वेगतः ।
मुखतः पाटयामास शस्त्रेण निशितेन च ॥ १४३ ॥

निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवन. ।
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ॥ १४४ ॥

सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम ।
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान् ॥ १४५ ॥

दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोपसमाविष्टा पतिराज्यविनाकृता ॥ १४६ ॥

अतीतवाक्पथे काले शशापैन रुषान्विता ।
यद्यहं नैपधादन्यं मनसापि न चिन्तये ॥ १४७ ॥

तथाय पततां क्षुद्रो गतासुर्मृगजीवनः ।
उक्तमात्रे तु वचने तथा स मृगजीवनः ॥ १४८ ॥

व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुम· ।
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ॥ १४९ ॥

वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ।
वैदर्भी विचरत्येका नलमन्वेपती सती ॥ १५० ॥

भर्तृशोकपरीताङ्गी विललाप सुदु.खिता ।
हा वीर, नल. नामाहं नष्टा किल तवानघ ॥ १५१ ॥

अस्यामटव्यां घोरायां किं मां न प्रतिभापसे ।
शार्दूलोऽभिमुखोऽभ्येति प्रजाम्येनमशङ्किता ॥ १५२ ॥

भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ १५३ ॥

पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ।
आश्वासय मृगेन्द्रेह यदि दृष्टो नलस्त्वया ॥ १५४ ॥

अथवा त्वं वनपते, नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ, दुःखादस्माद्विमोचय ॥ १५५ ॥

एवमादीनि पृच्छन्ती मृगान्वृक्षान्सपर्वतान् ।
गच्छन्ती साचिराद्बाला पुरमासादयन्महत् ॥ १५६ ॥

अथ वस्त्रार्धसंवीता प्रविवेश पुरोत्तमम् ।
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ॥ १५७ ॥

उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥ १५८ ॥

तां प्रासादगतापश्यद्राजमाता जनैर्वृता ।
धात्रीमुवाच चैवैनामानयेह ममान्तिकम् ॥ १५९ ॥

तामश्रुमपरिपूर्णाक्षी विलपन्तीं पतिं बहु ।
राजमातामवीदार्ता भैमीमार्तस्वरा स्वयम् ॥ १६० ॥

वमस्व मयि कल्याणि, प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे, भर्तारं पुरुषा मम ॥ १६१ ॥

सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत ।
सर्वकामैः सुविहितैर्निरुद्वेगावसत्तदा ॥ १६२ ॥

वायुना धूयमानो हि वनं दहति पावकः ।
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ॥ २०२ ॥

तन्नष्टमभय कस्माद्धर्मज्ञस्य सतस्तव ।
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ॥ २०३ ॥

संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ।
एवमुक्तास्त्वगच्छस्ते ब्राह्मणाः सर्वतो दिशम् ॥ २०४ ॥

नलं मृगयितुं राजन्, तथा व्यसनिनं तदा ।
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः । २०५ ॥

प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ।
नैषधं मृगयाणेन दमयन्ति, मया नलम् ॥ २०६ ॥

अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः ।
श्रावितश्च मया वाक्यं त्वदीय स महाजने ॥ २०७ ॥

तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ॥ २०८ ॥

ऋतुपर्णस्य भूपस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मृष्टकर्ता च भोजने ॥ २०९ ॥

विनिश्वस्य स बहुशो रुदित्वा च पुनः पुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ २१० ॥

वैषम्यमपि सप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ २११ ॥

रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन ।
प्राणाश्चारित्रकवचान्धारयन्ति वरस्त्रिय ॥ २१२ ॥

विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २१३ ॥

प्राणयात्रापरिप्रेप्सो शकुनैर्हृतवासस ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ २१४ ॥

सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ २१५ ॥

तस्य तद्वचन श्रुत्वा त्वरितोऽहमुपागत ।
श्रुत्वा प्रमाण भवती राज्ञश्चैव निवेदय ॥ २१६ ॥

एतच्छ्रुत्वाश्रुपूर्णाक्षी दमयन्ती शुचिस्मिता ।
सुदेव द्विजमाभाष्य अब्रवीन्मातृसंनिधौ ॥ २१७ ॥

गत्वा सुदेव, न चिरादयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि संपतन्निव कामग ॥ २१८ ॥

आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तथा च गणित काल श्वोभूते संभविष्यति ॥ २१९ ॥

एवं तया तथोक्तो वै गत्वा राजानमब्रवीत् ।
स सान्त्वयन्सुवचसा बाहुक प्रत्यभाषत ॥ २२० ॥

विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ, मन्यसे यदि बाहुक ॥ २२१ ॥

उत्सृज्य बाष्प शनकैं राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेऽसि पिशुनानेन सूचिता ॥ १८२ ॥

अह तव च माता च दशार्णाधिपतेः सुते ।
त्व तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १८३ ॥

यथैव ते पितुर्गेह तथैव मम भामिनि ।
इत्युक्त्वा दमयन्ती ता प्रहृष्टेनान्तरात्मना ॥ १८४ ॥

प्रणम्य मातुर्भगिनीमिद वचनमब्रवीत् ।
अज्ञायमानापि सती सुखमस्म्युषिता त्वयि ॥ १८५ ॥

चिरविप्रोषिता मातर्मामनुज्ञातुमर्हसि ।
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ॥ १८६ ॥

विदर्भान्यातुमिच्छामि ततो मे यानमादिश ।
प्रास्थापयत्ततो भैमीं राजमाता तदैव तु ॥ १८७ ॥

तत सा नचिरादेव विदर्भानगमत्पुन ।
अतर्पयत्सुदेव च गोसहस्रेण पार्थिव ॥ १८८ ॥

प्रीतो दृष्ट्वैव तनया ग्रामेण द्रविणेन च ।
तत सा न चिरादेव विदर्भानगमत्पुन ॥ १८९ ॥

ता तु बन्धुजन सर्वं प्रहृष्ट समपूजयत ।
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ॥ १९० ॥

विश्रान्ता मातर राजन्निद वचनमब्रवीत् ।
मा चेदिच्छसि जीवन्ता मात, सत्य ब्रवीमि ते ॥ १९१ ॥

यतस्व नरवीरस्य नलस्यानयने खलु ।
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ॥ १९२ ॥

वाष्पेण पिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ।
तदवस्था च तां दृष्ट्वा सर्वमन्तःपुरं तदा ॥ १९३ ॥

हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ।
ततो भीमं महाराज भार्या वचनमब्रवीत् ॥ १९४ ॥

दमयन्ती तव सुता भर्तारमनुशोचति ।
अपाकृष्य च लज्जां सा स्वयमुक्तवती नृप ॥ १९५ ॥

प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ।
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ॥ १९६ ॥

दमयन्तीमथो दृत्वा प्रस्थितास्ते तथाब्रुवन् ।
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ॥ १९७ ॥

ब्रूत वै जनसंसत्सु तत्र तत्र पुनः पुनः ।
क नु त्वं कितव, छित्त्वा वस्त्रार्धं प्रस्थितो मम ॥ १९८ ॥

उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ।
सा वै यथा त्वया दिष्टा तथा ते त्वत्प्रतीक्षिणी ॥ १९९ ॥

दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ।
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ॥ २०० ॥

प्रसादं कुरु वै वीर, प्रतिवाक्यं वदस्व च ।
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ॥ २०१ ॥

एवमुक्तस्य कौन्तेय, तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ २२२ ॥

दमयन्ती वदेदेतत्कुर्याद्दुःखेन मोहिता ।
अस्मदर्थं भवेद्वायमुपायश्चिन्तितो महान् ॥ २२३ ॥

नृशंसं बत वैदर्भी भर्तृकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ २२४ ॥

स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ॥ २२५ ॥

मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥ २२६ ॥

यदत्र सत्यं वासत्यं गत्वा वेत्स्यामि निश्चितम् ।
इति संचिन्त्य मनसा प्रत्यजानान्नराधिपम् ॥ २२७ ॥

ततः परीक्षामश्वानां चक्रे राजन्, स बाहुकः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ २२८ ॥

तेजोबलसमायुक्तान्पृथुप्रोथान्महाहनून् ।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ २२९ ॥

ततो युक्तं रथं राजा समारोहत्त्वरान्वित. ।
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ॥ २३० ॥

समुत्पेतुरथाकाशं रथिनं मोहयन्निव ।
तथा प्रयाते तु रथे पटो निपतितो नृप ॥ २३१ ॥

ृपर्ण उवाच ॥

निगृह्णीष्व महाबाहो, पटमानय त मम ॥ २३२ ॥

ः उवाच ॥

योजन समतिक्रान्तो नाहर्तुं शक्यते रथ ॥ २३३ ॥

एवमुक्तो नलेनाथ आससाद विभीतकम् ।

त दृष्ट्वा बाहुक राजा त्वरमाणोऽभ्यभाषत ॥ २३४ ॥

सर्व सर्व न जानाति सर्वज्ञो नास्ति कश्चन ।

ममापि सूत, पश्य त्व सख्याने परम बलम् ॥ २३५ ॥

प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्या प्रशाखिका ।

आभ्या फलसहस्रे द्वे पञ्चोन शतमेव च ॥ २३६ ॥

ततो रथमवस्थाप्य राजान बाहुकोऽब्रवीत् ।

अथात्र गण्यते राजन्, विद्यते न परोक्षता ॥ २३७ ॥

सोऽवतीर्य रथात्तूर्णं शातयामास त द्रुमम् ।

गणयित्वा च त प्राह तावन्त्येव फलानि तु ॥ २३८ ॥

नल उवाच ॥

अत्यद्भुतमिद राजन्, दृष्टवानस्मि ते बलम् ॥ २३९ ॥

ऋतुपर्ण उवाच ॥

विद्ध्यक्षहृदयज्ञ मा सख्याने च विशारदम् ॥ २४० ॥

बाहुकस्तमुवाचाथ देहि विद्यामिमा मम ।

मत्तोऽपि चाश्वहृदय गृहाण पुरुषर्षभ ॥ २४१ ॥

ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तां विद्यां प्रददौ नले ॥ २४२ ।

तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ २४३ ॥

तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते, कीर्तिं दास्यामि ते पराम् ॥ २४४ ॥

ये हि त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ २४५ ॥

एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मन. ।
ततो भीतः कलि क्षिप्रं प्रविवेश विभीतकम ॥ २४६ ॥

विभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ।
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ॥ २४७ ॥

नलोऽपि नोदयामास प्रहृष्टेनान्तरात्मना ।
विदर्भाभिमुखो राजा प्रययौ स महायशा. ॥ २४८ ॥

ततो विदर्भान्स प्राप्तः सायाह्ने प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वा. स विदिशो दिशः ॥ २४९ ॥

दमयन्त्यपि शुश्राव रथघोषं नलस्य तम् ।
यथासौ रथनिर्घोष. पूरयन्निव मेदिनीम् ॥ २५० ॥

दमयन्त्युवाच ॥

ममाह्लादयते चेतो नल एष महीपतिः ।
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ॥ २५१ ॥

प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ।
यदि मां मेघनिर्घोषो नोपागच्छति नैषध ॥ २५२ ॥

अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ।
गुणास्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ॥ २५३ ॥

हृदयं दीर्यत इदं शोकात्प्रियनिराकृतम् ।
एवं विलपमाना सा नष्टसंज्ञेव भारत ॥ २५४ ॥

बृहदश्व उवाच ॥

आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ।
सा ददर्शाथ शोकार्ता वाहुकं न च नैषधम् ॥ २५५ ॥

शङ्कमाना च भर्तारं वाहुकं पुनरिङ्गितैः ।
केशिनीं प्रेषयामास वाहुकस्य परीक्षणे ॥ २५६ ॥

ज्ञात्वा च वहुभिश्चिह्नैर्नलं पित्रे न्यवेदयत् ।
सा च पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ ॥ २५७ ॥

नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ।
तां स दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ॥ २५८ ॥
आविष्टः शोकदुःखाभ्यां वभूवाश्रुपरिप्लुतः ॥ २५९ ॥

ततः काषायवसना जटिला मलपङ्किनी ।
वाष्पगद्गदया वाचा वाहुकं वाक्यमव्रवीत् ॥ २६० ॥

दमयन्त्युवाच ॥

पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम वाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ २६१ ॥

अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ २६२ ॥

साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ॥ २६३ ॥

दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिन्दम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ २६४ ॥

अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो दृष्ट्वा शोकार्तामिदमब्रवीत् ॥ २६५ ॥

नल उवाच ॥

मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु, यच्च त्वामहमत्यजम् ॥ २६६ ॥

मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ २६७ ॥

विमुच्य मां गतः पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि, मम नान्यत्प्रयोजनम् ॥ २६८ ॥

कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु, कर्हिचित् ॥ २६९ ॥

दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ २७० ॥

स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भांगासुरिरुपस्थित· ॥ २७१ ॥

बृहदश्व उवाच ॥

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ २७२ ॥

दमयन्त्युवाच ॥

उपायोऽय मया दृष्टो नैषधानयने तव ।
त्वामृते न हि लोकोऽन्य एकाह्ना पृथिवीपते ॥ २७३ ॥

समर्थो योजनशत गन्तुमश्वैर्नराधिप ।
स्पृशेय तेन सत्येन पादावेतौ महीपते ॥ २७४ ॥

यथा नासत्कृत किंचिन्मनसापि चराम्यहम् ।
अय चरति लोकेऽस्मिन्भूतसाक्षी सदागति. ॥ २७५ ॥

एष मे मुञ्चतु प्राणान्यदि पाप चराम्यहम् ।
यथा चरति तिग्माशु परेण भुवन सदा ॥ २७६ ॥

स मुञ्चतु मम प्राणान्यदि पाप चराम्यहम् ।
चन्द्रमा सर्वभूतानामन्तश्चरति साक्षिवत् ॥ २७७ ॥

स मुञ्चतु मम प्राणान्यदि पाप चराम्यहम् ।
एते देवास्त्रय कृत्स्न त्रैलोक्य धारयन्ति वै ॥ २७८ ॥

विब्रुवन्तु यथासत्यमेतद्देवास्त्यजन्तु माम् ।
एवमुक्तस्तथा वायुरन्तरिक्षादभाषत ॥ २७९ ॥

नैषा कृतवती पाप नल, सत्य ब्रवीमि ते ।
तथा ब्रुवति वायौ च पुष्पवृष्टि पपात ह ॥ २८० ॥

## ॥ आशावर्णनम् ॥

युधिष्ठिर उवाच ॥

शील प्रधानं पुरुषे कथितं ते पितामह ।
कथं त्वाशा समुत्पन्ना या चाशा तद्वदस्व मे ॥ १ ॥

संशयो मे महानेष समुत्पन्न पितामह ।
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरंजय ॥ २ ॥

पितामहाशा महती ममासीद्धि सुयोधने ।
प्राप्ते युद्धे तु यद्युक्तं तत्कर्तायमिति प्रभो ॥ ३ ॥

सर्वस्याशा सुमहती पुरुषस्योपजायते ।
तस्यां विहन्यमानायां दुःखो मृत्युर्न संशयः ॥ ४ ॥

सोऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना ।
धार्तराष्ट्रेण राजेन्द्र, पश्य मन्दात्मतां मम ॥ ५ ॥

आशां महत्तरां मन्ये पर्वतादपि सद्रुमान् ।
आकाशादपि वा राजन्, अप्रमेयैव वा पुनः ॥ ६ ॥

एषा चैव कुरुश्रेष्ठ, दुर्विचिन्त्या सुदुर्लभा ।
दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ॥ ७ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि युधिष्ठिर, निबोध तत् ।
इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ॥ ८ ॥

देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ।
तदद्भुतमयं दृष्ट्वा नलो राजाथ भारत ॥ २८१ ॥

दमयन्त्यां विशङ्कां तामुपाकर्षदरिन्दमः ।
ततस्तद्वस्त्रमजरं प्रावृणोद्वसुधाधिपः ॥ २८२ ॥

संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ।
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ॥ २८३ ॥

प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ।
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ॥ २८४ ॥

सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ।
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ॥ २८५ ॥

वने विचरितं सर्वमूचतुर्मुदितौ नृप ।
स चतुर्थे ततो वर्षे सगम्य सह भार्यया ॥ २८६ ॥

सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ।
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ॥ २८७ ॥

अर्द्धसंजातसस्येव तोयं प्राप्य वसुन्धरा ।
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृत. ॥ २८८ ॥

वैदर्भ्या सहितः काले ददर्श वसुधाधिपम् ।
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ॥ २८९ ॥

ततोऽनु दमयन्ती च ववन्दे पितरं शुभा ।
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ॥ २९० ॥

तमानाय्य नलं राजा क्षमयामास पार्थिवम् ।
स च तां प्रददौ विद्यां पूर्वमेव प्रतिश्रुताम् ॥ २९१ ॥

सोऽपि लब्ध्वा हयज्ञानं ययौ स्वपुरमेव च ।
नलोऽथ निषधान्गत्वा पूर्ववृत्तमनुस्मरन् ॥ २९२ ॥

ततः पुष्करमासाद्य वीरसेनसुतो बली ।
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम् ॥ २९३ ॥

दमयन्ती च यच्चान्यन्मम किंचन विद्यते ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ २९४ ॥

पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ २९५ ॥

जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः परमो धर्म उच्यते ॥ २९६ ॥

न त्वं वाञ्छसि चेद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ॥ २९७ ॥

ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ।
दिष्ट्या च प्रियसे राजन्, मदारोऽरा महाभुज ॥ २९८ ॥

धनेनानेन वै भैमी जितेन समलंकृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ २९९ ॥

श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ ३०० ॥

सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः ।
ससार स मृगं विद्ध्वा बाणेनानतपर्वणा ॥ ९ ॥

स मृगो बाणमादाय ययावमितविक्रमः ।
स च राजा बलात्तूर्णं ससार मृगयूथपम् ॥ १० ॥

ततो निम्नस्थलं चैव स मृगोऽद्रवदाशुगः ।
मुहूर्तमिव राजेन्द्र, समेन स पथागमत् ॥ ११ ॥

ततः स राजा तारुण्यादौरसेन बलेन च ।
ससार बाणासनभृत्सखड्गोऽसौ तनुत्रवान् ॥ १२ ॥

ततो नदान्नदीश्चैव पल्वलानि वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैको वनेचरः ॥ १३ ॥

स तु कामान्मृगो राजन्नासाद्यासाद्य तं नृपम् ।
पुनरभ्येति जवनो जवेन महता ततः ॥ १४ ॥

स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः ।
प्रक्रीडन्निव राजेन्द्र, पुनरभ्येति चान्तिकम ॥ १५ ॥

पुनश्च जवमास्थाय जवनो मृगयूथपः ।
अतीत्यातीत्य राजेन्द्र, पुनरभ्येति चान्तिकम ॥ १६ ॥

तस्य मर्मच्छिदं घोरं तीक्ष्णं चामित्रकर्शनः ।
समादाय शरं श्रेष्ठं कार्मुके तु तथासृजत ॥ १७ ॥

ततो गव्यूतिमात्रेण मृगयूथपयूथपः ।
तस्य बाणपथं मुक्त्वा तस्थिवान्प्रहसन्निव ॥ १८ ॥

तस्मिन्निपतिते बाणे भूमोज्ज्वलिततेजसि ।
प्रविवेश महारण्य मृगो राजाप्यथाद्रवत् ॥ १९ ॥

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥

भीष्म उवाच ॥

प्रविश्य स महारण्य तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत्तदा ॥ १ ॥

त कार्मुकधर दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मिन्पूजां चक्रुर्यथाविधि ॥ २ ॥

स पूजामृपिभिर्दत्ता सप्रगृह्य नराधिपः ।
अपृच्छत्तापसान्सर्वांस्तपसो वृद्धिमुत्तमाम् ॥ ३ ॥

ते तस्य राज्ञो वचन सप्रगृह्य तपोधना ।
ऋषयो राजशार्दूलं तमपृच्छत्प्रयोजनम् ॥ ४ ॥

केन भद्र, सुखार्थेन संप्राप्तोऽसि तपोवनम् ।
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर ॥ ५ ॥

एतदिच्छामहे श्रोतु कुतः प्राप्तोऽसि मानद ।
कस्मिन्कुले तु जातस्त्व किंनामा चासि ब्रूहि नः ॥ ६ ॥

ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ ।
आचचक्षे यथान्यायं परिचर्यां च भारत ॥ ७ ॥

हैहयानां कुले जातः सुमित्रो मित्रनन्दनः ।
चरामि मृगयूथानि निघ्नन्वाणैः सहस्रशः ॥ ८ ॥

वलेन महता गुप्तः सामात्यः सावरोधनः ।
मृगस्तु विद्धो वाणेन मया सरति शल्यवान् ॥ ९ ॥

तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया ।
भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः ॥ १० ॥

किं नु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः ।
भवतामाश्रमं प्राप्तो हताशो भ्रष्टलक्षणः ॥ ११ ॥

न राजलक्षणत्यागो न पुरस्य तपोधनाः ।
दु.ख करोति तत्तीव्र यथाशा विहता मम ॥ १२ ॥

हिमवान्वा महाशैलः समुद्रो वा महोदधिः ।
महत्त्वान्नान्वपद्येतां नभसो वान्तरं तथा ॥ १३ ॥

आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः ।
भवतां विदितं सर्व सर्वज्ञा हि तपोधनाः ॥ १४ ॥

भवन्तः सुमहाभागास्तस्मात्पृच्छामि संशयम् ।
आशावान्पुरुषो यः स्यादन्तरिक्षमथापि वा ॥ १५ ॥

किं नु ज्यायस्तरं लोके महत्त्वात्प्रतिभाति वः ।
एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ॥ १६ ॥

यदि गुह्यं न वो नित्यं तदा प्रब्रूत मा चिरम् ।
न गुह्यं श्रोतुमिच्छामि युष्मत्तो द्विजसत्तमाः ॥ १७ ॥

भवत्तपोविघातो वा यदि स्याद्विरमे ततः ।
यदि वास्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ १८ ॥

एतत्कारणसामर्थ्यं श्रोतुमिच्छामि तत्त्वतः ।
भवन्तोऽपि तपोनित्या ब्रूयुरेतत्समन्विताः ॥ १९ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

भीष्म उवाच ॥

ततस्तेषां समस्तानामृषीणामृषिसत्तमः ।
ऋषभो नाम विप्रर्षिर्विस्मयन्निदमब्रवीत् ॥ १ ॥

पुराहं राजशार्दूल, तीर्थान्यनुचरन्प्रभो ।
समासादितवान्दिव्यं नरनारायणाश्रमम् ॥ २ ॥

तत्र सा बदरी रम्या ह्रदो वैहायसस्तथा ।
यत्र चाश्वशिरा राजन्, वेदान्पठति शाश्वतान् ॥ ३ ॥

तस्मिन्सरसि कृत्वाहं विधिवत्तर्पणं पुरा ।
पितृणां देवतानां च ततो श्रममियां तदा ॥ ४ ॥

रेमाते यत्र तौ नित्यं नरनारायणावृषी ।
अदूरादाश्रमं कंचिदाशार्थमगमं तदा ॥ ५ ॥

तत्र चीराजिनधरं कृशमच्छमतीव च ।
अद्राक्षमृषिमायान्तं तनु नाम तपोधनम् ॥ ६ ॥

अन्यैर्नरैर्महाबाहो, वपुषाष्टगुणान्वितम् ।
कृशता चापि राजर्षे, न दृष्टा तादृशी क्वचित् ॥ ७ ॥

शरीरमपि राजेन्द्र, तस्य कानिष्ठिकासमम् ।
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शना ॥ ८ ॥

शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च ।
तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ॥ ९ ॥

दृष्ट्वाहं तं कृशं विप्रं भीतः परमदुर्मनाः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ १० ॥

निवेद्य नामगोत्रे च पितरं च नरर्षभ ।
प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ ११ ॥

ततः स कथयामास कथा धर्मार्थसहिताम् ।
ऋषिमध्ये महाराज, तनुर्धर्मभृतां वरः ॥ १२ ॥

तस्मिंस्तु कथयत्येव राजा राजीवलोचनः ।
उपायाज्जवनैरश्वैः सबलः सावरोधनः ॥ १३ ॥

स्मरन्पुत्रमरण्ये वै नष्टं परमदुर्मनाः ।
भूरिद्युम्नपिता श्रीमान्वीरद्युम्नो महायशाः ॥ १४ ॥

इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति पार्थिव ।
एवमाशाहतो राजा चरन्वनमिदं पुरा ॥ १५ ॥

दुर्लभ स मया द्रष्टु नून परमधार्मिक. ।
एक· पुत्रो महारण्ये नष्ट इत्यसकृत्तदा ॥ १६ ॥

दुर्लभः स मया द्रष्टुमाशा च महती मम ।
तया परीतगात्रोऽहं मुमूर्षुर्नात्र सशय ॥ १७ ॥

एतच्छ्रुत्वा तु भगवांस्तनुर्मुनिवरोत्तमः ।
अवाक्छिरा ध्यानपरो मुहूर्तमिव तस्थिवान ॥ १८ ॥

तमनुध्यातमालक्ष्य राजा परमदुर्मना ।
उवाच वाक्यं दीनात्मा मन्द मन्दमिवासकृत् ॥ १९ ॥

दुर्लभ किं नु देवर्षे, आशायाश्चैव किं महत् ।
ब्रवीतु भगवानेतद्यदि गुह्यं न ते मयि ॥ २० ॥

मुनिरुवाच ॥

महर्षिर्भगवांस्तेन पूर्वमासीद्विमानित ।
बालिशां बुद्धिमास्थाय मन्दभाग्यतयात्मन. ॥ २१ ॥

अर्थयन्कलश राजन , काञ्चन वल्कलानि च ।
अवज्ञापूर्वकेणापि न सपादितवांस्तत ॥ २२ ॥

निर्विण्ण. स तु राजर्षिर्निराश. समपद्यत ।
एवमुक्तोऽभिवाद्याथ तमृषिं लोकपूजितम् ॥ २३ ॥

श्रान्तोऽत्रसीदद्धर्मात्मा यथा त्व नरसत्तम ।
अर्घ तत. समानीय पाद्य चैव महानृपि ॥ २४ ॥

आरण्येनैव विधिना राज्ञे सर्व न्यवेदयन् ।
ततस्ते मुनय. सर्वे परिवार्य नरर्षभम ॥ २५ ॥

उपाविशन्नरव्याघ्र, सप्तर्षय इव ध्रुवम् ।
अपृच्छंश्चैव तं तत्र राजानमपराजितम् ।
प्रयोजनमिदं सर्वमाश्रयस्य निवेशने ॥ २६ ॥

इति तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः ॥

---

राजोवाच ॥

वीरद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः ।
भूरिद्युम्नसुतं नष्टमन्वेष्टुं वनमागतः ॥ १ ॥

एकः पुत्रः स विप्राग्र्य, बाल एव च मेऽनघ ।
न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् ॥ २ ॥

ऋषभ उवाच ॥

इत्येवमुक्ते वचने राज्ञा मुनिरधोमुखः ।
तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम् ॥ ३ ॥

स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः ।
आशाकृतश्च राजेन्द्र, तपो दीर्घं समाश्रितः ॥ ४ ॥

प्रतिग्रहमहं राज्ञां न करिष्ये कथंचन ।
अन्येषां चैव वर्णानामिति कृत्वा धियं तदा ॥ ५ ॥

आशा हि पुरुषं बालमुत्थापयति तस्थुषी ।

तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः ।
वीरद्युम्नस्तु तं भूयः पप्रच्छ मुनिसत्तमम् ॥ ६ ॥

राजोवाच ॥

आशाया किं कृशत्वं च किं चेह भुवि दुर्लभम् ।
ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान् ॥ ७ ॥

ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत् ।
राजानं भगवान्विप्रस्ततः कृशतनुस्तदा ॥ ८ ॥

ऋषिरुवाच ॥

कृशत्वेन समं राजन्नाशाया विद्यते नृप ।
तस्या वै दुर्लभत्वाच्च प्रार्थितः पार्थिवो मया ॥ ९

राजोवाच ॥

कृशाकृशे मया ब्रह्मन्, गृहीते वचनात्तव ।
दुर्लभत्वं च तस्यैव वेदवाक्यमिव द्विज ॥ १० ॥

संशयस्तु महाप्राज्ञ, संजातो हृदये मम ।
तन्मुने, मम तत्त्वेन वक्तुमर्हसि पृच्छतः ॥ ११ ।

त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदम् ।
यदि गुह्यं न ते किंचिद्विद्यते मुनिसत्तम ॥ १२ ।

कृश उवाच ॥

दुर्लभोऽप्यथवा नास्ति योऽर्थी धृतिमवाप्नुयात् ।
सुदुर्लभतरः सोऽत्र योऽर्थिनं नावमन्यते ॥ १३ ।

सत्कृत्य नोपकुरुते परं शक्त्या यथार्हतः ।
या सक्ता सर्वभूतेषु साशा कृशतरी मम ॥ १४ ॥

कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च ।
अपकारिषु च या सक्ता साशा कृशतरी मम ॥ १५ ॥

एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा ।
प्रवृत्तिं यो न जानाति साशा कृशतरी मम ॥ १६ ॥

प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ।
तथा नरेन्द्र, धनिनां साशा कृशतरी मम ॥ १७ ॥

प्रदानकाङ्क्षिणीनां च कन्यानां वयसि स्थिते ।
श्रुत्वा कथास्तथायुक्ताः साशा कृशतरी मम ॥ १८ ॥

एतच्छ्रुत्वा ततो राजन्, स राजा सावरोधनः ।
संस्पृश्य पादौ शिरसा निपपात द्विजर्षभम ॥ १९ ॥

राजोवाच ॥

प्रसादये त्वां भगवन्, पुत्रेणेच्छामि सङ्गमम् ।
यदेतदुक्तं भवता सम्प्रति द्विजसत्तम ॥ २० ॥

सत्यमेतन्न संदेहो यदेतद्व्याहृतं त्वया ।
ततः प्रहस्य भगवांस्तनुर्धर्मभृतां वरः ॥ २१ ॥

पुत्रमस्यानयत्क्षिप्रं तपसा च श्रुतेन च ।
स समानीय तं पुत्रं तमुपालभ्य पार्थिवम् ॥ २२ ॥

आत्मानं दर्शयामास धर्मं धर्मभृतां वरः ।
स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम् ॥ २३ ॥

विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ।
एतद्दृष्टं मया राजन्, तथा च वचनं श्रुतम् ।
आशामपनयस्वाशु ततः कृशतरीमिमाम् ॥ २४ ॥

भीष्म उवाच ॥

स तथोक्तस्तदा राजन्नृषभेण महात्मना ।
सुमित्रोऽपनयत्क्षिप्रमाशां कृशतरीं ततः ॥ २५ ॥

एवं त्वमपि कौन्तेय, श्रुत्वा वाणीमिमां मम ।
स्थिरो भव महाराज, हिमवानिव पर्वतः ॥ २६ ॥

त्वं हि प्रष्टा च श्रोता च कृच्छ्रेष्वनुगतेष्विह ।
श्रुत्वा मम महाराज, न संतप्तुमिहार्हसि ॥ २७ ॥

इति चतुर्थोऽध्यायः ॥

इति श्रीमहाभारते शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासु
१२५—१२८—अध्यायाः ।



# ॥ सौभरिचरितम् ॥

---

मान्धाता शशिबिन्दोर्दुहितरमिन्दुमतीमुपयेमे। पुरुकुत्समम्बरीषं मुचुकुन्दं च तस्यां पुत्रत्रयमुत्पादयामास। पञ्चाशद्दुहितरस्तस्यामेव नृपतेर्बभूवुः। एतस्मिन्नन्तरे बह्वृचः सौभरिर्नाम ऋषिरन्तर्जले द्वादशाब्दं कालमुवास। तत्र चान्तर्जले सम्मदो नामातिबहुप्रजोऽतिप्रमाणो मीनाधिपतिरासीत्। तस्य पुत्रपौत्रदौहित्राः पृष्ठतोऽग्रतः पार्श्वतः पक्षपुच्छशिरसां चोपरि भ्रमन्तस्तेनैवाहर्निशमतिनिर्वृता रेमिरे। स चापत्यस्पर्शोपचीयमानहर्षप्रकर्षो बहुप्रकारं तस्यर्षेः पश्यतः स्वैः पुत्रपौत्रदौहित्रादिभिः सहानुदिनं सुतरां रेमे। अथान्तर्जलावस्थितः सौभरिरेकाग्रतासमाधानमपहायानुदिनं तस्य मत्स्यस्यात्मजपौत्रदौहित्रादिभिः सहातिरमणीयं ललितमवेक्ष्याचिन्तयत्। अहो धन्योऽयमीदृशमप्यभिमतं योन्यन्तरमवाप्यैभिरात्मजपौत्रदौहित्रादिभिः सह रममाणोऽतीवास्माकं स्पृहामुत्पादयति। वयमप्येवं पुत्रादिभिः सह रमिष्याम इत्येवमभिसमीक्ष्य स तस्मादन्तर्जलान्निष्क्रम्य सन्तानाय निर्वेष्टुकामः कन्यार्थं मान्धातारं राजानमगच्छत्। आगमश्रवणसमनन्तरं चोत्थाय तेन राज्ञा सम्यगर्घ्यादिना पूजितः कृतासनपरिग्रहः सौभरिरुवाच राजानम्॥

सौभरिरुवाच॥

'निर्वेष्टुकामोऽस्मि नरेन्द्र, कन्यां
प्रयच्छ मे मा प्रणयं विभाङ्क्षीः।

न ह्यर्थिन कार्यवशादुपेता

ककुत्स्थवंशे विमुखा प्रयान्ति ॥ १ ॥

अन्येऽपि सन्त्येव नृपा पृथिव्या

मान्धातरेषा तनया प्रसूता ।

किन्त्वर्थिनामर्थितदानदीक्षा-

कृतव्रतं श्लाघ्यमिदं कुलं ते ॥ २ ॥

शतार्धमख्यास्तव सन्ति कन्या

स्तासां ममैकां नृपते, प्रयच्छ ।

यत्प्रार्थनाभङ्गभयाद्बिभेमि

तस्मादहं राजवरातिदुःखात् ॥ ३ ॥'

इति ऋषिवचनमाकर्ण्य, स राजा जराजर्जरितदेहं तं ऋषिमालोक्य प्रत्याख्यानकातरस्तस्माच्च शापतो बिभ्यत् किंचिद-धोमुखश्चिरं दध्यौ ॥

सौभरिरुवाच ॥

नरेन्द्र, कस्मात्समुपैषि चिन्ता-

मसह्यमुक्तं न मयात्र किंचित् ।

यावश्यदेया तनया तथैव

कृतार्थता नो यदि किं न लभ्या ॥ ४ ॥

अथ तस्य शापभीतः सप्रश्रयस्तमुवाचासौ राजा । 'भगवन्, अस्मत्कुलस्थितिरियं य एव कन्याभिरुचितोऽभिजनवान्वरस्तस्मै कन्या प्रदीयते । भवत्प्रार्थना चास्मन्मनोरथानामप्यगोचरवर्तिनी ।

कथमप्येषा सजाता। तदेवमवस्थिते. न विद्म किं कुर्म इति। एतन्मया चिन्त्यते।' इत्यभिहिते च तेन भूभुजा मुनिरचिन्तयत्। 'अयमन्योऽस्मत्प्रत्याख्यानोपाय। वृद्धोऽयमनभिमत स्त्रीणा किमुत कन्यानामित्यमुना सचिन्त्यैतदभिहितम्। एवमस्तु, तथा करिष्यामि' इति सचिन्त्य मान्धातारमुवाच। 'यद्येव तदादिश्यता कन्यकान्त पुरप्रवेशाय वर्षवर। यदि कन्यैव काचिन्मामभिलषति, तदाह दारसग्रह करिष्यामि। अन्यथाचेत्तदलमस्माकमेतेनातीतकालारम्भेण' इत्युक्त्वा विरराम। ततश्च मान्धात्रा मुनिशापशङ्कितेन कन्यान्त पुरवर्षवर समाज्ञप्त। तेन सह कन्यकान्त पुर प्रविशन्नेव भगवानखिलसिद्धगन्धर्वमनुष्येभ्योऽतिशयेन कमनीय रूपमकरोत्। प्रवेश्य च तमन्त पुरवर्षवरस्ता कन्या प्राह— भवतीना जनयिता महाराज समाज्ञापयति— 'अयमस्मान्ब्रह्मर्षि कन्यार्थी समागत। मया चास्य प्रतिज्ञात यदस्मत्कन्या या काचित् भगवन्त वरयति, तत्कन्याच्छन्दे नाह परिपन्थान करिष्यामि' इत्याकर्ण्य सर्वा अपि ता कन्या सानुरागा समन्मथा करेणव इवेभयूथपतिं तमृषिमहमहमिकया वरयाम्बभूवु। ऊचुश्च॥

अल भगिन्योऽहमिम वृणोमि<br>
वृणोम्यह नैष तवानुरूप।<br>
ममैव भर्ता विधिनैष सृष्ट<br>
सृष्टाहमस्योपशम प्रयाहि॥ ५॥

वृतो मयाय प्रथम मयाय<br>
गृह विशन्नेह विहन्यसे किम्।

मया ममेति क्षितिपात्मजाना
तदर्थमत्यन्तकलिर्बभूव ॥ ६ ॥

यदा तु सर्वाभिरतीव हार्दा-
द्वृत. स कन्याभिरनिन्द्यकीर्ति ।
तदा स कन्याधिकृतो नृपाय
यथावदाचष्ट विनम्रमूर्ति· ॥ ७ ॥

श्रीपराशर उवाच ॥

तदवगम्य 'किमेतत्, कथमेतत्, किं करोमि, किं मयाभिहितम्' इत्याकुलमतिरनिच्छन्नपि कथमपि राजानुमेने । कृतानुरूपविवाहश्च महर्षि. सकला एव ता कन्या· स्वमाश्रममनयत् । तत्र चाशेषशिल्पकल्पप्रणेतार विधातारमिवान्यं विश्वकर्माणमाहूय सकलकन्यकानामेकैकस्या प्रोत्फुल्लपङ्कजकूजत्कलहंसकारण्डवादिविहङ्गमाभिरामजलाशया. सोपवना सोपधाना सावकाशा साधुशय्यापरिच्छदा प्रासादा क्रियन्तामित्यादिदेश । तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्यस्त्वष्टा दर्शितवान् । ततश्च परमर्षिणा सौभरिणाज्ञप्तेषु गृहेषु अनपायी नन्दनामा महानिधिरासाचक्रे । ततोऽनवरतभक्ष्यभोज्यलेह्याद्युपभोगैरागतानुगतभृत्यादीनहर्निशमशेषगृहेषु ता क्षितीशदुहितरो भोजयामासु । एकदा दुहितृस्नेहाकृष्टहृदयः स महीपति किमिदं सुखितास्ता उत असुखिता वेति विचिन्त्य तस्य महर्षेराश्रमसमीपमुपेत्य स्फुरदंशुमाला स्फटिकमणिमयप्रासादमालामतिरम्योपवनजलाशया ददर्श । प्रविश्य चैकं प्रासादमात्मजां परिष्वज्य कृतासनपरिग्रह प्रवृद्धस्नेहनयनाम्बुगर्भोऽब्रवीत् । 'अयि

मित्यादिमनोरथाननुदिनं कालसंपत्तिवृध्दानवेक्ष्यैतच्चिन्तयामास । अहो मे मोहस्यातिविस्तारः ॥

मनोरथानां न समाप्तिरस्ति
वर्षायुतेनाप्यथवापि लक्षैः ।
पूर्णेषु पूर्णेषु पुनर्नवाना-
मुत्पत्तयः सन्ति मनोरथानाम् ॥ ८ ॥

पद्भ्यां गता यौवनिनश्च जाता
दारैश्च संयोगमिताः प्रसूताः ।
दृष्टाः सुतास्तत्तनयप्रसूतिं
द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥ ९ ॥

द्रक्ष्यामि तेषामपि चेत्प्रसूतिं
मनोरथो मे भविता ततोऽन्यः ।
पूर्णेऽपि तस्याप्यपरस्य जन्म
निवार्यते केन मनोरथस्य ॥ १० ॥

आ मृत्युतो नैव मनोरथाना-
मन्तोऽस्ति विज्ञातमिदं मयात्र ।
मनोरथासक्तिपरस्य चित्तं
न जायते वै परमार्थसङ्गि ॥ ११ ॥

स मे समाधिर्जलवासमित्र-
मत्स्यस्य सङ्गात्सहसैव नष्टः ।
परिग्रहः सङ्गकृतो मयायं
परिग्रहोत्था च ममातिलिप्सा ॥ १२ ॥

दुःखं यदेवैकशरीरजन्म
शतार्धसङ्ख्यातमिदं प्रसूतम् ।
परिग्रहेण क्षितिपात्मजानां
सुतैरनेकैर्बहुलीकृतं तत् ॥ १३ ॥

सुतात्मजैस्तत्तनयैश्च भूयो
भूयश्च तेषां स्वपरिग्रहेण ।
विस्तारमेष्यत्यतिदुःखहेतुः
परिग्रहो वै ममताभिधानः ॥ १४ ॥

चीर्णं तपो यत्तु जलाश्रयेण
तस्यर्धिरेषा तपसोऽन्तरायः ।
मत्स्यस्य सङ्गादभवच्च यो मे
सुतादिरागो मुषितोऽस्मि तेन ॥ १५ ॥

निःसङ्गता मुक्तिपदं यतीनां
सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधः
सङ्गेन योगी किमुताल्पसिद्धिः ॥ १६ ॥

सोऽहं चरिष्यामि तथात्मनोऽर्थे
परिग्रहग्राहगृहीतबुद्धिः ।
यथा हि भूयः परिहीनदोषो
जनस्य दुःखैर्भविता न दुःखी ॥ १७ ॥

सर्वस्य धातारमचिन्त्यरूप-
मणोरणीयांसमतिप्रमाणम् ।

सितासितं चेश्वरमीश्वराणा-
माराधयिष्ये तपसैव विष्णुम् ॥ १८ ॥

तस्मिन्नशेषौजसि सर्वरूपि-
ण्यव्यक्तविस्पष्टतनावनन्ते।
ममाचलं चित्तमपेतदोषं
सदास्तु विष्णावभवाय भूयः ॥ १९ ॥

समस्तभूतादमलादनन्ता-
त्सर्वेश्वरादन्यदनादिमध्यात्।
यस्मान्न किंचित्तमहं गुरूणां
परं गुरुं संश्रयमेमि विष्णुम् ॥ २० ॥

पराशर उवाच ॥

इत्यात्मानमात्मनैवाभिधायासौ सौभरिरपहाय स्वपुत्रगृहासनपरिच्छदादिकमशेषमर्थजातं सकलभार्यासमवेतो वनं प्रविवेश। तत्राप्यनुदिनं वैखानसनिष्पाद्यमशेषक्रियाकलापं निष्पाद्य क्षपितसकलपापः परिपक्वमनोवृत्तिरात्मन्यग्नीन्समारोप्य भिक्षुरभवत्। भगवत्यासज्याखिलकर्मकलापमविकारममरणादिधर्ममवाप परमनन्तं परवतामच्युतपदम्। यश्चैतत्सौभरिचरितमनुस्मरति पठति पाठयति लिखति लेखयति शिक्षयति अध्यापयति उपदिशति तस्याष्टौ जन्मान्यसन्मतिरपधर्मः वाङ्मनसोरसन्मार्गानुसरणमशेषु हेयेषु वा ममत्वं न भवति ॥

इति श्रीविष्णुपुराणे चतुर्थांशे सौभरिचरिते
द्वितीयोऽध्यायः ॥

# ॥ दुर्वास उपाख्यानम् ॥

जनमेजय उवाच ॥

वसत्स्वेव वने तेषु पाण्डवेषु महात्मसु ।
रममाणेषु चित्राभि कथाभिर्मुनिभि सह ॥ १ ॥

सूर्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि ।
ब्राह्मणास्तर्पयाणेषु ये चान्नार्थमुपागता ॥ २ ॥

आरण्याना मृगाणा च मासैर्नानाविधैरपि ।
धार्तराष्ट्रा दुरात्मान सर्वे दुर्योधनादय ॥ ३ ॥

कथ तेष्वन्ववर्तन्त पापाचारा महामुने ।
दु शासनस्य कर्णस्य शकुनेश्च मते स्थिता ॥ ४ ॥

एतदाचक्ष्व भगवन, वैशम्पायन, पृच्छत ।

वैशम्पायन उवाच ॥

श्रुत्वा तेषा तथावृत्ति नगरे वसतामिव ॥ ५ ॥

दुर्योधनो महाराज, तेषु पापमरोचयत ।
तथा तैर्निकृतिप्रज्ञै कर्णदुश्शासनादिभि ॥ ६ ॥

नानोपायैरघ तेषु चिन्तयत्सु दुरात्मसु ।
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशा ॥ ७ ॥

शिष्यायुतसमोपेतो दुर्वासा नाम कामत ।
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ॥ ८ ॥

दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभि श्रीमानातिथ्येन न्यमन्त्रयत् ॥ ९ ॥

विधिवत्पूजयामास स्वय किकरवत्स्थित ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तम ॥ १० ॥

त च पर्यचरद्राजा दिवारात्रमतन्द्रित ।
दुर्योधनो महाराज, शापात्तस्य विशङ्कित ॥ ११ ॥

क्षुधितोऽस्मि ददस्वान्न शीघ्र मम नराधिप ।
इत्युक्त्वा गच्छति स्नातु प्रत्यागच्छति वै चिरात् ॥ १२ ॥

न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्य दर्शनम् ।
अकस्मादेत्य च ब्रूते भोजयास्मास्त्वरान्वित ॥ १३ ॥

कदाचिच्च निशीथे स उत्थाय निकृतौ स्थित ।
पूर्ववत्कारयित्वान्न न भुङ्क्ते गर्हयन्स्म स ॥ १४ ॥

वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृप ।
विकृतिं नैति न क्रोध तदा तुष्टोऽभवन्मुनि ॥ १५ ॥

आह चैन दुराधर्षो वरदोऽस्मीति भारत ।

दुर्वासा उवाच ॥

वर वरय भद्र ते यत्ते मनसि वर्तते ।
मयि प्रीते तु यद्धर्म्य नालभ्य विद्यते तव ॥ १६ ॥

वैशम्पायन उवाच ॥

एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मन. ।
अमन्यत पुनर्जातमात्मान स सुयोधनः ॥ १७ ॥

प्रागेव मन्त्रित चासीत्कर्णदुश्शासनादिभिः ।
याचनीय मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ॥ १८ ॥

अतिहर्षान्वितो राजन्, वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन , यथा जातोऽतिथिर्भवान ॥ १९ ॥

अस्मत्कुले महाराजो ज्येष्ठ श्रेष्ठो युधिष्ठिरः ।
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ॥ २० ॥

गुणवाञ्शीलसंपन्नस्तस्य त्वमतिथिर्भव ।
यदा च राजपुत्री सा सुकुमारी यशस्विनी ॥ २१ ॥

भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ।
विश्रान्ता च स्वय भुक्त्वा सुखासीना यदा भवेत् ॥ २२ ॥

तदा त्व तत्र गच्छेथा यद्यनुग्राह्यता मयि ।
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम ॥ २३ ॥

दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ।
कृतार्थमपि चात्मानं तदा मेने सुयोधनः ॥ २४ ॥

करेण च कर गृह्य कर्णस्य मुदितो भृशम ।
कर्णोऽपि भ्रातृसहितमित्युवाच नृपं तदा ॥ २५ ॥

कर्ण उवाच ॥

दिष्ट्या काम सुसवृत्तो दिष्ट्या कौरव, वर्धसे ।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ॥ २६ ॥

दूर्वास क्रोधजे वह्नौ पतिता पाण्डुनन्दना ।
स्वैरेव ते महापापैर्गता वै दुस्तर तम ॥ २७ ॥

वैशम्पायन उवाच ॥

इत्थ ते निकृतिप्रज्ञा राजन, दुर्योधनादय ।
हसन्त प्रीतमनसो जग्मु स्व स्व निकेतनम ॥ २८ ॥

इति प्रथमोऽध्याय ॥

## द्वितीयोऽध्यायः ॥

वैशम्पायन उवाच ॥

तत कदाचिद्दुर्वासा सुखासीनास्तु पाण्डवान् ।
भुक्त्वा चावस्थिता कृष्णा ज्ञात्वा तस्मिन्वने मुनि ॥ १ ॥

अभ्यागच्छत्परिवृत शिष्यैरयुतसमितै ।
दृष्ट्वायान्त तमतिथिं स च राजा युधिष्ठिर ॥ २ ॥

जगामाभिमुख श्रीमान्सह भ्रातृभिरच्युत ।
तस्मै बद्ध्वाञ्जलि सम्यगुपवेश्य वरासने ॥ ३ ॥

विधिवत्पूजयित्वा तमातिथ्येन न्यमन्त्रयन ।
आह्निक भगवन, कृत्वा शीघ्रमेहीति चाब्रवीत् ॥ ४ ॥

जगाम च मुनिः सोऽपि स्नातुं शिष्यैः सहानघः ।
भोजयेत्सह शिष्यं मां कथमित्यतिचिन्तयन ॥ ५ ॥

न्यमज्जत्सलिले चापि मुनिसङ्घसमाहितः ।
एतस्मिन्नन्तरे राजन , द्रौपदी योषितां वरा ॥ ६ ॥

चिन्तामवाप परमामन्नहेतोः पतिव्रता ।
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत ॥ ७ ॥

मनसा चिन्तयामास कृष्णं कंसनिपूदनम् ।
कृष्ण, कृष्ण, महाबाहो, देवकीनन्दनाव्यय ॥ ८ ॥

वासुदेव, जगन्नाथ, प्रणतार्तिविनाशन ।
विश्वात्मन , विश्वजनक, विश्वहर्तः, प्रभोऽव्यय ॥ ९ ॥

प्रपन्नपाल, गोपाल. प्रजापाल, परात्पर ।
आकूतीनां च चित्तीनां प्रवर्तक, नतास्मि ते ॥ १० ॥

वरेण्य, वरदानन्त, अगतीनां गतिर्भव ।
पुराणपुरुष, प्राणमनोवृत्त्याद्यगोचर ॥ ११ ॥

सर्वाध्यक्ष, पराध्यक्ष, त्वामहं शरणं गता ।
पाहि मां कृपया देव, शरणागतवत्सल ॥ १२ ॥

नीलोत्पलदलश्याम, पद्मगर्भारुणेक्षण ।
पीताम्बरपरिधान, लसत्कौस्तुभभूषण ॥ १३ ॥

त्वमादिरन्तो भूतानां त्वमेव च परायणम् ।
परात्परतरं ज्योतिर्विश्वात्मा सर्वतोमुखः ॥ १४ ॥

त्वामेवाहुः परं बीजं निधानं सर्वसंपदाम् ।
त्वया नाथेन देवेश, सर्वापद्भ्यो भयं न हि ॥ १५ ॥

दुश्शासनादहं पूर्वं सभायां मोचिता यथा ।
तथैव सङ्कटादस्मान्मामुद्धर्तुमिहार्हसि ॥ १६ ॥

वैशम्पायन उवाच ॥

एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः ।
द्रौपद्याः संकटं ज्ञात्वा देवदेवो जगत्पतिः ॥ १७ ॥

पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः ।
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः ॥ १८ ॥

ततस्तं द्रौपदी दृष्ट्वा प्रणम्य परया मुदा ।
अब्रवीद्वासुदेवाय मुनेरागमनादिकम ॥ १९ ॥

ततस्तामब्रवीत्कृष्ण. क्षुधितोऽस्मि भृशातुरः ।
शीघ्रं भोजय मां कृष्णे, पश्चात्सर्वं करिष्यसि ।
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् ॥ २० ॥

स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ।
भुक्तवत्यस्म्यहं देव, तस्मादन्नं न विद्यते ॥ २१ ॥

ततः प्रोवाच भगवान् कृष्णां कमललोचनः ।
कृष्णे, न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ॥ २२ ॥

शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ।
इति निर्बन्धतः स्थालीमानाय्य स यदूद्वहः ॥ २३ ॥

स्थाल्या कण्ठेऽथ सलग्न शाकान्न वीक्ष्य केशव ।
उपयुज्याब्रवीदेनामनेन हरिरीश्वर ॥ २४ ॥

विश्वात्मा प्रीयता देवस्तुष्टश्चास्त्विति यज्ञभुक् ।
आकारय मुनीञ्शीघ्र भोजनायेति चाब्रवीत् ॥ २५ ॥

सहदेव महाबाहु कृष्ण क्लेशविनाशन ।
ततो जगाम त्वरित सहदेवो महायशा ॥ २६ ॥

आकारितु तु तान्सर्वान्भोजनार्थं नृपोत्तम ।
स्नातु गतान्देवनद्या दुर्वास प्रभृतीन्मुनीन् ॥ २७ ॥

ते चावतीर्णा सलिले कृतवन्तोऽघमर्षणम् ।
दृष्ट्वोद्गारान्सान्नरसास्तृप्त्या परमया युता ॥ २८ ॥

उत्तीर्य सलिलात्तस्माद्दृष्टवन्त परस्परम् ।
दुर्वाससमभिप्रेक्ष्य ते सर्वे मुनयोऽब्रुवन् ॥ २९ ॥

राज्ञा हि कारयित्वान्न वय स्नातु समागता ।
आकण्ठतृप्ता विप्रर्षे, किस्विद्भुञ्जामहे वयम् ॥ ३० ॥

वृथा पाक कृतोऽस्माभिस्तत्र कि करवामहै ।

दुर्वासा उवाच ॥

वृथापाकेन राजर्षेरपराध कृतो महान् ॥ ३१ ॥

मास्मानधाक्षुर्दृष्ट्वैव पाण्डवा क्रूरचक्षुषा ।
स्मृत्वानुभाव राजर्षेरम्बरीषस्य धीमत ॥ ३२ ॥

बिभेमि सुतरा विप्रा , हरिपादाश्रयाज्जनात् ।
पाण्डवाश्च महात्मान सर्वे धर्मपरायणा ॥ ३३ ॥

शूराश्च कृतविद्याश्च व्रतिनस्तपसि स्थिता ।
सदाचाररता नित्य वासुदेवपरायणा ॥ ३४ ॥

क्रुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानल ।
तत एतानपृष्ट्वैव शिष्या, शीघ्र पलायत ॥ ३५ ॥

वैशम्पायन उवाच ॥

इत्युक्तास्ते द्विजा सर्वे मुनिना गुरुणा तदा ।
पाण्डवेभ्यो भृश भीता दुद्रुवुस्ते दिशो दश ॥ ३६ ॥

सहदेवो देवनद्यामपश्यन्मुनिसत्तमान ।
तीर्थेष्वितस्ततस्तस्या विचचार गवेषयन् ॥ ३७ ॥

तत्रस्थेभ्यस्तापसेभ्य श्रुत्वा ताश्चैव विद्रुतान ।
युधिष्ठिरमथाभ्येत्य त वृत्तान्त न्यवेदयत् ॥ ३८ ॥

ततस्ते पाण्डवा सर्वे प्रत्यागमनकाङ्क्षिण ।
प्रतीक्षन्त कियत्काल जितात्मानोऽवतस्थिरे ॥ ३९ ॥

निशीथेऽभ्येत्य चाकस्मादस्मान्स च्छलयिष्यति ।
कथ च नि सरेदस्मात्कृच्छ्राद्दैवोपसादितान् ॥ ४० ॥

इति चिन्तापरान्दृष्ट्वा निश्वसन्तो मुहुर्मुहु ।
उवाच वचन श्रीमान्कृष्ण प्रत्यक्षता गत ॥ ४१ ॥

श्रीकृष्ण उवाच ॥

भवतामापद ज्ञात्वा ऋषे परमकोपनात् ।
द्रौपद्या चिन्तित पार्थ, अह सत्वरमागत ॥ ४२ ॥

न भयं विद्यते तस्माद्दपेर्दुर्वाससोऽल्पकम् ।
तेजसा भवतां भीतः पूर्वमेव पलायितः ॥ ४३ ॥

धर्मनित्यास्तु ये के चिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ॥ ४४ ॥

वैशम्पायन उवाच ॥

श्रुत्वेरितं केशवस्य बभूवु. स्वस्थमानसाः ।
द्रौपद्या सहिताः पार्थास्तमूचुर्विगतज्वराः ॥ ४५ ॥

त्वया नाथेन गोविन्द, दुस्तरामापदं विभो !
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे ॥ ४६ ॥

स्वस्ति साधय भद्र ते इत्याज्ञातो ययौ पुरीम् ।
पाण्डवाश्च महाभाग, द्रौपद्या सहिता. प्रभो ॥ ४७ ॥

ऊपु. प्रहृष्टमनसो विहरन्तो वनाद्वनम् ।
इति तेऽभिहितं राजन, यत्पृष्टोऽहमिह त्वया ॥ ४८ ॥

एवं विधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभि. ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाभवन ॥ ४९ ॥

इति द्वितीयोऽध्यायः ॥

इति श्रीमहाभारते आरण्यके पर्वणि दुर्वास उपाख्याने
२६२—२६३ अध्यायौ ॥

## ॥ कृतघ्नोपाख्यानम् ॥

युधिष्ठिर उवाच ॥

विस्तरेणाथ संबन्धं श्रोतुमिच्छामि तत्वतः ।
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तद्वदस्व मे ॥ १ ॥

भीष्म उवाच ॥

हन्त ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ २ ॥

ब्राह्मणो मध्यदेशीयः कश्चिद्वै ब्रह्मवर्जितम् ।
ग्रामं वृद्धियुतं वीक्ष्य प्राविशद्भैक्ष्यकाङ्क्षया ॥ ३ ॥

तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् ।
ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् ॥ ४ ॥

तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ॥ ५ ॥

प्रादात्तस्मै स विप्राय वस्त्रं च सदशं नवम् ।
नारीं चापि वयोपेतां भर्त्रा विरहितां तथा ॥ ६ ॥

एतत्संप्राप्य हृष्टात्मा दस्योः सर्वं द्विजस्तथा ।
तस्मिन्गृहवरे राजन्, तया रेमे स गौतमः ॥ ७ ॥

कुटुम्बार्थं च दस्योश्च साहाय्यं चाप्यथाकरोत् ।
तत्रावसत्स वर्षाश्च समृद्धे शबरालये ॥ ८ ॥

बाणवेधे परं यत्नमकरोच्चैव गौतम ।
चक्राङ्गान्स च नित्यं वै सर्वतो वनगोचरान् ॥ ९ ॥

जघान गौतमो राजन्, यथा दस्युगणास्तथा ।
हिंसापटुर्घृणाहीन सदा प्राणिवधे रत ॥ १० ॥

गौतम सनिकर्षेण दस्युभि समतामियान ।
तथा तु वसतस्तस्य दस्युग्रामे सुख तदा ॥ ११ ॥

अगमन्बहवो मासा निघ्नत' पक्षिणो बहून ।
तत' कदाचिदपरो द्विजस्त देशमागतः ॥ १२ ॥

जटाचीराजिनधर स्वाध्यायपरम. शुचि ।
विनीतो नियताहारो ब्रह्मण्यो वेदपारग' ॥ १३ ॥

सब्रह्मचारी तद्देश्य. सखा तस्यैव सुप्रियः ।
त दस्युग्राममगमद्यत्रासौ गौतमोऽवसत् ॥ १४ ॥

स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जक ।
ग्रामे दस्युसमाकीर्णे व्यचरत्सर्वतो दिशम ॥ १५ ॥

तत. स गौतमगृहं प्रविवेश द्विजोत्तमः ।
गौतमश्चापि सम्प्राप्तस्तावन्योन्येन सगतौ ॥ १६ ॥

चक्राङ्गभारस्कन्धं त धनुष्पाणिं धृतायुधम् ।
रुधिरेणावसिक्ताङ्ग गृहद्वारमुपागतम ॥ १७ ॥

तं दृष्ट्वा पुरुषादाभमपत्रस्तं क्षयागतम ।
अभिज्ञाय द्विजो व्रीडन्निद वाक्यमथाब्रवीत् ॥ १८ ॥

किमिद कुरुषे मोहाद्विप्रस्त्व हि कुलोद्वहः ।
मध्यदेशपरिज्ञातो दस्युभाव गतः कथम् ॥ १९ ॥

पूर्वान्स्मर द्विज, ज्ञातीन्प्रख्यातान्वेदपारगान् ।
तेषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ॥ २० ॥

अवबुध्यात्मनात्मानं स त्वं शीलं श्रुतं दमम् ।
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ॥ २१ ॥

स एवमुक्तः सुहृदा तेन तत्र हितैषिणा ।
प्रत्युवाच ततो राजन् , विनिश्चित्य तदार्थवत् ॥ २२ ॥

निर्धनोऽस्मि द्विजश्रेष्ठ, नापि वेदविदप्यहम् ।
वित्तार्थमिह सप्राप्त विद्धि मां द्विजसत्तम ॥ २३ ॥

त्वद्दर्शनात्तु विप्रेन्द्र, कृतार्थोऽस्म्यद्य वै द्विज ।
आवां हि सह यास्याव श्वो वसस्वाद्य शर्वरीम ॥ २४ ॥

स तत्र न्यवसद्विप्रो घृणी किंचिदसंस्पृशन ।
क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ॥ २५ ॥

इति प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥

भीष्म उवाच ॥

तस्यां निशायां व्युष्टायां गते तस्मिन्द्विजोत्तमे ।
निष्क्रम्य गौतमोऽगच्छत्समुद्रं प्रति भारत ॥ १ ॥

सामुद्रिकान्स वणिजस्ततोऽपश्यत् स्थितान्पथि ।
स तेन सह सार्थेन प्रययौ सागरं प्रति ॥ २ ॥

स तु सार्थो महान्राजन्, कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहत प्रायशोऽभवत् ॥ ३ ॥

स कथंचिद्भयात्तस्माद्विमुक्तो ब्राह्मणस्तथा ।
कांदिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥ ४ ॥

स तु सार्थपरिभ्रष्टस्तस्माद्देशात्तथा च्युतः ।
एकाकी व्यचरत्तत्र वने किंपुरुषो यथा ॥ ५ ॥

स पन्थानमथासाद्य समुद्राभिसरं तदा ।
आससाद वनं दिव्य रम्य पुष्पितपादपम् ॥ ६ ॥

सर्वर्तुकैराम्रवणैः पुष्पितैरुपशोभितम् ।
नन्दनोद्देशसदृश यक्षकिंनरसेवितम् ॥ ७ ॥

सालैस्तालैस्तमालैश्च कालागरुवनैस्तथा ।
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ॥ ८ ॥

गिरिप्रस्थेषु रम्येषु तेषु तेषु सुगन्धिषु ।
समन्ततो द्विजश्रेष्ठास्तत्राकूजन्त वै तदा ॥ ९ ॥

मनुष्यवदनास्त्वन्ये भारुण्डा इति विश्रुताः ।
भूलिङ्गशकुनास्त्वन्ये सामुद्राः पर्वतोद्भवाः ॥ १० ॥

स तान्यतिमनोज्ञानि विहगानां रुतानि वै ।
शृण्वन्सुरमणीयानि विप्रोऽगच्छत गौतमः ॥ ११ ॥

ततोऽपश्यत्सुरम्ये स सुवर्णसिकताचिते ।
देशे समे सुखे चित्रे स्वर्गोद्देशसमे नृप ॥ १२ ॥

श्रिया जुष्टं महावृक्षं न्यग्रोधं च सुमण्डलम् ।
शाखाभिरनुरूपाभिर्भूयिष्ठं छत्रसंनिभम् ॥ १३ ॥

तस्य मूलं च संसिक्तं वरचन्दनवारिणा ।
दिव्यपुष्पान्वितं श्रीमत्पितामहसभोपमम् ॥ १४ ॥

तं दृष्ट्वा गौतमः प्रीतो मत्तः कान्तमनुत्तमम् ।
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ॥ १५ ॥

तमासाद्य मुदा युक्तस्तस्याधस्तादुपाविशत् ।
तत्रासीनस्य कौन्तेय, गौतमस्य सुखः शिवः ॥ १६ ॥

पुष्पाणि समुपस्पृश्य प्रववावनिलः शुभः ।
ह्लादयन्सर्वगात्राणि गौतमस्य तदा नृप ॥ १७ ॥

स तु विप्रः प्रशान्तश्च स्पृष्टः पुण्येन वायुना ।
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात् ॥ १८ ॥

ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः ॥ १९ ॥

नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः कश्यपस्यात्मसंभवः ॥ २० ॥

राजधर्मेऽतिविख्यातो बभूवाप्रतिमो भुवि ।
देवकन्यासुतः श्रीमान्विद्वान्देवसमप्रभः ॥ २१ ॥

मृष्टाभरणसंपन्नो भूषणैरर्कसंनिभैः ।
भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन् ॥ २२ ॥

तमागतं खगं दृष्ट्वा गौतमो विस्मितोऽभवत् ।
क्षुत्पिपासापरिश्रान्तो हिंसार्थी चाभ्यवैक्षत ॥ २३ ॥

राजधर्मोवाच ॥

स्वागतं भवतो विप्र, दिष्ट्या प्राप्तोऽसि मे गृहम् ।
अस्तं च सविता यातः सन्ध्येयं समुपस्थिता ॥ २४ ॥

मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः ।
पूजितो यास्यति प्रातर्विधिदृष्टेन कर्मणा ॥ २५ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥



भीष्म उवाच ॥

गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा ।
कौतूहलान्वितो राजन्, राजधर्माणमैक्षत ॥ १ ॥

राजधर्मोवाच ॥

भोः कश्यपस्य पुत्रोऽहं माता दाक्षायणी च मे ।
अतिथिस्त्वं गुणोपेतः स्वागतं ते द्विजोत्तम ॥ २ ॥

भीष्म उवाच ॥

तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
सालपुष्पमयीं दिव्यां बृसीं वै समकल्पयत् ॥ ३ ॥

भगीरथरथाक्रान्तदेशान्गङ्गानिषेवितान् ।
ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ॥ ४ ॥

वह्नि चापि सुसंदीप्तं मीनांश्चापि सुपीवरान् ।
स गौतमायातिथये न्यवेदयत काश्यपिः ॥ ५ ॥

भुक्तवन्त च त विप्रं प्रीतात्मान महातपाः ।
क्लमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ॥ ६ ॥

ततो विश्रान्तमासीन गोत्रप्रश्नमपृच्छत ।
सोऽब्रवीद्गौतमोऽस्मीति ब्रह्म नान्यदुदाहरत् ॥ ७ ॥

तस्मै पर्णमय दिव्य दिव्यपुष्पाधिवासितम् ।
गन्धाढ्य शयनं प्रादात्स शिश्ये तत्र वै सुखम् ॥ ८ ॥

अथोपविष्ट शयने गौतम धर्मराट् तदा ।
पप्रच्छ काश्यपो वाग्मी किमागमनकारणम् ॥ ९ ॥

ततोऽब्रवीद्गौतमस्त दरिद्रोऽहं महामते ।
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥ १० ॥

त काश्यपोऽब्रवीत्प्रीतो नोत्कण्ठा कर्तुमर्हसि ।
कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान ॥ ११ ॥

भीष्म उवाच ॥ श्येनचेष्टना ।

तस्मै दत्त्वा स सत्कारं द्वारमुपागमत् ॥ २२ ॥

सालपुष्पमयीं दिव्यां राजप्रेष्यास्तदा द्विजम् ।

भगीरथरथाक्रान्तदे छ राजा त्वां द्रष्टुमिच्छति ॥ २३ ॥

थे चरन्ति महार्षीरो विरूपाक्ष इति श्रुतः ।

वर्हि चापि ए ते वै द्रष्टुं तत्क्षिप्रं सन्निधीयताम् ॥ २४ ॥

स गौतमाय प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः ।

भुक्त ः परमर्द्धिं तां पश्यन्परमविस्मितः ॥ २५ ॥

क्ष रेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् ।

र्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ॥ २६ ॥

इति तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥

म उवाच ॥

ततः स विदितो राज्ञ प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ १ ॥

पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम् ।
न तत्र व्याजहारान्यद्गोत्रमात्रादृते द्विजः ॥ २ ॥

ब्रह्मवर्चसहीनस्य स्वाध्यायोपरतस्य च ।
गोत्रमात्रविदो राजा निवास समपृच्छत ॥ ३ ॥

राक्षस उवाच ॥

क ते निवास कल्याण, किंगोत्रा ब्राह्मणी च ते ।
तत्त्व ब्रूहि न भी कार्या विश्वसस्व यथासुखम् ॥ ४ ॥

गौतम उवाच ॥

मध्यदेशप्रसूतोऽह वासो मे शवरालये ।
शूद्रा पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ ५ ॥

भीष्म उवाच ॥

ततो राजा विममृशे कथ कार्यमिद भवेत् ।
कथ वा सुकृत मे स्यादिति बुद्धयान्वचिन्तयत् ॥ ६ ॥

अय वै जन्मना विप्र सुहृत्तस्य महात्मन ।
सप्रेषितश्च तेनाय काश्यपेन ममान्तिकम् ॥ ७ ॥

तस्य प्रिय करिष्यामि स हि मामाश्रित सदा ।
भ्राता मे बान्धवश्चासौ सखा च हृदयङ्गम ॥ ८ ॥

कार्तिक्यामद्य भोक्तार सहस्र मे द्विजोत्तमा ।
तत्रायमपि भोक्ता च देयमस्मै च मे धनम् ॥ ९ ॥

स चाद्य दिवस पुण्यो ह्यतिथिश्चायमागत ।
सकल्पित चैव धन किं विचार्यमत परम ॥ १० ॥

तत सहस्र विप्राणा विदुषा समलङ्कृतम् ।
स्नातानामनुसप्राप्त सुमहत्क्षौमवाससाम् ॥ ११ ॥

तानागतान्द्विजश्रेष्ठान्विरूपाक्षो विशांपते ।
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १२ ॥

बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात् ।
भूमौ वरकुशास्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ १३ ॥

तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः ।
तिलदर्भोदकेनाथ अर्चिता विधिवद्द्विजाः ॥ १४ ॥

विश्वे देवाः सपितरः साग्नयश्चोपकल्पिताः ।
विलिप्ताः पुष्पवन्तश्च सुप्रचाराः सुपूजिताः ॥ १५ ॥

व्यराजन्त महाराज, नक्षत्रपतयो यथा ।
ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः ॥ १६ ॥

वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृतप्लुताः ।
तस्य नित्यं सदाषाढ्यां माघ्यां च बहवो द्विजाः ॥ १७ ॥

ईप्सितं भोजनवरं लभन्ते सत्कृतं सदा ।
विशेषतस्तु कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति ॥ १८ ॥

शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः ।
सुवर्णं रजतं चैव मणीनथ च मौक्तिकान् ॥ १९ ॥

वज्रान्महाधनांश्चैव वैडूर्याजिनराङ्कवान् ।
रत्नराशीन्विनिक्षिप्य दक्षिणार्थं स भारत ॥ २० ॥

ततः प्राह द्विजश्रेष्ठान्विरूपाक्षो महाबलः ।
गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः ॥ २१ ॥

येषु येषु च भाण्डेषु भुक्तं वो द्विजसत्तमाः ।
तान्येवादाय गच्छध्व स्ववेश्मानीति भारत ॥ २२ ॥

इत्युक्तवचने तस्मिन्राक्षसेन्द्रे महात्मनि ।
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः ॥ २३ ॥

ततो महार्हास्ते सर्वे रत्नैरभ्यर्चिता. शुभैः ।
ब्राह्मणा मृष्टवसनाः सुप्रीता. स्म ततोऽभवन् ॥ २४ ॥

ततस्तान्राक्षसेन्द्रश्च द्विजानाह पुनर्वचः ।
नानादेशगतान्राजन्, राक्षसान्प्रतिषिध्य वै ॥ २५ ॥

अद्यैकं दिवस विप्रा न वोऽस्तीह भयं कचित् ।
राक्षसेभ्यः प्रमोदध्वमिष्टतो यात मा चिरम् ॥ २६ ॥

ततः प्रदुद्रुवु. सर्वे विप्रसङ्घाः समन्ततः ।
गौतमोऽपि सुवर्णस्य भारमादाय सत्वर. ॥ २७ ॥

कृच्छ्रात्समुद्वहन्भारं न्यग्रोधं समुपागमत् ।
न्यषीदच परिश्रान्तः क्लान्तश्च क्षुधितश्च सः ॥ २८ ॥

ततस्तमभ्यगाद्राजन्, राजधर्मा खगोत्तमः ।
स्वागतेनाभिनन्दंश्च गौतमं मित्रवत्सलः ॥ २९ ॥

तस्य पक्षाग्रविक्षेपै क्लमं व्यपनयत्खगः ।
पूजां चाप्यकरोद्धीमान्भोजनं चाप्यकल्पयत ॥ ३० ॥

स भुक्तवान्सुविश्रान्तो गौतमोऽचिन्तयत्तदा ।
हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया ॥ ३१ ॥

गृहीतो लोभमोहाभ्या दूर च गमन मम ।
न चास्ति पथि भोक्तव्य प्राणसधारण मम ॥ ३२ ॥

कि कृत्वा धारयेय वै प्राणानित्यभ्यचिन्तयत ।
तत स पथि भोक्तव्य प्रेक्षमाणो न किचन ॥ ३३ ॥

कृतघ्न पुरुषव्याघ्र, मनसेदमचिन्तयत ।
अय बकपति पार्श्वे मामराशि स्थितो महान ।
इम हत्वा गृहीत्वा च यास्येऽह समभिद्रुतम् ॥ ३४ ॥

इति चतुर्थोऽध्याय ॥

## पञ्चमोऽध्यायः ॥

भीष्म उवाच ॥

अथ तत्र महार्चिष्माननलो वातसारथि ।
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत ॥ १ ॥

स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा ।
कृतघ्नस्तु स दुष्टात्मा त जिघासुरथाभवत ॥ २ ॥

ततोऽलातेन दीप्तेन विश्वस्त निजघान तम् ।
निहत्य च मुदा युक्त सोऽनुबन्ध न दृष्टवान ॥ ३ ॥

स त विपक्षरोमाण कृत्वाग्नावपचत्तदा ।
त गृहीत्वा सुवर्ण च ययौ द्रुततर द्विज ॥ ४ ॥

ततोऽन्यस्मिन्गते चाह्नि विरूपाक्षोऽब्रवीत्सुतम् ।
न प्रेक्षे राजधर्माणमद्य पुत्र, खगोत्तमम् ॥ ५ ॥

स पूर्वसन्ध्यां ब्रह्माणं वन्दितु याति सर्वदा ।
मां चादृष्ट्वा कदाचित्स न गच्छति गृहं खगः ॥ ६ ॥

उभे द्विरात्रसन्ध्ये वै नाभ्यगात्स ममालयम् ।
तस्मान्न शुध्यते भावो मम स ज्ञायतां सुहृत् ॥ ७ ॥

स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः ।
त गतस्तत्र मे शङ्का हन्यात्त स द्विजाधमः ॥ ८ ॥

दुराचारस्तु दुर्बुद्धिरिङ्गितैर्लक्षितो मया ।
निष्कृपो दारुणाकारो दुष्टो दस्युरिवाधमः ॥ ९ ॥

गौतमः स गतस्तत्र तेनोद्विग्न मनो मम ।
पुत्र, शीघ्रमितो गत्वा राजधर्मनिवेशनम् ॥ १० ॥

ज्ञायतां स विशुद्धात्मा यदि जीवति मा चिरम् ।
स एवमुक्तस्त्वरितो रक्षोभि सहितो ययौ ॥ ११ ॥

न्यग्रोध तत्र चापश्यत्कङ्कालं राजधर्मण. ।
स रुदन्नागमत्पुत्रो राक्षसेन्द्रस्य धीमत. ॥ १२ ॥

त्वरमाणः पर शक्त्या गौतमग्रहणाय वै ।
ततो विदूरे जगृहुर्गौतमं राक्षसास्तदा ॥ १३ ॥

राजधर्मशरीरं च पक्षास्थिचरणोज्झितम् ।
तमादायाथ रक्षांसि द्रुत मेरुव्रजं ययुः ॥ १४ ॥

राज्ञश्च दर्शयामासुः शरीरं राजधर्मणः ।
कृतघ्नं पुरुषं तं च गौतमं पापकारिणम् ॥ १५ ॥

रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः ।
आर्तनादश्च सुमहानभूत्तस्य निवेशने ॥ १६ ॥

सस्त्रीकुमारं च सपुरं बभूवास्वस्थमानसम् ।
अथाब्रवीन्नृपः पुत्रं पापोऽयं वध्यतामिति ॥ १७ ॥

अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः ।
पापाचारः पापकर्मा पापात्मा पापसाधनः ॥ १८ ॥

हन्तव्योऽयं मम मतिर्भवद्भिरिति राक्षसाः ।
इत्युक्ता राक्षसेन्द्रेण राक्षसा घोरविक्रमाः ॥ १९ ॥

नैच्छन्त तं भक्षयितुं पापकर्माणमित्युत ।
दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः ॥ २० ॥

इत्यूचुस्ते महाराज, राक्षसेन्द्रं निशाचराः ।
शिरोभिः प्रणताः सर्वे व्याहरन्राक्षसाधिपम् ॥ २१ ॥

न दातुमर्हसि त्वं नो भक्षणायास्य किल्बिषम् ।
एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान् ॥ २२ ॥

दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः ।
इत्युक्ता राक्षसास्तेन शूलपट्टिशपाणयः ॥ २३ ॥

कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा ।
दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम् ॥ २४ ॥

क्रव्यादा अपि राजेन्द्र, कृतघ्नं नोपभुञ्जते ।
ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ॥ २५ ॥

निष्कृतिर्विहिता राजन्, कृतघ्ने नास्ति निष्कृतिः ।
मित्रद्रोही नृशंसश्च कृतघ्नश्च नराधमः ।
क्रव्यादैः कृमिभिश्चैव न भुज्यन्ते हि तादृशाः ॥ २६ ॥

इति पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः ॥

---

भीष्म उवाच ॥

ततश्चितां बकपतेः कारयामास राक्षसः ।
रत्नैर्गन्धैश्च बहुभिर्वस्त्रैश्च समलंकृताम् ॥ १ ॥

ततः प्रज्वाल्य नृपतिर्बकराजं प्रतापवान् ।
प्रेतकार्याणि विधिवद्राक्षसेन्द्रश्चकार ह ॥ २ ॥

तस्मिन्काले च सुरभिर्देवी दाक्षायणी शुभा ।
उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी ॥ ३ ॥

तस्या वक्त्राच्च्युतः फेनः क्षीरमिश्रस्तदानघ ।
सोऽपतद्वै ततस्तस्यां चितायां राजधर्मण. ॥ ४ ॥

तत सजीवितस्तेन बकराजस्तदानघ ।
उत्पत्य च समीक्ष्याथ विरूपाक्ष बकाधिप ॥ ५ ॥

ततोऽभ्ययाद्देवराजो विरूपाक्षपुर तदा ।
प्राह चेद विरूपाक्ष दिष्ट्या सजीवितस्त्वया ॥ ६ ॥

श्रावयामास चेन्द्रस्त विरूपाक्ष पुरातनम ।
यथा शाप पुरा दत्तो ब्रह्मणा राजधर्मण ॥ ७ ॥

यदा बकपती राजन्, ब्रह्माण नोपसर्पति ।
ततो रोपादिद प्राह खगेन्द्राय पितामह ॥ ८ ॥

यस्मान्मूढो मम सभा नागतोऽसौ बकाधम ।
तस्माद्वध स दुष्टात्मा न चिरात्समवाप्स्यसि ॥ ९ ॥

तदय तस्य वचनान्निहतो गौतमेन वै ।
तेनैवामृतसिक्तश्च पुन सजीवितो बक ॥ १० ॥

राजधर्मा बक प्राह प्रणिपत्य पुरन्दरम् ।
यदि तेऽनुमहकृता मयि बुद्धि सुरेश्वर ॥ ११ ॥

सखाय मे सुदयित गौतम जीवयेत्युत ।
तस्य वाक्य समादाय वासव पुरुपर्पभ ॥ १२ ॥

सिक्त्वामृतेन त विप्र गौतम जीवयत्तदा ।
सभाण्डोपस्कर राजस्तमासाद्य बकाधिप ॥ १३ ॥

सपरिष्वज्य सुहृद प्रीत्या परमया युत ।
अथ त पापकर्माण राजधर्मा बकाधिप ॥ १४ ॥

विसर्जयित्वा सधनं प्रविवेश स्वमालयम् ।
यथोचितं च स वको ययौ ब्रह्मसदस्तथा ॥ १५ ॥

ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत् ।
गौतमश्चापि संप्राप्य पुनस्तं शवरालयम् ॥ १६ ॥

निरयं प्राप्स्यति महत्कृतघ्नोऽयमिति प्रभो ।
एतत्प्राह पुरा सर्वं नारदो मम भारत ॥ १७ ॥

संस्मृत्य चापि सुमहदाख्यानं भरतर्षभ ।
मयापि भवते सर्वं यथावदनुवर्णितम् ॥ १८ ॥

कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १९ ॥

मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।
मित्रध्रुङ्नरकं घोरमनन्तं प्रतिपद्यते ॥ २० ॥

कृतज्ञेन सदा भाव्यं मित्रकामेन चैव ह ।
मित्राच्च लभते सर्वं मित्रात्पूजां लभेत च ॥ २१ ॥

मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते ।
सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः ॥ २२ ॥

परित्याज्यो बुधैः पापः कृतघ्नो निरपत्रपः ।
मित्रद्रोही कुलाङ्गार. पापकर्मा नराधमः ॥ २३ ॥

एष धर्मभृतां श्रेष्ठ, प्रोक्तः पापो मया तव ।
मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि ॥ २४ ॥

वैशम्पायन उवाच ॥

एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ २५ ॥

इति षष्ठोऽध्यायः ॥

इति श्रीमहाभारते शान्तिपर्वणि आपद्धर्मपर्वणि कृतघ्नोपाख्याने
१६८—१७३ अध्यायाः ॥

# ॥ जडभरतोपाख्यानम् ॥

---

श्रीशुक उवाच ॥

भरतस्तु महाभागवतो यदा भगवतावनितलपरिपालनाय संचिन्तितः, तदानुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे । तस्यामुह वा आत्मजान्कार्त्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति । अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति । स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् । ईजे च भगवन्तं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना । संप्रचरत्सु नानायागेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान्पुरुषावयवेष्वभ्यध्यायत । एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाजायत । एवं वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृ-

पैतामहं यथादायं विभज्य स्वयं सकलसंपन्निकेतात्स्वनिकेतात्पुलहाश्रमं प्रवव्राज । यत्र ह वाव भगवान्हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन संनिधाप्यत इच्छारूपेण । यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति, तस्मिन्वाव स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप । तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार । इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदुहोवाच ।

'परोरजः सवितुर्जातवेदो
देवस्य भर्गो मनसेदं जजान ।
सुरेतसादः पुनराविश्य चष्टे
हंसं गृध्राणं नृषद्रिङ्गिरामिमः ॥'

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥

श्रीशुक उवाच ॥

एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त उपविवेश। तत्र तदा राजन्, हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम। तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयंकर उदपतत्। तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगमिततृषा भयात्सहसैवोच्चक्राम। तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिनिर्गतो गर्भः स्रोतसि निपपात। तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार। तं त्वेणकुणकं कृपणं स्रोतसानूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत्। तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनप्रीणनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन्। 'अहो बताय हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन्यौथिकांश्चैवोपेयाय। नान्यं कंचन वेद। मय्यतिविस्रब्धश्च। अत एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनानुष्ठेयं शरण्योपेक्षादोषविदुषा। नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुत-

रानुपेक्षन्ते' इति कृतानुषङ्ग आसनशयनाटनस्थानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् । कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशसमानो यदा सह हरिणकुणकेन वन समाविशति । पथिषु च मुग्धभावेन तत्र विपक्तमतिप्रणयभरहृदय कार्पण्यात्स्कन्धेनोद्वहति । एवमुत्सङ्ग उरसि चाधायोपलालयन्मुद परमामवाप । क्रियाया निर्वर्त्यमानायामन्तरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत, तर्हि वा व स वर्षपति प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते, स्वस्ति स्याद्वत्स, ते सर्वत इति । अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपण सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसतापस्तमेवानुशोचन्किल कश्मल महदभिरम्भित इति होवाच । 'अपि बत स वै कृपण एव बालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृतसुकृतस्य कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन्सुजन इवागमिष्यति । अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्त देवगुप्त द्रक्ष्यामि । अपि च न वृक सालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षयति । निम्लोचति ह भगवान सकलजगत्क्षेमोदयस्त्र्यात्मा । अद्यापि मम न मृगवधून्यास आगच्छति । अपि स्विदकृतसुकृतमागत्य मा सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसन्तोष स्वानामपनुदन् । क्ष्वेलिकाया मा मृषासमाधिना मीलितदृश प्रेमसरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति । आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीत सपद्युपरतरास ऋषिकुमारवदवहितकरणकलाप आस्ते । किं वार आचरित तपस्तपस्विन्यानया,

नैषा परावरमतिर्भवतो ननु स्या
ज्जन्तोर्यथात्मसुहृदो जगतस्तथापि ।
संसेवया सुरतरोरिव ते प्रसाद
सेवानुरूपमुदयो न परावरत्वम् ॥ २७ ॥

एवं जनं निपतितं प्रभवाहि कूपे
कामाभिकाममनु यः प्रपतन्प्रसङ्गात् ।
कृत्वात्मसात्सुरर्षिणा भगवन्, गृहीतः
सोऽहं कथं नु विसृजेत्तव भृत्यसेवाम् ॥ २८ ॥

मत्प्राणरक्षणमनन्त, पितुर्वधश्च
मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ।
खङ्गं प्रगृह्य यदवोचदसद्विधित्सु
स्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥

एकस्त्वमेव जगदेतदमुष्य यत्त्व-
माद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥

त्वं वा इदं सदसदीश, भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद्यस्य जन्म निधनं स्थितिरीक्षणं च
तद्वै तदेव वसुकालवदष्टितर्वोः ॥ ३१ ॥

न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये
शेषे त्मना निजसुखानुभवो निरीहः ।

योगेन मीलितदृगात्मनिपीतनिद्र-
स्तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥ ३२ ॥

तस्यैव ते वपुरिदं निजकालशक्त्या
संचोदितप्रकृतिधर्मिण आत्मगूढम् ।
अम्भस्यनन्तशयनाद्विरमत्समाधे-
र्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ॥ ३३ ॥

तत्संभवः कविरतोऽन्यदपश्यमान-
स्त्वां बीजमात्मनि ततं स्वबहिर्विचिन्त्य ।
नाविन्ददब्दशतमप्सु निमज्जमानो
जातेऽङ्कुरे कथमुहोपलभेत बीजम् ॥ ३४ ॥

स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं
कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश, भुवि गन्धमिवातिसूक्ष्मं
भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥

एवं सहस्रवदनाङ्घ्रिशिरःकरोरु-
नासास्यकर्णनयनाभरणायुधाढ्यम् ।
मायामयं सदुपलक्षितसंनिवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥

तस्मै भवान्हयशिरस्तनुवं च बिभ्र-
द्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वानयच्छ्रुतिगणांस्तु रजस्तमश्च
सत्त्व तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥

इत्थं नृतिर्यगृषिदेवझषावतारै-
लोकान्विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष, पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ सत्वम् ॥ ३८ ॥

नैतन्मनस्तव कथासु विकुण्ठनाथ,
संप्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयैषणार्तं
तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥

जिह्वैकतोऽच्युत, विकर्षति माऽवितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति-
र्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥

एवं जनं निपतितं भववैतरण्या-
मन्योन्यजन्ममरणाशनभीतभीतम् ।
पश्यञ्जनं स्वपरविग्रहवैरमैत्रं
हन्तेति पारचर, पीपृहि मूढमद्य ॥ ४१ ॥

कोऽन्वत्र तेऽखिलगुरो, भगवन्, प्रयास
उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो,
किं तेन ते प्रियजना ननु सेवतां नः ॥ ४२ ॥

नैवोद्विजे परदुरत्ययवैतरण्या-
स्त्वद्वीर्यगायनमहामृतमग्नचित्तः ।

शोचे ततो विमुखचेतस इन्द्रियार्थ-
मायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥

प्रायेण देवमुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने न परार्थनिष्ठाः ।
नैतान्विहाय कृपणान्विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥

मौनव्रतश्रुततपोऽध्ययनस्वधर्म-
व्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष, ते त्वजितेन्द्रियाणां
वार्ता भवन्त्युत नवात्र तु दाम्भिकानाम् ॥ ४५ ॥

रूपे इमे सदसती तव देव सृष्टे-
र्बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४६ ॥

त्वं वायुरग्निरवनिर्वियदम्बुमात्राः
प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्,
नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४७ ॥

नैते गुणा न गुणिनो महदादयो ये
सर्वे मनःप्रभृतयः सहदेवमर्त्याः ।
आद्यन्तवन्त उरुगाय, विदन्ति हि त्वा-
मेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४८ ॥

इत्थं नृतिर्यगृषिदेवझषावतारै-
लोकान्विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष, पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ सत्वम् ॥ ३८ ॥

नैतन्मनस्तव कथासु विकुण्ठनाथ,
संप्रीयते दुरितदुष्टमसाधु तीव्रम् ।
कामातुरं हर्षशोकभयैषणार्तं
तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥

जिह्वैकतोऽच्युत, विकर्षति माऽवितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क च कर्मशक्ति-
र्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ।

एवं जनं निपतितं भववैतरण्या-
मन्योन्यजन्ममरणाशनभीतभीतम् ।
पश्यञ्जनं स्वपरविग्रहवैरमैत्रं
हन्तेति पारचर, पीपृहि मूढमद्य ॥ ४१ ॥

कोऽन्वत्र तेऽखिलगुरो, भगवन्, प्रयास
उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो,
किं तेन ते प्रियजना ननु सेवतां नः ॥ ४२ ॥

नैवोद्विजे परदुरत्ययवैतरण्या-
स्त्वद्वीर्यगायनमहामृतमग्नचित्तः ।

## सप्तमोऽध्यायः ॥

नारद उवाच ॥

भक्तियोगस्य तत्सर्वमन्तरायतयार्भक ।
मन्यमानो हृषीकेश स्मयमान उवाच ह ॥ १ ॥

प्रह्लाद उवाच ॥

मा मा प्रलोभयोत्पत्त्यासक्त कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रित ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्त कामेष्वचोदयन् ।
भवान्ससारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरो, घटेत करुणात्मन ।
यस्त आशिष आशास्ते न स भृत्य स वै वणिक् ॥ ४ ॥

आशासानो न वै भृत्य स्वामिन्याशिष आत्मन ।
न स्वामी भृत्यत स्वाम्यमिच्छन्यो राति चाशिष ॥ ५ ॥

अह त्वकामस्त्वद्भक्तस्त्व च स्वाम्यनपाश्रय ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥

यदि रासीश, मे कामान्वरास्त्व वरदर्षभ ।
कामाना हृद्यसरोह भवतस्तु वृणे वरम ॥ ७ ॥

इन्द्रियाणि मन प्राण आत्मा धर्मो धृतिर्मति ।
ह्री श्रीस्तेज स्मृति सत्य यस्य नश्यन्ति जन्मना ॥ ८ ॥

तत्तेर्हत्तम, नमः स्तुतिकर्मपूजाः
कर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥ ४९ ॥

नारद उवाच ॥

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ।
प्रह्रादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५० ॥

श्रीभगवानुवाच ॥

प्रह्राद, भद्र, भद्रं ते प्रीतोऽहं ते सुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५१ ॥

मामप्रीणत आयुष्मन्, दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५२ ॥

प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ।
श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५३ ॥

एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५४ ॥

इति षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ॥

---

नारद उवाच ॥

भक्तियोगस्य तत्सर्वमन्तरायतयार्भकः ।
मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥

प्रह्लाद उवाच ॥

मा मां प्रलोभयोत्पत्त्यासक्तं कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ।
भवान्संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरो, घटेत करुणात्मनः ।
यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ।
न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिषः ॥ ५ ॥

अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥

यदि रासीश, मे कामान्वरांस्त्वं वरदर्षभ ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ७ ॥

इन्द्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः [illegible]

तत्तेर्हत्तम, नमः स्तुतिकर्मपूजाः
कर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥ ४९ ॥

नारद उवाच ॥

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ।
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५० ॥

श्रीभगवानुवाच ॥

प्रह्लाद, भद्र, भद्रं ते प्रीतोऽहं ते सुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम ॥ ५१ ॥

मामप्रीणत आयुष्मन्, दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५२ ॥

प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः ।
श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५३ ॥

एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५४ ॥

इति षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः ॥

---

नारद उवाच ॥

भक्तियोगस्य तत्सर्वमन्तरायतयार्भक ।
मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥

प्रह्लाद उवाच ॥

मा मां प्रलोभयोत्पत्त्यासक्तं कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रित. ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ।
भवान्ससारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरो, घटेत करुणात्मनः ।
यस्त आशिष आशास्ते न स भृत्य स वै वणिक् ॥ ४ ॥

आशासानो न वै भृत्य. स्वामिन्याशिष आत्मन. ।
न स्वामी भृत्यतः स्वाम्यमिच्छन्यो राति चाशिष ॥ ५ ॥

अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥

यदि रासीश, मे कामान्वरांस्त्वं वरदर्षभ ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम ॥ ७ ॥

इन्द्रियाणि मन प्राण आत्मा धर्मो धृतिर्मति. ।
ह्रीः श्रीस्तेज स्मृति सत्य यस्य नश्यन्ति जन्मना ॥ ८ ॥

विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ।
तर्ह्येव पुण्डरीकाक्ष, भगवत्त्वाय कल्पते ॥ ९ ॥
नमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥

नृसिंह उवाच ॥

नैकान्तिनो मे मयि जात्विहाशिप
आशासतेऽमुत्र च ये भवद्विधाः ।
अथातिमन्वन्तरमेतदत्र
दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥
कथा मदीया जुषमाणः प्रियास्त्व-
मावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं
यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥
भोगेन पुण्यं कुशलेन पापं
कलेवरं कालजवेन हित्वा ।
कीर्तिं विशुद्धां सुरलोकगीतां
विताय मामेष्यसि मुक्तबन्धः ॥ १३ ॥
य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ।
त्वां च मां च स्मरन्लोके कर्मबन्धात्प्रमुच्यते ॥ १४ ॥

प्रह्लाद उवाच ॥

वरं वरय एतत्ते वरदेशान्महेश्वर ।
यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥

विद्वामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम् ।
भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १६ ॥

तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् ।
पूतस्तेऽपाङ्गसंदृष्टस्तदा कृपणवत्सल ॥ १७ ॥

श्रीभगवानुवाच ॥

त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।
यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥

यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ।
साधवः समुदाचारास्ते पूयन्त्यपि कीकटाः ॥ १९ ॥

सर्वात्मना न हिंसन्ति भूतग्रामेषु किंचन ।
उच्चावचेषु दैत्येन्द्र, मद्भावेन गतस्पृहाः ॥ २० ॥

भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ।
भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृत् ॥ २१ ॥

कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ।
मदङ्गस्पर्शनेनाङ्ग, लोकान्यास्यति सुप्रजाः ॥ २२ ॥

पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ।
मय्यावेश्य मनस्तात, कुरु कर्माणि मत्परः ॥ २३ ॥

श्रीशुक उवाच ॥

प्रह्लादोऽपि तथा चक्रे पितुर्यत्साम्परायिकम् ।
यथाह भगवान्राजन्, अभिषिक्तो द्विजोत्तमैः ॥ २४ ॥

विमुञ्चति यदा कामान्मानवो मनसि स्थितान् ।
तर्ह्येव पुण्डरीकाक्ष, भगवत्त्वाय कल्पते ॥ ९ ॥

नमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥

नृसिंह उवाच ॥

नैकान्तिनो मे मयि जात्विहाशिप
आशासतेऽमुत्र च ये भवद्विधाः ।
अथातिमन्वन्तरमेतदत्र
दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ ११ ॥

कथा मदीया जुषमाणः प्रियास्त्व-
मावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं
यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥

भोगेन पुण्यं कुशलेन पापं
कलेवरं कालजवेन हित्वा ।
कीर्तिं विशुद्धां सुरलोकगीतां
विताय मामेष्यसि मुक्तबन्धः ॥ १३ ॥

य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ।
त्वां च मां च स्मरल्लोके कर्मबन्धात्प्रमुच्यते ॥ १४ ॥

प्रह्लाद उवाच ॥

वरं वरय एतत्ते वरदेशान्महेश्वर ।
यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥ १५ ॥

प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ।
स्वधामानि ययू राजन्, ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥

एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ।
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥

पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ।
कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥

शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ।
तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥

ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३८ ॥

एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ।
जहुस्त्वन्ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥

यथा यथा भगवतो भक्त्या परमया भिदा ।
नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥ ४० ॥

आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान ।
दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥

एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥

प्रह्लादस्यानुचरित महाभागवतस्य च ।
भक्तिर्ज्ञान विरक्तिश्च याथात्म्य चास्य वै हरेः ॥ ४३ ॥

प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ।
स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥

ब्रह्मोवाच ॥

देवदेवाखिलाध्यक्ष, भूतभावन, पूर्वज ।
दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः ॥ २६ ॥

योऽसौ लब्धवरो मत्तोऽनवध्यो मम सृष्टिभिः ।
तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २७ ॥

दिष्ट्यास्य तनयः साधुर्महाभागवतोऽर्भकः ।
त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८ ॥

एतद्वपुस्ते भगवन्, ध्यायतः प्रयतात्मनः ।
सर्वतो गोप्तृसन्त्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥

नृसिंह उवाच ॥

मैवं वरोऽसुराणां ते प्रदेयः पद्मसंभव ।
वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३० ॥

नारद उवाच ॥

इत्युक्त्वा भगवान्राजंस्तत्रैवान्तर्दधे हरिः ।
अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥

ततः संपूज्य शिरसा ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन्देवान्प्रह्लादो भगवत्कलाः ॥ ३२ ॥

ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ।
दैत्यानां दानवानां च प्रह्लादमकरोत्पतिम् ॥ ३३ ॥

प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ।
स्वधामानि ययू राजन्, ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥

एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ।
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥

पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ।
कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥

शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ।
तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥

ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ।
हरौ वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३८ ॥

एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ।
जहुस्त्वन्ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥

यथा यथा भगवतो भक्त्या परमया भिदा ।
नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिन्तया ययुः ॥ ४० ॥

आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान ।
दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥ ४१ ॥

एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥

प्रह्लादस्यानुचरितं महाभागवतस्य च ।
भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४३

सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ।
परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४ ॥

धर्मो भागवतानां च भगवान्येन गम्यते ।
आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥

य एतत्पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ।
कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥ ४६ ॥

इति सप्तमोऽध्यायः ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे प्रह्लादचरित्रे
४—१० अध्यायाः ॥



# ॥ ध्रुवचरित्रम् ॥



अथात. कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह ।
स्वायंभुवस्यापि मनोर्हरेरशांशजन्मनः ॥ १ ॥

प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ ।
वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ २ ॥

जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ।
सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ३ ॥

एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन् ।
उत्तम नारुरुक्षन्तं ध्रुवं राजाभ्यनन्दत ॥ ४ ॥

तथा चिकीर्षमाण त सपत्न्यास्तनयं ध्रुवम ।
सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता ॥ ५ ॥

न वत्स, नृपतेर्धिष्ण्यं भवानारोढुमर्हति ।
न गृहीतो मया यत्त्व कुक्षावपि नृपात्मजः ॥ ६ ॥

बालोऽसि वत्स नात्मानमन्यस्त्रीगर्भसंभृतम् ।
नून वेद भवान्यस्य दुर्लभेऽर्थे मनोरथः ॥ ७ ॥

तपसाराध्य पुरुष तस्यैवानुग्रहेण मे ।
गर्भे त्व साधयात्मान यदीच्छसि नृपासनम् ॥ ८ ॥

मैत्रेय उवाच ॥

मातु सपत्न्या सुदुरुक्तिविद्ध
श्वसन्रुषा दण्डहतो यथाहि ।
हित्वा मिषन्त पितर सन्नवाच
जगाम मातु प्ररुदन्सकाशम् ॥ ९ ॥

त निश्वसन्त स्फुरिताधरोष्ठ
सुनीतिरुत्सङ्ग उदूह्य बालम ।
निशम्य तत्पौरमुखान्नितान्त
सा विव्यथे यद्गदित सपत्न्या ॥ १० ॥

सोत्सृज्य धैर्यं विललाप शोक-
दावाग्निना दावलतेव बाला ।
वाक्य सपत्न्या स्मरती सरोज-
श्रिया दृशा बाष्पकलामुवाह ॥ ११ ॥

दीर्घ श्वसन्ती वृजिनस्य पार-
मपश्यती बालकमाह बाला ।
मा मङ्गल तात, परेष्वमस्था
भुङ्क्ते जनो यत्परदु खदस्तत् ॥ १२ ॥

सत्य सुरुच्याभिहित भवान्मे
यद्दुर्भगाया उदरे गृहीत. ।
स्तन्येन वृद्धश्च विलज्जते या
भार्येति वा वोढुमिडस्पतिर्माम ॥ १३ ॥

आतिष्ठ तत्तात, विमत्सरस्त्व-
मुक्त समात्रापि यदव्यलीकम् ।
आराधयाधोक्षजपादपद्म
यदीच्छसेऽध्यासनमुत्तमो यथा ॥ १४ ॥

यस्याङ्घ्रिपद्म परिचर्य विश्व-
विभावनायात्तगुणाभिपत्ते ।
अजोऽध्यतिष्ठत्खलु पारमेष्ठ्य
पद जितात्मश्वसनाभिवन्द्यम् ॥ १५ ॥

तथा मनुर्वो भगवान्पितामहो
यमेकमत्या पुरुदक्षिणैर्मखै ।
इष्ट्वाभिपेदे दुरवापमन्यतो
भौम सुख दिव्यमथापवर्ग्यम् ॥ १६ ॥

तमेव वत्साश्रय भृत्यवत्सल
मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्मभाविते
मनस्यवस्थाप्य भजस्व पूरुषम् ॥ १७ ॥

नान्य तत पद्मपलाशलोचना-
दु खच्छिद ते मृगयामि कचन ।
यो मृग्यते हस्तगृहीतपद्मया
श्रियेतरैरङ्ग विमृग्यमाणया ॥ १८ ॥

मैत्रेय उवाच ॥

एव सजल्पित मातुराकर्ण्यार्थागम वच ।
सनियम्यात्मनात्मान निश्चक्राम पितु पुरात् ॥ १९ ॥

नारदस्तदुपाकर्ण्य ज्ञात्वा तस्य चिकीर्षितम् ।
स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मित ॥ २० ॥

अहो तेज क्षत्रियाणा मानभङ्गममृष्यताम् ।
बालोऽप्यय हृदा धत्ते यत्समातुरसद्वच ॥ २१ ॥

नारद उवाच ॥

नाधुनाप्यवमान ते सम्मान वापि पुत्रक ।
लक्षयाम कुमारस्य सक्तस्य क्रीडनादिषु ॥ २२ ॥

विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतव ।
पुसो मोहमृते भिन्ना यल्लोके निजकर्मभि ॥ २३ ॥

परितुष्येत्ततस्तात, तावन्मात्रेण पूरुष ।
दैवोपसादित यावद्वीक्ष्येश्वरगतिं बुध ॥ २४ ॥

अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि ।
यत्प्रसाद स वै पुसा दुराराध्यो मतो मम ॥ २५ ॥

मुनय पदवीं यस्य नि सङ्गेनोरुजन्मभि ।
न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ २६ ॥

अतो निवर्ततामेष निर्बन्धस्तव निष्फल ।
यतिष्यति भवान्काले श्रेयसा समुपस्थिते ॥ २७ ॥

यस्य यद्दैवविहित स तेन सुखदु खयो ।
आत्मान तोषयन्देही तमस पारमृच्छति ॥ २८ ॥

गुणाधिकान्मुद लिप्सेदनुक्रोश गुणाधमात् ।
मैत्री समानादन्विच्छेन्न तापैरभिभूयत ॥ २९ ॥

ध्रुव उवाच ॥

सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।
दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३० ॥

अथापि मेऽविनीतस्य क्षात्रं धर्ममुपेयुषः ।
सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि ॥ ३१ ॥

पदं त्रिभुवनोत्कृष्टं जिगीषोः साधु वर्त्म मे ।
ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ॥ ३२ ॥

नूनं भवान्भगवतो योऽङ्गजः परमेष्ठिनः ।
वितुदन्नटते वीणां हितार्थं जगतोऽर्कवत् ॥ ३३ ॥

मैत्रेय उवाच ॥

इत्युदाहृतमाकर्ण्य भगवान्नारदस्तदा ।
प्रीतः प्रत्याह तं बालं सद्वाक्यमनुकम्पया ॥ ३४ ॥

नारद उवाच ॥

जनन्याभिहितः पन्थाः स वै निश्रेयसस्य ते ।
भगवान्वासुदेवस्तं भज तत्प्रवणात्मना ॥ ३५ ॥

धर्मार्थकाममोक्षाणां य इच्छेच्छ्रेय आत्मनः ।
एकमेव हरेस्तत्र कारणं पादसेवनम् ॥ ३६ ॥

तत्तात, गच्छ भद्रं ते यमुनायास्तटं शुचि ।
पुण्यं मधुवनं यत्र सांनिध्यं नित्यदा हरेः ॥ ३७ ॥

स्नात्वानुसवनं तस्मिन्कालिन्द्याः सलिले शिवे ।
कृत्वोचितानि निवसन्नात्मनः कल्पितासनः ॥ ३८ ॥

प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम् ।
शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा गुरुम् ॥ ३९ ॥

प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम् ।
सुनासं सुभ्रुवं चारुकपोलं सुरसुन्दरम् ॥ ४० ॥

तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम् ।
प्रणताश्रयणं नृणां शरण्यं करुणार्णवम् ॥ ॥ ४१ ॥

श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम् ।
शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥ ४२ ॥

किरीटिनं कुण्डलिनं केयूरवलयान्वितम् ।
कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥ ४३ ॥

काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम् ।
दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ४४ ॥

पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम् ।
हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ४५ ॥

स्मयमानमभिध्यायेत्सानुरागावलोकनम् ।
नियतेनैकभूतेन मनसा वरदर्षभम् ॥ ४६ ॥

एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ।
निर्वृत्या परया तूर्णं सम्पन्नं न निवर्तते ॥ ४७ ॥

जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज ।
यं सप्तरात्रं प्रपठन्पुमान्पश्यति खेचरान् ॥ ४८ ॥

ओं नमो भगवते वासुदेवाय ॥

मन्त्रेणानेन देवस्य कुर्याद्द्रव्यमयीं बुध ।
सपर्यां विविधैर्द्रव्यैर्देशकालविभागवित् ॥ ४९ ॥

सलिलै शुचिभिर्माल्यैर्वन्यैर्मूलफलादिभि ।
शस्ताङ्कुरांशुकैश्चार्चेत्तुलस्या प्रियया प्रभुम् ॥ ५० ॥

लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु वार्चयेत् ।
आहृतात्मा मुनि शान्तो यतवाङ्मितवन्यभुक् ॥ ५१ ॥

स्वेच्छावतारचरितैरचिन्त्यनिजमायया ।
करिष्यत्युत्तमश्लोकस्तद्ध्यायेद्धृदयगमम् ॥ ५२ ॥

परिचर्या भगवतो यावत्य पूर्वसेविता ।
ता मन्त्रहृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ॥ ५३ ॥

एव कायेन मनसा वचसा च मनोगतम् ।
परिचर्यमाणो भगवान्भक्तिमत्परिचर्यया ॥ ५४ ॥

पुसाममायिन सम्यग्भजता भाववर्धन ।
श्रेयो दिशत्यभिमत यद्धर्मादिषु देहिनाम् ॥ ५५ ॥

विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा ।
त निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ५६ ॥

इत्युक्तस्त परिक्रम्य प्रणम्य च नृपार्भक ।
ययौ मधुवन पुण्य हरेश्चरणचर्चितम् ॥ ५७ ॥

तपोवन गते तस्मिन्प्रविष्टोऽन्त पुर मुनि ।
अर्हितार्हणको राजा सुखासीन उवाच तम् ॥ ५८ ॥

नारद उवाच ॥

राजन्, किं ध्यायसे दीर्घं मुखेन परिशुष्यता ।
किं वा न रिष्यते कामो धर्मो वार्थेन संयुतः ॥ ५९ ॥

राजोवाच ॥

सुतो मे बालको ब्रह्मन्, स्त्रैणेनाकरुणात्मना ।
निर्वासितः पञ्चवर्षः सह मात्रा महान्कविः ॥ ६० ॥

अप्यनाथं वने ब्रह्मन्, मा स्मादन्त्यर्भकं वृकाः ।
श्रान्तं शयानं क्षुधितं परिम्लानमुखाम्बुजम् ॥ ६१ ॥

अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय ।
योऽङ्कं प्रेम्णारुरुक्षन्तं नाभ्यनन्दमसत्तमः ॥ ६२ ॥

नारद उवाच ॥

मा मा शुचः स्वतनयं देवगुप्तं विशां पते ।
तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत् ॥ ६३ ॥

सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः ।
एष्यत्यचिरतो राजन, यशो विपुलयंस्तव ॥ ६४ ॥

मैत्रेय उवाच ॥

इति देवर्षिणा प्रोक्तं विश्रुत्य जगतीपतिः ।
राजलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ६५ ॥

तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम ।
समाहितः पर्यचरदृष्यादेशेन पूरुषम ॥ ६६ ॥

त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशन ।
आत्मवृत्त्यनुसारेण मास निन्येऽर्चयन्हरिम् ॥ ६७ ॥

द्वितीय च तथा मास षष्ठे षष्ठेऽर्भको दिने ।
तृणपर्णादिभिश्शीर्णै कृतान्नोऽभ्यर्चयद्विभुम् ॥ ६८ ॥

तृतीय चानयन्मास नवमे नवमेऽहनि ।
अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना ॥ ६९ ॥

चतुर्थमपि वै मास द्वादशे द्वादशेऽहनि ।
वायुभक्षो जितश्वासो ध्यायन्देवमधारयत् ॥ ७० ॥

पञ्चमे मास्यनुप्राप्ते ज्तिश्वासो नृपात्मज ।
ध्यायन्ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचल ॥ ७१ ॥

सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम् ।
ध्यायन्भगवतो रूप नाद्राक्षीत्किंचनापरम् ॥ ७२ ॥

आधार महदादीना प्रधानपुरुषेश्वरम ।
ब्रह्म धारयमाणस्य त्रयो लोकाश्चकम्पिरे ॥ ७३ ॥

यदैकपादेन स पार्थिवार्भक-
स्तस्थौ तदङ्गुष्ठनिपीडिता मही ।
ननाम तत्रार्धमिभेन्द्रधिष्ठिता
तरीव सव्येतरत पदे पदे ॥ ७४ ॥

तस्मिन्नभिध्यायति विश्वमात्मनो
द्वार निरुध्यासुमनन्यया धिया ।

लोका निरुच्छ्वासनिपीडिता भृशं
सलोकपालाः शरणं ययुर्हरिम् ॥ ७५ ॥

देवा ऊचुः ॥

नैवं विदामो भगवन्, प्राणरोधं
चराचरस्याखिलसत्वधाम्नः ।
विधेहि तन्नो वृजिनाद्विमोक्षं
प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ७६ ॥

श्रीभगवानुवाच ॥

मा भैष्ट बालं तपसो दुरत्यया-
न्निवर्तयिष्ये प्रतियात स्वधाम ।
यतो हि वः प्राणनिरोध आसी-
दौत्तानपादिर्मयि संगतात्मा ॥ ७७ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

मैत्रेय उवाच ॥

त एवमुच्छिन्नभया उरुक्रमे
कृतावनामाः प्रययुस्त्रिविष्टपम् ।
सहस्रशीर्षापि ततो गरुत्मता
मधोर्वनं भृत्यदिदृक्षया गत. ॥ १ ॥

स वै धिया योगविपाकतीव्रया
हृत्पद्मकोशे स्फुरितं तडित्प्रभम् ।
तिरोहितं सहसैवोपलक्ष्य
बहिःस्थितं तदवस्थं ददर्श ॥ २ ॥

तद्दर्शनेनागतसाध्वसः क्षिता-
ववन्दताङ्गं विनमय्य दण्डवत् ।
दृग्भ्यां प्रपश्यन्प्रपिबन्निवार्भक-
श्चुम्बन्निवास्येन भुजैरिवाश्लिषन् ॥ ३ ॥

स तं विवक्षन्तमतद्विदं हरि-
र्ज्ञात्वास्य सर्वस्य च हृद्यवस्थितः ।
कृताञ्जलिं ब्रह्ममयेन कम्बुना
पस्पर्श बालं कृपया कपोले ॥ ४ ॥

स वै तदैव प्रतिपादितां गिरं
दैवीं परिज्ञातपरात्मनिर्णयः ।
तं भक्तिभावोऽभ्यगृणादसत्वरं
परिश्रुतोरुश्रवसं ध्रुवक्षितिः ॥ ५ ॥

ध्रुव उवाच ॥

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादी-
न्प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥

एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषम् ।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि ॥ ७ ॥

त्वद्दत्तया वयुनयेदमचष्ट विश्वं
सुप्तप्रबुद्ध इव नाथ, भवत्प्रपन्नः ।
तस्यापवर्ग्यशरणं तव पादमूलं
विस्मर्यते कृतविदा कथमार्तबन्धो ॥ ८ ॥

नूनं विमुष्टमतयस्तव मायया ते
ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्य-
मिच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम् ॥ ९ ॥

या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ, मा भू-
त्कि त्वन्तकासिलुलितात्पततां विमानात् ॥ १० ॥

भक्ति मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त, महतामलाशयानाम् ।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धि
नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ११ ॥

ते न स्मरन्त्यतितरां प्रियमीश, मर्त्य
ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।

ये त्वब्जनाभ, भवदीयपदारविन्द-
सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥

तिर्यङ्नगद्विजसरीसृपदेवदैत्य-
मर्त्यादिभिः परिचितं सदसद्विशेषम् ।
रूपं स्थविष्ठमज, ते महदाद्यनेकं
नातः परं परम, वेद्मि न यत्र वादः ॥ १३ ॥

कल्पान्त एतदखिलं जठरेण गृह्ण-
ञ्छेते पुमान्स्वदृगनन्तसखस्तदङ्के ।
यन्नाभिसिन्धुरुहकाञ्चनलोकपद्म-
गर्भे द्युमान्भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १५ ॥

यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्य-
मानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥

सत्याशिषो हि भगवंस्तव पादपद्म-
माशीस्तथानुभजतः पुरुषार्थमूर्ते ।
अप्येवमार्य, भगवान्परिपाति दीना-
न्वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १७ ॥

मैत्रेय उवाच ॥

अथाभिष्टुत एव वै सत्सङ्कल्पेन धीमता ।
भृत्यानुरक्तो भगवान्प्रतिनन्द्येदमब्रवीत् ॥ १८ ॥

श्रीभगवानुवाच ॥

वेदाहं ते व्यवसितं हृदि राजन्यबालक ।
तत्प्रयच्छामि भद्रं ते दुरापमपि सुव्रत ॥ १९ ॥

नान्यैरधिष्ठितं भद्र, यद्भ्राजिष्णु ध्रुवक्षिति ।
यत्र ग्रहर्क्षताराणां ज्योतिषां चक्रमाहितम् ॥ २० ॥

मेध्यां गोचक्रवत्स्थास्नु परस्तात्कल्पवासिनाम् ।
धर्मोऽग्निः कश्यपः शुक्रो मुनयो ये वनौकसः ।
चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः ॥ २१ ॥

प्रस्थिते तु वनं पित्रा दत्वा गां धर्मसंश्रयः ।
षट्त्रिंशद्वर्षसाहस्रं रक्षिता व्याहृतेन्द्रियः ॥ २२ ॥

त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः ।
अन्वेषन्ती वनं याता दावाग्निं सा प्रवेक्ष्यति ॥ २३ ॥

इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः ।
भुक्त्वा चेहाशिषः सत्या अन्ते मां संस्मरिष्यसि ॥ २४ ॥

ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम् ।
उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते गतः ॥ २५ ॥

मैत्रेय उवाच ॥

इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् ।
बालस्य पश्यतो धाम स्वमगाद्गरुडध्वजः ॥ २६ ॥

सोऽपि संकल्पजं विष्णोः पादसेवोपसादितम् ।
प्राप्य संकल्पनिर्वाणं नातिप्रीतोऽभ्यगात्पुरम् ॥ २७ ॥

विदुर उवाच ॥

सुदुर्लभं यत्परमं पदं हरे-
र्मायाविनस्तच्चरणार्चनार्जितम् ।
लब्ध्वाप्यसिद्धार्थमिवैकजन्मना
कथं स्वमात्मानममन्यतार्थवित् ॥ २८ ॥

मैत्रेय उवाच ॥

मातुः सपत्न्या वाग्बाणैर्हृदि विद्धस्तु तान्स्मरन् ।
नैच्छन्मुक्तिपतेर्मुक्तिं तस्मात्तापमुपेयिवान् ॥ २९ ॥

ध्रुव उवाच ॥

समाधिना नैकभवेन यत्पदं
विदुः सनन्दादय ऊर्ध्वरेतसः ।
मासैरहं षड्भिरमुष्य पादयो-
श्छायामुपेत्यापगतः पृथङ्मतिः ॥ ३० ॥

अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत ।
भवच्छिदः पादमूलं गत्वा याचे यदन्तवत् ॥ ३१ ॥

मतिर्विदूषिता देवैः पतद्भिरसहिष्णुभिः ।
यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः ॥ ३२ ॥

दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् ।
तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्यहृद्रुजा ॥ ३३ ॥

मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।
प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ।
भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ॥ ३४ ॥

स्वाराज्यं यच्छतो मौढ्यान्मानो मे भिक्षितो बत ।
ईश्वरात्क्षीणपुण्येन फलीकारानिवाधनः ॥ ३५ ॥

मैत्रेय उवाच ॥

न वै मुकुन्दस्य पदारविन्दयो
रजोजुषस्तात, भवादृशा जनाः ।
वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो
यदृच्छया लब्धमनःसमृद्धयः ॥ ३६ ॥

आकर्ण्यात्मजमायान्तं सम्परेत्य यथागतम् ।
राजा न श्रद्दधे भद्रमभद्रस्य कुतो मम ॥ ३७ ॥

श्रद्धाय वाक्यं देवर्षेर्हर्षवेगेन धर्षितः ।
वार्ताहर्तुरतिप्रीतो हारं प्रादान्महाधनम् ॥ ३८ ॥

सदश्वं रथमारुह्य कार्तस्वरपरिष्कृतम् ।
ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः ॥ ३८ ॥

शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः ।
निश्चक्राम पुरात्तूर्णमात्मजाभीक्षणोत्सुकः ॥ ४० ॥

सुनीतिः सुरुचिश्चास्य महिष्यौ रुक्मभूषिते ।
आरुह्य शिबिकां सार्धमुत्तमेनाभिजग्मतुः ॥ ४१ ॥

त दृष्ट्वोपवनाभ्याश आयान्त तरसा रथात् ।
अवरुह्य नृपस्तूर्णमासाद्य प्रेमविह्वल ॥ ४२ ॥

परिरेभेऽङ्गज दोर्भ्यां दीर्घोत्कण्ठमना श्वसन् ।
विष्वक्सेनाङ्घ्रिसस्पर्शहताशेषाघबन्धनम् ॥ ४३ ॥

अथाजिघ्रन्मुहुर्मूर्ध्नि शीतैर्नयनवारिभि ।
स्नापयामास तनय जातोद्दाममनोरथ ॥ ४४ ॥

अभिवन्द्य पितु पादावाशीर्भिश्चाभिमन्त्रित ।
ननाम मातरौ शीर्ष्णा सत्कृत सज्जनाग्रणी ॥ ४५ ॥

सुरुचिस्त समुत्थाप्य पादावनतमर्भकम् ।
परिष्वज्याह जीवेति बाष्पगद्गदया गिरा ॥ ४६ ॥

यस्य प्रसन्नो भगवान्गुणैर्मैत्र्यादिभिर्हरि ।
तस्मै नमन्ति भूतानि निम्नमाप इव स्वयम् ॥ ४७ ॥

उत्तमश्च ध्रुवश्चोभावन्योन्य प्रेमविह्वलौ ।
अङ्गसङ्गादुत्पुलकावस्रौघ मुहुरूहतु ॥ ४८ ॥

सुनीतिरस्य जननी प्राणेभ्योऽपि प्रिय सुतम् ।
उपगुह्य जहावाधि तदङ्गस्पर्शनिर्वृता ॥ ४९ ॥

पय स्तनाभ्या सुस्राव नेत्रजै सलिलै शिवै ।
तदाभिषिच्यमानाभ्या वीर, वीरसुवो मुहु ॥ ५० ॥

ता शशसुर्जना राज्ञीं दिष्ट्या ते पुत्र आर्तिहा ।
प्रतिलब्धश्चिर नष्टो रक्षिता मण्डल भुव ॥ ५१ ॥

अभ्यर्चितस्त्वया नून भगवान्प्रणतार्तिहा ।
यदनुध्यायिनो वीरा मृत्यु जिग्यु सुदुर्जयम ॥ ५२ ॥

लाल्यमान जनैरेव ध्रुव सभ्रातर नृप ।
आरोप्य करिर्णी हृष्ट स्तूयमानोऽविशत्पुरम् ॥ ५३ ॥

तत्र तत्रोपसक्लृप्तैर्लसन्मकरतोरणै ।
सवृन्तै कदलीस्तम्भै पूगपोतैस्तथाविधै ॥ ५४ ॥

चूतपल्लववास स्रड्मुक्तादामविलम्बिभि ।
उपस्कृत प्रतिद्वारमपा कुम्भै सदीपकै ॥ ५५ ॥

प्राकारैर्गोपुरागारै शातकुम्भपरिच्छदै ।
सर्वतोऽलकृत श्रीमद्विमानशिखरद्युभि ॥ ५६ ॥

मृष्टचत्वररथ्याट्टमार्गं चन्दनचर्चितम् ।
लाजाक्षतै पुष्पफलैस्तण्डुलैर्बलिभिर्युतम ॥ ५७ ॥

ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रिय ।
सिद्धार्थाक्षतदध्यम्बुदूर्वापुष्पफलानि च ॥ ५८ ॥

उपजह्रु प्रयुञ्जाना वात्सल्यादाशिष सती ।
शृण्वस्तद्वल्गुगीतानि प्राविशद्भवन पितु ॥ ५९ ॥

महामणिव्रातमये स तस्मिन्भवनोत्तमे ।
लालितो नितरा पित्रा न्यवसद्दिवि देववत् ॥ ६० ॥

पय फेननिभा शय्या दान्ता रुक्मपरिच्छदा ।
आसनानि महार्हाणि यत्र रौक्मा उपस्करा ॥ ६१ ॥

यत्र स्फटिककुड्येषु महामारकतेषु च ।
मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥

उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः ।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ ६३ ॥

वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमुद्वतीः ।
हंसकारण्डवकुलैर्जुष्टाश्चक्राह्वसारसैः ॥ ६४ ॥

उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् ।
श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम् ॥ ६५ ॥

वीक्ष्योढवयसं तं च प्रकृतीनां च सम्मतम् ।
अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥

आत्मानं च प्रवयसमाकलय्य विशां पतिः ।
वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥ ६७ ॥

इति द्वितीयोऽध्यायः ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे ध्रुवचरितं नाम
८—९ अध्यायौ ॥

—————

# ॥ मार्कण्डेयोपाख्यानम् ॥



दिलीप उवाच ॥

अनपत्यो मरुद्वत्या मृकण्डुरिति हि त्वया ।
प्रोक्तः शिवप्रसादेन पश्चादाप कथं सुतम् ॥ १ ॥

दीर्घायुरभवत्सोऽपि कथमीशप्रसादतः ।
विस्तराच्छ्रोतुमिच्छामि वदैतन्मुनिपुङ्गव ॥ २ ॥

वसिष्ठ उवाच ॥

शृणु राजन्, प्रवक्ष्यामि मार्कण्डेयसमुद्भवम् ।
अनपत्यो मृकण्डुश्च भार्यया स महामुनिः ॥ ३ ॥

शङ्करं तोषयामास तपसा नियमेन च ।
तुष्टश्चाह पिनाकी तं भार्यया सहितं मुनिम् ॥ ४ ॥

मत्तो वरं गृहाणेति सोऽपि वव्रे वरं मुनिः ।

मृकण्डुरुवाच ॥

यतो मे भगवन्, स्तोत्रैस्तुष्टोऽसि परमेश्वर ।
अनपत्योऽहमिच्छामि पुत्रं त्वत्तो महेश्वर ॥ ५ ॥

श्रीशङ्कर उवाच ॥

किमिहेच्छसि पुत्रं त्वं निर्गुणं चिरजीवितम् ।
आहोस्विदेकं सुगुणं सर्वज्ञं षोडशाब्दिकम् ॥ ६ ॥

वसिष्ठ उवाच ॥

इत्युक्तः सोऽपि धर्मात्मा नाहमिच्छामि निर्गुणम् ।
अल्पायुरपि पुत्रो वा सर्वज्ञोऽस्तु जगत्पते ॥ ७ ॥

श्रीशङ्कर उवाच ॥

तर्हि ते भविता पुत्रः षोडशायुः सुधार्मिकः ।
सर्वज्ञो गुणवाँल्लोके कीर्तिमान् ज्ञानसागरः ॥ ८ ॥

वसिष्ठ उवाच ॥

एवमुक्त्वा ययौ देवः सोऽपि लब्धवरो मुनिः ।
प्रकाममन्तुष्टमनाः प्रपेदे निजमाश्रमम् ॥ ९ ॥

भार्या तस्य चिरादासीदन्तर्वत्नी मरुद्वती ।
विधिवद्विहिते तेन गर्भाधानस्य कर्मणि ॥ १० ॥

ततः पुंसवनं तेन स्पन्दनात्प्राक्छुभे दिने ।
गृह्योक्तविधिना सम्यक्कृतः पुंसो विवृद्धये ॥ ११ ॥

सीमन्तोऽप्यष्टमे मासि गर्भरूपसमृद्धिकृत् ।
सुखप्रसवसिध्द्यै च तेनाकारि क्रियाविदा ॥ १२ ॥

तनयस्तपनाकारो मरुद्वत्यामजायत ।
वेदव्यासादिमुनयस्तच्छान्त्यर्थं समाययुः ।
जातकर्म स्वयं चक्रे वेदव्यासो महामुनिः ॥ १३ ॥

नामकर्म ततश्चक्रे मुनिरेकादशेऽहनि ।
वेदोक्तैर्विविधैर्मन्त्रैराशीर्भिरभिनन्द्य च ॥ १४ ॥

कृत्वा बालोचिता रक्षा तेन सभाविता ययुः ।
अहो रूपमहो तेजस्त्वहो सर्वाङ्गलक्षणम् ॥ १५ ॥

अहो मरुद्वतीभाग्यादाविरासीस्स्वय हरः ।
इति हृष्यन्ति चान्योन्य पौरजानपदा जनाः ॥ १६ ॥

निष्कामो वै चतुर्थेऽस्य मासि पिता कृतो गृहात् ।
अन्नप्राशनमब्दार्धे चूडाध्यर्धाब्दिकद्वये ॥ १७ ॥

कर्णवेध ततः कृत्वा श्रवणर्क्षे स कर्मकृत् ।
ब्रह्मतेजोऽभिवृद्ध्यर्थं पञ्चमेऽब्दे व्रत ददौ ॥ १८ ॥

उपाकर्म ततः कृत्वा वेदमध्यापयत्सुधीः ।
वेदान्स विधिनाध्यैष्ट साङ्गोपाङ्गपदक्रमान् ॥ १९ ॥

मृकण्डुः शोकदीनात्मा विललापाकुलेन्द्रियः ।
मार्कण्डेयोऽपि तं दृष्ट्वा विलपन्तं सुदुःखितम् ॥ २० ॥

उवाच पितर किं ते कारणं शोकमोहयोः ।
मार्कण्डेयस्य वाक्य तच्छ्रुत्वा स मधुराक्षरम् ॥ २१ ॥

उवाच कारणं तस्मै शोकस्यापि सहेतुकम् ।

मृकण्डुरुवाच ॥

तव हेतोरहं वत्स, शोचामि शृणु मे वचः ॥ २२ ॥

आयुः षोडशवर्षाणि तव दत्त पिनाकिना ।
स कालोऽयमिह प्राप्तस्तस्माच्छोचामि नन्दन ॥ २३ ॥

वसिष्ठ उवाच ॥

पित्रेति कथितं श्रुत्वा मार्कण्डेयोऽब्रवीदिति ।
मन्निमित्तं पितः, शोकं कदाचिदपि मा कृथाः ॥ २४ ॥

यतिष्यामि तथा तात, यथा यास्याम्यमर्त्यताम् ।
समाराध्य महादेवं वाञ्छितार्थप्रदं शिवम् ॥ २५ ॥

मृत्युजयं विरूपाक्षं सर्वज्ञं सर्वदं सताम् ।
कालकालं महाकालं कालकूटविषाशिनम् ॥२६ ॥

इति श्रुत्वा वचस्तस्य पितरावतिहर्षितौ ।
सर्वशोकं परित्यज्य प्रहृष्टावूचतुः सुतम् ॥ २७ ॥

पितरावूचतुः ॥

आवयोः शोकनाशाय महोपायः समीरितः ।
मृत्युंजयस्य देवस्य समाराधनलक्षणः ॥ २८ ॥

तद्गच्छ शरणं तात, नातः परतरं हितम् ।
मनोरथपथातीतकारणं कालहारिणम् ॥ २९ ॥

किं न श्रुतं त्वया तात, श्वेतकेतुं यथा पुरा ।
पाशितं कालपाशेन ररक्ष त्रिपुरान्तकः ॥ ३० ॥

शिलादतनयं मृत्युग्रस्तमष्टाब्दमर्भकम् ।
शिवो निजपदे चक्रे नन्दिनं विश्वनन्दिनम् ॥ ३१ ॥

क्षीरोदमथनाद्भूतं प्रलयानिलसंनिभम् ।
पीत्वा हालाहलं घोरमरक्षद्भुवनत्रयम् ॥ ३२ ॥

जलधर महादर्प हृतत्रैलोक्यसपदम् ।
चरणाङ्गुष्ठरेखोत्थचक्रेणाभिजघान य ॥ ३३ ॥

योऽसावेकेषुपातोत्थज्वलनैस्त्रिपुर पुरा ।
विधाय पत्रिण विष्णु ज्वलयामास धूर्जटि ॥ ३४ ॥

अन्धक यस्त्रिशूलाग्रे प्रोत वर्षायुत पुरा ।
त्रैलोक्यैश्वर्यसमूढ शोषयामास भानुना ॥ ३५ ॥

काम दृष्टिनिपातेन त्रैलोक्यविजयोर्जितम् ।
निनायानङ्गपदवीं वीक्षमाणेष्वजादिषु ॥ ३६ ॥

त ब्रह्माद्येककर्तार मेघवाहनमच्युतम् ।
प्रयाहि विश्वशरण विश्वरक्षामणिं शिवम् ॥ ३७ ॥

वसिष्ठ उवाच ॥

पित्रोरनुज्ञा सप्राप्य दक्षिणार्णवरोधसि ।
लिङ्ग सस्थाप्य विधिवन्मार्कण्डेयो निजाह्वयम् ॥ ३८ ॥

कृत्वा त्रिषवणस्नान त्रिकाल शिवमर्चति ।
स्तोत्र त्रिकालपूजान्ते पठित्वा नृत्यति प्रियात ॥ ३९ ॥

तेन स्तोत्रेण सतुष्टो दिनेनैकेन शङ्कर ।
पूजितश्च महाभक्त्या मार्कण्डेयेन शङ्कर ॥ ४० ॥

शिवपूजाप्रसक्त च तद्दिने स्तोतुमुद्यतम् ।
आजगाम तमुद्दिश्य कालो मृत्युसहायवान ॥ ४१ ॥

पृन्तरक्तान्तनयन सर्पवृश्चिकरोमवान् ।
दम्ष्ट्राकरालवदनश्चूर्णिताञ्जनसन्निभ ॥ ४२ ॥

समागम्य च तस्यासौ काल पाशमपासृजत् ।
कण्ठार्पितमहापाशो मार्कण्डेयस्तमब्रवीत् ॥ ४३ ॥

मार्कण्डेय उवाच ॥

काल, तावत्प्रतीक्षस्व काल मम महामते ।
निर्वर्तयाम्यह यावन्महास्तोत्र जगत्पते ॥ ४४ ॥

शिवस्तोत्रमनिर्वर्त्य न कचिच्च व्रजाम्यहम् ।
न स्वपामि न भोक्ष्यामीत्येतन्मे व्रतमाहितम् ॥ ४५ ॥

न जीवित कलत्र वा न राज्य न तथा सुखम् ।
प्रिय मम यथातीव लोकेऽस्मिन् शिवसस्तव ॥ ४६ ॥

तथा च नानृत वाक्यमहमेतदिहोक्तवान् ।
सत्येनानेन सतत प्रसीदतु महेश्वर ॥ ४७ ॥

वसिष्ठ उवाच ॥

तमब्रवीत्तत कालो मार्कण्डेय हसन्मुहु ।

काल उवाच ॥

न श्रुत तत्त्वया मन्ये वृद्धाना पूर्वकल्पितम् ॥ ४८ ॥

पूर्वे वयसि यो धर्म न करोति विमूढधी ।
स पश्चात्तप्यते वृद्ध सार्थभ्रष्ट इवाध्वग ॥ ४९ ॥

मासाष्टकेन तत्कुर्याद्येन वर्षा सुख वसेत् ।
यावज्जीव तु तत्कुर्याद्येन प्रेत्य सुख वसेत् ॥ ५० ॥

श्व कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न च प्रतीक्षते काल कृतमस्य न वा कृतम् ॥ ५१ ॥

इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥ ५२ ॥

नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ५३ ॥

चक्रवर्तिसहस्राणि पुरन्दरशतानि च ।
मया नीतानि कर्तव्यो नात्र मन्युस्त्वयानघ ॥ ५४ ॥

वसिष्ठ उवाच ॥

श्रुत्वैवं वचनं तस्य कालस्यामोघवर्तिनः ।
मार्कण्डेय उवाचेदं शिवस्तोत्रपरायणः ॥ ५५ ॥

मार्कण्डेय उवाच ॥

येऽत्र विघ्नं प्रकुर्वन्ति शिवस्तोत्ररतात्मनाम् ।
तेऽचिरेण विनश्यन्ति त्वामतो वारयाम्यहम् ॥ ५६ ॥

यथैव राजभृत्यानां राजा शास्तैव नेतरः ।
तथैव शिवभक्तानां शास्तासौ परमेश्वरः ॥ ५७ ॥

भिन्दन्ति शैलानुदधीन्पिबन्ति
व्यस्यामयन्ति क्षितिमन्तरिक्षम् ।
तृणीकृतब्रह्मपुरन्दराणां
किं दुष्करं शङ्करकिङ्कराणाम् ॥ ५८ ॥

न मृत्युर्न तथा धाता न यमो यमदूतकाः ।
न चान्ये शिवभक्तानां भवन्ति प्रभविष्णवः ॥ ५९ ॥

कि न श्रुत त्वया काल, वाक्यमेतन्मनीषिणाम् ।
नृणामीश्वरभक्ताना न भवन्त्यापद क्वचित् ॥ ६० ॥

*ब्रह्माद्योऽपि तान्क्रुद्धानशक्ता हन्तुमीश्वरा ।*

वसिष्ठ उवाच ॥

स एव तार्जितस्तेन भगवान्विवृतेक्षण ॥ ६१ ॥

कालो भृश रुषेत्याह ग्रसन्निव जगत्त्रयम् ।

काल उवाच ॥

यावत्य एव गङ्गाया सिकता विप्र, दुर्मते ॥ ६२ ॥

तावन्त एव ब्रह्माणो मया कालेन सहृता ।
कि वात्र बहुनोक्तेन पश्य मे विक्रमं बलम् ।
स पातु त्वा महादेवो यस्य दासोऽसि साम्प्रतम् ॥ ६३ ॥

वसिष्ठ उवाच ॥

तेनैव गर्जता राजन्, कालेनासौ महामुनि ।
*ग्रस्तु हठात्समारब्धो राहुणेव यथा शशी ॥ ६४ ॥*

लिङ्गादथ समुत्तस्थौ मूर्तिमान्परमेश्वर ।
अनिर्देश्यत्रयोरूपश्चन्द्रार्धकृतशेखर ॥ ६५ ॥

गर्जन्मेघ इवोदग्र हुकृतेन स तत्क्षणात् ।
उद्धृत्य पादकमल प्रजहार भुजान्तरे ॥ ६६ ॥

पादप्रहारचकितो दूरे मृत्यु पपात ह ।
दूरे पतितमालोक्य कृतान्त भीषणाकृतिम् ॥ ६७ ॥

मार्कण्डेयोऽथ तुष्टाव तेन स्तोत्रेण शङ्करम् ।

रत्नसानुशरासनं रजताद्रिशृङ्गनिकेतनं
शिञ्जिनीकृतपन्नगेश्वरमच्युतानलसायकम् ।
क्षिप्रदग्धपुरत्रयं त्रिदशालयैरभिवन्दितं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ६८ ॥

पञ्चपादपपुष्पगन्धिपदाम्बुजद्वयशोभितं
भाललोचनजातपावकदग्धमन्मथविग्रहम् ।
भस्मदिग्धकलेवरं भवनाशनं भवमव्ययं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ६९ ॥

मत्तवारणमुख्यचर्मकृतोत्तरीयमनोहरं
पङ्कजासनपद्मलोचनपूजिताङ्घ्रिसरोरुहम् ।
देवसिन्धुतरङ्गिणीकरसिक्तशीतजटाधरं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७० ॥

कुण्डलीकृतकुण्डलीश्वरकुण्डलं वृषवाहनं
नारदादिमुनीश्वरस्तुतवैभवं भुवनेश्वरम् ।
अन्धकान्तकमाश्रितामरपादपं शमनान्तक
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७१ ॥

यक्षराजसखं भगाक्षिहरं भुजङ्गविभूषणं
शैलराजसुतापरिष्कृतचारुवामकलेवरम् ।
क्ष्वेलनीलगलं परश्वधधारिणं मृगधारिणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७२ ॥

भेषजं भवरोगिणामखिलापदामपहारिण
दक्षयज्ञविनाशिनं त्रिगुणात्मकं त्रिविलोचनम् ।
भुक्तिमुक्तिफलप्रदं निखिलाघसंघनिबर्हणं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७३ ॥

भक्तवत्सलमर्चितं निधिमक्षयं हरिदम्बर
सर्वभूतपतिं परात्परमप्रमेयमनूपमम् ।
सोमवारिनभोहुताशनसोमपालितस्वाकृतिं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७४ ॥

विश्वसृष्टिविधायिनं पुनरेव पालनतत्परं .
संहरन्तमथ प्रपञ्चमशेषलोकनिवासिनम् ।
क्रीडयन्तमहर्निशं गणनाथयूथसमावृतं
चन्द्रशेखरमाश्रये मम किं करिष्यति वै यमः ॥ ७५ ॥

रुद्रं पशुपतिं स्थाणुं नीलकण्ठमुमापतिम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७६ ॥

कालकण्ठं कलामूर्तिं कालाग्निं कालनाशनम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७७ ॥

नीलकण्ठं विरूपाक्षं निर्मलं निरुपद्रवम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७८ ॥

वामदेवं महादेवं लोकनाथं जगद्गुरुम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ७९ ॥

देवदेव जगन्नाथं देवेशमृषभध्वजम् ।
नमामि शिरसा देवं किं नो मृत्युः करिष्यति ॥ ८० ॥

वसिष्ठ उवाच ॥

मार्कण्डेयकृत स्तोत्र य: पठेन्छिवसन्निधौ ।
तस्य मृत्युभयं नास्ति सत्यं सत्य वदाम्यहम् ॥ ८१ ॥

इति स्तुतो महादेवो मार्कण्डेयेन धीमता ।
आयु प्रादादपर्याप्तमनेकप्रलयावधि ॥ ८२ ॥

मार्कण्डेयो महातेजा देवदेवप्रसादत ।
अमृतत्वमनुप्राप्य ददर्शप्रलयान्बहून् ॥ ८३ ॥

पुन. स्वमाश्रम प्राप्य मार्कण्डेयो महामुनिः ।
मातर पितरं नत्वा स ताभ्यामभिनन्दितः ॥ ८४ ॥

तीर्थयात्रापरो नित्य चचार पृथिवीतले ।
यमोऽपि शङ्कर स्तुत्वा यथादेश जगाम ह ॥ ८५ ॥

मृगशृङ्गस्य विप्रस्य माघस्नानपरस्य च ।
इत्थं भाग्यवती जाता सन्ततिर्माघगौरवात् ॥ ८६ ॥

अनेन माघा विहिता महात्मना
मृकण्डुपुत्रेण मृडार्पितात्मना ।
अनेकलोकप्रलया समाश्रिता:
समस्तलोकेषु सदा विहारिणा ॥ ८७ ॥

इति श्रीपद्मपुराण उत्तरखण्डे वसिष्ठदिलीपसंवादे
मार्कण्डेयजन्माख्यान नाम
२३६ अध्यायः ॥

# ॥ कुचेलोपाख्यानम् ॥

श्रीशुक उवाच ॥

कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ १ ॥

यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ।
तस्य भार्या कुचेलस्य क्षुत्क्षामा च तथाविधा ॥ २ ॥

पतिव्रता पतिं प्राह म्लायता वदनेन सा ।
दरिद्रा सीदमाना सा वेपमानाभिगम्य च ॥ ३ ॥

ननु ब्रह्मन्, भगवतः सखा साक्षाच्छ्रियःपतिः ।
ब्रह्मण्यश्च शरण्यश्च भगवान्सात्वतर्षभः ॥ ४ ॥

तमुपैहि महाभाग, साधूनां च परायणम् ।
दास्यति द्रविणं भूरि सीदतेऽतिकुटुम्बिने ॥ ५ ॥

आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ।
स्मरतः पादकमलमात्मानमपि यच्छति ॥ ६ ॥

किं त्वर्थकामान्भजते नात्यभीष्टाञ्जगद्गुरुः ।
स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ॥ ७ ॥

अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ।
इति संचिन्त्य मनसा गमनाय मतिं दधे ॥ ८ ॥

अप्यस्त्युपायनं किंचिद्गृहे कल्याणि, दीयताम् ।
याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् ॥ ९ ॥

चेलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ।
स तानादाय विप्राग्र्यः प्रययौ द्वारका किल ॥ १० ॥

कृष्णसन्दर्शन मह्य कथ स्यादिति चिन्तयन् ।
त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च स द्विजः ॥ ११ ॥

विप्रोऽगम्यान्धकवृष्णीनां गृहेष्वच्युतधर्मिणाम् ।
गृहं ह्यष्टसहस्राणा महिषीणां हरेर्द्विज ॥ १२ ॥

विवेशैकतम श्रीमद्ब्रह्मानन्दं गतो यथा ।
तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ॥ १३ ॥

सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ।
सख्यु प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृत· ॥ १४ ॥

प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्या पुष्करेक्षणः ।
अथोपवेश्य पर्यङ्के स्वयं सख्यु समर्हणम ॥ १५ ॥

उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ।
अग्रहीच्छिरसा राजन , भगवाँल्लोकपावन· ॥ १६ ॥

व्यलिम्पद्दिव्यगन्धेन चन्दनागरुकुङ्कुमैः ।
धूपैः सुरभिभिर्मित्र प्रदीपावलिभिर्मुदा ।
अर्चित्वावेद्य ताम्बूल गां च स्वागतमब्रवीत् ॥ १७ ॥

कुचेलं मलिनं क्षामं द्विजं धमनिसन्ततम् ।
देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै ॥ १८ ॥

अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना ।
विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ १९ ॥

किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ।
श्रिया हीनेन लोकेऽस्मिन्गर्हितेनाधनेन च ॥ २० ॥

योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः ।
पर्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ २१ ॥

कथयाचक्रतुर्गाथा पूर्वा गुरुकुले सतो. ।
आत्मनो ललिता राजन्, करौ गृह्य परस्परम् ॥ २२ ॥

श्रीभगवानुवाच ॥

अपि ब्रह्मन्, गुरुकुलाद्भवता लब्धदक्षिणात् ।
समावृत्तेन धर्मज्ञ, भार्योढा सदृशी न वा ॥ २३ ॥

प्रायो गृहेषु ते चित्तमकामविहतं तथा ।
नैवातिप्रीयसे विद्वन्, धनेषु विदितं हि मे ॥ २४ ॥

केचित्कुर्वन्ति कर्माणि कामैरहतचेतस ।
त्यजन्तः प्रकृतीर्दैवीर्यथाहं लोकसंग्रहम् ॥ २५ ॥

कच्चिद्गुरुकुले वासं ब्रह्मन्, स्मरसि नौ यतः ।
द्विजो विज्ञाय विज्ञेयं तमस. परमश्नुते ॥ २६ ॥

स वै सत्कर्मणा साक्षाद्द्विजातेरिह सम्भव ।
आद्योऽङ्ग यत्राश्रमिणा यथाहं ज्ञानदो गुरु ॥ २७ ॥

नन्वर्थकोविदा ब्रह्मन्, वर्णाश्रमवतामिह ।
ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ २८ ॥

नाहमिज्याप्रजातिभ्या तपसोपशमेन वा ।
तुष्येय सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ २९ ॥

अपि न स्मर्यते ब्रह्मन्, वृत्त निवसता गुरौ ।
गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥ ३० ॥

प्रविष्टाना महारण्यमपर्तौ सुमहद्द्विज ।
वातवर्षमभूत्तीव्र निष्ठुरा स्तनयित्नव ॥ ३१ ॥

सूर्यश्चास्त गतस्तावत्तमसा चावृता दिश ।
निम्न कूल जलमय न प्राज्ञायत किंचन ॥ ३२ ॥

वय भृश तत्र महानिलाम्बुभि-
निहन्यमाना मुहुरम्बुसम्प्लवे ।
दिशोऽविदन्तोऽथ परस्पर वन
गृहीतहस्ता परिबभ्रिमातुरा ॥ ३३ ॥

एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरु ।
अन्वेषमाणो न शिष्यानाचार्योऽपश्यदातुरान ॥ ३४ ॥

अहो हे पुत्रका यूयमस्मदर्थेऽतिदु खिता ।
आत्मा वै प्राणिना प्रेष्ठस्तमनादृत्य मत्परा ॥ ३५ ॥

एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ।
यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ३६ ॥

तुष्टोऽहं भो द्विजश्रेष्ठाः, सत्याः सन्तु मनोरथाः ।
छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ३७ ॥

इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ।
गुरोरनुग्रहेणैव पुमान्पूर्णः प्रशान्तये ॥ ३८ ॥

ब्राह्मण उवाच ॥
किमस्माभिरनिर्वृत्तं देवदेव, जगद्गुरो ।
भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ३९ ॥

यस्य छन्दोमयं ब्रह्म देह आवपनं विभो ।
श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४० ॥

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥

---

श्रीशुक उवाच ॥
स इत्थं द्विजमुख्येन सह संकथयन्हरिः ।
सर्वभूतमनोभिज्ञः स्मयमान उवाच तम् ॥ १ ॥

ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान्प्रहसन्प्रियम् ।
प्रेम्णा निरीक्षणेनैव प्रेक्षन्खलु सतां गतिः ॥ २ ॥

श्रीभगवानुवाच ॥

किमुपायनमानीतं ब्रह्मन्, मे भवता गृहात् ।
अण्वप्युपहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ॥ ३ ॥

भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ।
पत्र पुष्प फल तोय यो मे भक्त्या प्रयच्छति ॥ ४ ॥

तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।
इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रिय. ॥ ५ ॥

पृथुकप्रसृतिं राजन, न प्रायच्छदवाङ्मुख. ।
सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम् ॥ ६ ॥

विज्ञायाचिन्तयन्नाय श्रीकामो माभजत्पुरा ।
पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ॥ ७ ॥

प्रामो मामस्य दास्यामि सपदो मर्त्यदुर्लभाः ।
इत्थ विचिन्त्य वसनाच्चीरबद्धान्द्विजन्मनः ॥ ८ ॥

स्वय जहार किमिदमिति पृथुकतण्डुलान ।
नन्वेतदुपनीत मे परमप्रीणन मख ॥ ९ ॥

तर्पयन्त्यङ्ग, मां विश्वमेते पृथुकतण्डुलाः ।
इति मुष्टिं सकृज्जग्ध्वा द्वितीया जग्धुमाददे ॥ १० ॥

तावच्छ्रीर्जगृहे हस्त तत्परा परमेष्ठिनः ।
एतावतालं विश्वात्मन, सर्वसंपत्समृद्धये ॥ ११ ॥

अस्मिँल्लोकेऽथवामुष्मिन्पुंसस्त्वत्तोपकारणम् ।
ब्राह्मणस्ता तु रजनीमुषित्वान्युतमन्दिरे ।
भुक्त्वा पीत्वा सुख मेने आत्मान स्वर्गत यथा ॥ १२ ॥

श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दित ।
जगाम स्वालय तात, पथ्यनुव्रज्य नन्दित ॥ १३ ॥

स चालब्ध्वा धन कृष्णान्न तु याचितवान्स्वयम् ।
स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृत ॥ १४ ॥

अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ।
यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १५ ॥

काह दरिद्र पापीयान्क कृष्ण श्रीनिकेतन ।
ब्रह्मबन्धुरिति स्माह बाहुभ्या परिरम्भित ॥ १६ ॥

निवासित प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ।
महिष्या वीजित श्रान्तो वालव्यजनहस्तया ॥ १७ ॥

शुश्रूषया परमया पादसवाहनादिभि ।
पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥

स्वर्गापवर्गयो पुसा रसाया भुवि सपदाम् ।
सर्वासामपि सिद्धीना मूल तच्चरणार्चनम् ॥ १९ ॥

अधनोऽय धन प्राप्य माद्यन्नुच्चैर्न मा स्मरेत् ।
इति कारुणिको नून धन मे भूरि नाददात् ॥ २० ॥

इति तच्चिन्तयन्नन्त प्राप्तो निजगृहान्तिकम् ।
सूर्यानलेन्दुसकाशैर्विमानै सर्वतो वृतम् ॥ २१ ॥

विचित्रोपवनोद्यानै कूजद्द्विजकुलाकुलै ।
प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभि ॥ २२ ॥

जुष्ट स्वलङ्कृतै पुम्भि स्त्रीभिश्च हरिणाक्षिभि ।
किमिद कस्य वा स्थान कथ तदिदमित्यभूत् ॥ २३ ॥

एव मीमासमान त नरा नार्योऽमरप्रभा ।
प्रत्यगृह्णन्महाभाग गीतवाद्येन भूयसा ॥ २४ ॥

पतिमायातमाकर्ण्य पत्न्युद्धर्षातिसभ्रमा ।
निश्चक्राम गृहात्तूर्ण रूपिणी श्रीरिवालयात् ॥ २५ ॥

पतिव्रता पति दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना ।
मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥

पत्नीं वीक्ष्य विस्फुरन्तीं देवीं वैमानिकीमिव ।
दासीना निष्ककण्ठीना मध्ये भान्तीं स विस्मित ॥ २७ ॥

प्रीत स्वय तया युक्त प्रविष्टो निजमन्दिरम् ।
मणिस्तम्भशतोपेत महेन्द्रभवन यथा ॥ २८ ॥

पय फेननिभा शय्या दान्ता रुक्मपरिच्छदा ।
पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥

आसनानि च हैमानि मृदूपस्तरणानि च ।
मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥

विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसंपदाम् ।
तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥

नूनं वतैतन्मम दुर्भगस्य
शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो
नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥

नन्वब्रुवाणो दिशते समक्षं
याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत्स्वयमीक्षमाणो
दशार्हकाणामृषभः सखा मे ॥ ३४ ॥

किंचित्करोत्युर्वपि यत्स्वदत्तं
सुहृत्कृतं फल्ग्वपि भूरिकारी ।
मयोपनीतं पृथुकैकमुष्टिं
प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥

तस्यैव मे सौहृदसख्यमैत्री
दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन
विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥

भक्ताय चित्रा भगवान्हि संपदो
राज्यं विभूतीर्न समर्थयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं
पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥

इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ।
विषयान्जायया त्यक्ष्यन्बुभुजे नातिलम्पटः ॥ ३८ ॥

तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ।
ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥

एवं स विप्रो भगवत्सुहृत्तदा
दृष्ट्वा स्वभृत्यैरजितं पराजितम् ।
तद्ध्यानवेगोद्ग्रथितात्मबन्धन-
स्तद्धाम लेभे चिरतः सतां गतिम् ॥ ४० ॥

एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ।
लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ४१ ॥

इति द्वितीयोऽध्यायः ॥

इति श्रीभागवते दशमस्कन्धे उत्तरार्धे कुचेलोपाख्याने
८०—८१ अध्यायौ ॥

# ॥ च्यवनोपाख्यानम् ॥

युधिष्ठिर उवाच ॥

दर्शने कीदृशः स्नेहः संवासे च पितामह ।
महाभाग्यं गवां चैव तन्मे व्याख्यातुमर्हसि ॥ १ ॥

भीष्म उवाच ॥

हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते ।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ २ ॥

पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ ।
उदवासकृतारम्भो बभूव स महाव्रतः ॥ ३ ॥

निहत्य मानं क्रोधं च प्रहर्षं शोकमेव च ।
वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः ॥ ४ ॥

आदधत्सर्वभूतेषु विस्रम्भं परमं शुभम् ।
जले चरेषु सर्वेषु शीतरश्मिरिव प्रभुः ॥ ५ ॥

स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च ।
गङ्गायमुनयोर्मध्ये जलं संप्रविवेश ह ॥ ६ ॥

गङ्गायमुनयोर्वेगं सुभीमं भीमनिस्वनम् ।
प्रतिजग्राह शिरसा वातवेगसमं जवे ॥ ७ ॥

गङ्गा च यमुना चैव सरितश्च सरांसि च ।
प्रदक्षिणमृषिं चक्रुर्न चैन पर्यपीडयन् ॥ ८ ॥

अन्तर्जलेषु सुष्वाप काष्ठभूतो महामुनिः ।
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्पभ ॥ ९ ॥

जलौकसां स सत्त्वानां बभूव प्रियदर्शनः ।
उपाजिघ्रन्त च तदा तस्योष्ठं हृष्टमानसाः ॥ १० ॥

तत्र तस्यासतः कालः समतीतोऽभवन्महान् ।
ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः ॥ ११ ॥

तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ।
निषादा बहवस्तत्र मत्स्योद्धरणनिश्चयाः ॥ १२ ॥

व्यायता बलिनः शूराः सलिलेष्वनिवर्तिनः ।
अभ्याययुश्च तं देश निश्चिता जालकर्मणि ॥ १३ ॥

जालं ते योजयामासुर्निःशेषेण जनाधिप ।
मत्स्योदकं समासाद्य तदा भरतसत्तम ॥ १४ ॥

ततस्ते बहुभिर्योगैः कैवर्त्ता मत्स्यकाङ्क्षिणः ।
गङ्गायमुनयोर्वारि जालैरभ्यकिरंस्ततः ॥ १५ ॥

जालं सुविततं तेषां नवसूत्रकृतं तथा ।
विस्तारायामसंपन्नं यत्तत्र सलिलेऽक्षिपन ॥ १६ ॥

ततस्ते सुमहच्चैव बलवच्च सुवर्तितम् ।
अवतीर्य ततः सर्वे जालं चकृषिरे तदा ॥ १७ ॥

अभीतरूपा सहृष्टा अन्योन्यवशवर्त्तिन ।
वबन्धुस्तत्र मत्स्याश्च तथान्यान् जलचारिण ॥ १८ ॥

तथा मत्स्यै परिवृत च्यवन भृगुनन्दनम् ।
आकर्षयन्महाराज, जालेनाथ यदृच्छया ॥ १९ ॥

नदीशैवलदिग्धाङ्ग हरिश्मश्रुजटाधरम् ।
लग्नै शङ्खनखैर्गात्रै क्रोडैश्चित्रैरिवार्पितम् ॥ २० ॥

त जालेनोद्धृत दृष्ट्वा ते तदा वेदपारगम् ।
सर्वे प्राञ्जलयो दाशा शिरोभि प्रापतन्भुवि ॥ २१ ॥

परिखेदपरित्रासाज्जालस्याकर्षणेन च ।
मत्स्या वभूवुर्व्यापन्ना स्थलसस्पर्शनेन च ॥ २२ ॥

स मुनिस्तत्तदा दृष्ट्वा मत्स्याना कदन कृतम् ।
बभूव कृपयाविष्टो निश्वसश्च पुन पुन ॥ २३ ॥

निपादा ऊचु ॥

अज्ञानाद्यत्कृत पाप प्रसाद तत्र न कुरु ।
करवाम प्रिय किं ते तन्नो ब्रूहि महामुने ॥ २४ ॥

इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् ।
यो मेऽद्य परम कामस्त शृणुध्व समाहिता ॥ २५ ॥

प्राणोत्सर्ग विसर्ग वा मत्स्यैर्यास्याम्यह सह ।
सवासान्नोत्सहे त्यक्तु सलिलेऽध्युपितानहम् ॥ २६ ॥

इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः
सर्वे विवर्णवदना नहुषाय न्यवेदयन् ॥ २७ ॥

इति प्रथमोऽध्यायः ॥



द्वितीयोऽध्यायः ॥



भीष्म उवाच ॥

नहुषस्तु ततः श्रुत्वा च्यवनं तं तथागतम् ।
त्वरितः प्रययौ तत्र सहामात्यपुरोहितः ॥ १ ॥

शौच कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः ।
आत्मानमाचचक्षे च च्यवनाय महात्मने ॥ २ ॥

अर्चयामास तं चापि तस्य राज्ञः पुरोहितः ।
सत्यव्रतं महात्मानं देवकल्पं विशां पते ॥ ३ ॥

नहुष उवाच ॥

करवाणि प्रियं किं ते तन्मे ब्रूहि द्विजोत्तम ।
सर्वं कर्त्तास्मि भगवन्, यद्यपि स्यात्सुदुष्करम् ॥ ४ ॥

च्यवन उवाच ॥

श्रमेण महता युक्ताः कैवर्ता मत्स्यजीविनः ।
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ॥ ५ ॥

नहुष उवाच ॥

सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित ।
निष्क्रयार्थे भगवतो यथाह भृगुनन्दन ॥ ६ ॥

च्यवन उवाच ॥

सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप ।
सदृशं दीयतां मूल्यं स्वबुद्ध्यापि स्वयं कुरु ॥ ७ ॥

नहुष उवाच ॥

सहस्राणां शतं विप्र, निषादेभ्यः प्रदीयताम् ।
स्यादिदं भगवन्, मूल्यं किं वान्यन्मन्यते भवान ॥ ८ ॥

च्यवन उवाच ॥

नाहं शतसहस्रेण निमेयः पार्थिवर्षभ ।
दीयतां सदृशं मूल्यममात्यैः सह चिन्तया ॥ ९ ॥

नहुष उवाच ॥

कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित ।
यदेतदपि नो मूल्यमतो भूयः प्रदीयताम् ॥ १० ॥

च्यवन उवाच ॥

राजन्, नार्हाम्यहं कोटिं भूयो वापि महाद्युते ।
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ॥ ११ ॥

नहुष उवाच ॥

अर्धं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ।
एतन्मूल्यमहं मन्ये किं वान्यन्मन्यसे द्विज ॥ १२ ॥

च्यवन उवाच ॥

अर्धं राज्यं समग्रं वा मूल्यं नार्हामि पार्थिव ।
सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् ॥ १३ ॥

भीष्म उवाच ॥

महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः ।
सचिन्तयामास तदा सहामात्यपुरोहितैः ॥ १४ ॥

तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः ।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ १५ ॥

स तमाभाष्य राजानमब्रवीद्द्विजसत्तमः ।
तोषयिष्याम्यहं क्षिप्रं यथा तुष्टो भविष्यति ॥ १६ ॥

नाहं मिथ्या वचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा ।
भवतो यदहं ब्रूयां तत्कार्यमविशङ्कया ॥ १७ ॥

नहुष उवाच ॥

ब्रवीतु भगवान्मूल्यं महर्षेः सदृशं भृगोः ।
परित्रायस्व मामस्माद्विषयं च कुलं च मे ॥ १८ ॥

हन्याद्धि भगवान्क्रुद्धस्त्रैलोक्यमपि केवलम् ।
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम् ॥ १९ ॥

अगाधाम्भसि मग्नस्य सामात्यस्य सऋत्विजः ।
प्लवो भव महर्षे, त्वं कुरु मूल्यविनिश्चयम् ॥ २० ॥

भीष्म उवाच ॥

नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान् ।
उवाच हर्षयन्सर्वानमात्यान्पार्थिवं च तम् ॥ २१ ॥

अनर्घेया महाराज, द्विजा वर्णेषु चोत्तमाः ।
गावश्च पुरुषव्याघ्र, गौर्मूल्यं परिकल्प्यताम् ॥ २२ ॥

नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप ।
हर्षेण महता युक्तः सहामात्यपुरोहितः ॥ २३ ॥

अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम् ।
इदं प्रोवाच नृपतिर्वाचा सन्तर्पयन्निव ॥ २४ ॥

नहुष उवाच ॥

उत्तिष्ठोत्तिष्ठ विप्रर्षे, गवा क्रीतोऽसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतां वर ॥ २५ ॥

च्यवन उवाच ॥

उत्तिष्ठाम्येष राजेन्द्र, सम्यक् क्रीतोऽस्मि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किंचिदिहाच्युत ॥ २६ ॥

कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते वीर, सर्वपापहरं शिवम् ॥ २७ ॥

गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ २८ ॥

स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ २९ ॥

अमृतं ह्यक्षयं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ ३० ॥

तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ॥ ३१ ॥

निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पापं चास्यापकर्षति ॥ ३२ ॥

गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः ।
गावः कामदुहो देव्यो नान्यत्किंचित्परं स्मृतम् ॥ ३३ ॥

इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ।
गुणैकदेशवचनं शक्यं पारायणं न तु ॥ ३४ ॥

निषादा ऊचुः ॥

दर्शनं कथनं चैव सहास्माभिः कृतं मुने ।
सतां साप्तपदं मैत्रं प्रसादं नः कुरु प्रभो ॥ ३५ ॥

हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ।
एवं त्वमपि धर्मात्मन्, पुरुषाग्निः प्रतापवान् ॥ ३६ ॥

प्रसादयामहे विद्वन्, भवन्तं प्रणता वयम् ।
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥ ३७ ॥

च्यवन उवाच ॥

कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
नरं समूलं दहति कक्षमग्निरिव ज्वलन् ॥ ३८ ॥

प्रतिगृह्णामि वो धेनुं कैवर्त्ता मुक्तकिल्बिषाः ।
दिवं गच्छत वै क्षिप्रं मत्स्यैः सह जलोद्भवैः ॥ ३९ ॥

भीष्म उवाच ॥

ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥ ४० ॥
ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् ।
आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ ॥ ४१ ॥
ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः ।
वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम् ॥ ४२ ॥
ततो राजा महावीर्यो नहुषः पृथिवीपतिः ।
वरमित्यब्रवीत्प्रीतस्तदा भरतसत्तम ॥ ४३ ॥
ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः ।
तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत ॥ ४४ ॥
समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम् ।
गविजश्च महातेजाः स्वमाश्रमपदं ययौ ॥ ४५ ॥
निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप ।
नहुषोऽपि वरं लब्ध्वा प्रविवेश स्वकं पुरम् ॥ ४६ ॥
एतत्ते कथितं तात, यन्मां त्वं परिपृच्छसि ।
दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर ॥ ४७ ॥
महाभाग्यं गवां चैव तथा धर्मविनिश्चयम् ।
किं भूयः कथ्यतां वीर, किं ते हृदि विवक्षितम् ॥ ४८ ॥

इति श्रीमहाभारते अनुशासनपर्वणि च्यवनोपाख्याने
५०—५१ अध्यायौ ॥



## ॥ गौतमीलुब्धकसंवादः ॥



युधिष्ठिर उवाच ॥

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥ १ ॥

अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह ।
स्वकृते का नु शान्तिः स्याच्छमाद्बहुविधादपि ॥ २ ॥

शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च ।
शर्म नोपलभे वीर, दुष्कृतान्येव चिन्तयन् ॥ ३ ॥

रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम् ।
त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ ४ ॥

अतः कष्टतरं किन्नु मत्कृते यत्पितामहः ।
इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे ॥ ५ ॥

तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः ।
मत्कृते निधनं प्राप्ताः किन्नु कष्टतरं ततः ॥ ६ ॥

वयं च धार्तराष्ट्राश्च कालमन्युवशं गताः ।
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ॥ ७ ॥

इदं तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप ।
इमामवस्थां संप्राप्तं यदसौ त्वां न पश्यति ॥ ८ ॥

सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा ।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितां क्षितौ ॥ ९ ॥

दुर्योधनो हि समरे सहसैन्यः सहानुजः ।
निहतः क्षत्रधर्मेऽस्मिन्दुरात्मा कुलपांसनः ॥ १० ॥

न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ ।
अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ॥ ११ ॥

अहं हि समरे वीर, गमितः शत्रुभिः क्षयम् ।
अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ॥ १२ ॥

न त्वामेवं सुदुःखार्तमद्रक्ष्यं सायकार्दितम् ।
नूनं हि पापकर्माणो धात्रा सृष्टाः स्म हे नृप ॥ १३ ॥

अन्यस्मिन्नपि लोके वै यथा मुच्येय किल्बिषात् ।
तथा प्रशाधि मां राजन्, मम चेदिच्छसि प्रियम् ॥ १४ ॥

भीष्म उवाच ॥

परतन्त्रं कथं हेतुमात्मानमनुपश्यसि ।
कर्मणा हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ १५ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ १६ ॥

गौतमी नाम कौन्तेय, स्थविरा शमसंयुता ।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ १७ ॥

अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः ।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ १८ ॥

स चाब्रवीदय ते स पुत्रहा पन्नगाधम ।
ब्रूहि क्षिप्रं महाभागे, वध्यतां केन हेतुना ॥ १९ ॥

अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा ।
नह्ययं बालहा पापश्चिरं जीवितुमर्हति ॥ २० ॥

गौतम्युवाच ॥

विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक, त्वया ।
को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्यमविचिन्तयन् ॥ २१ ॥

प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ २२ ॥

हत्वा चैनं नामृतः स्यादयं मे
जीवत्यस्मिन्कोऽत्ययः स्यादयं ते ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो-
र्मृत्योर्लोकं को नु गच्छेदनन्तम् ॥ २३ ॥

लुब्धक उवाच ॥

जानाम्यहं देवि गुणागुणज्ञे
सर्वार्तियुक्ता गुरवो भवन्ति ।
स्वस्थस्यैते तूपदेशा भवन्ति
तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ २४ ॥

शमार्थिन कालगतिं वदन्ति
सद्य शुच त्वर्थविदस्त्यजन्ति ।
श्रेय क्षय शोचति नित्यमोहा-
त्तस्माच्छुच मुञ्च हते भुजङ्गे ॥ २५ ॥

गौतम्युवाच ॥

आर्तिर्नैव विद्यतेऽस्मद्विधाना
धर्मात्मान सर्वदा सज्जना हि ।
नित्यायस्तो बालकोऽप्यस्य तस्मा-
दीशे नाह पन्नगस्य प्रमाथे ॥ २६ ॥

न ब्राह्मणाना कोपोऽस्ति कुत कोपाच्च यातना ।
मार्दवात्क्षम्यता साधो, मुच्यतामेष पन्नग ॥ २७ ॥

लुब्धक उवाच ॥

हत्वा लाभ श्रेय एवाव्यय स्या-
ल्लभ्यो लाभ स्याद्बलिभ्य प्रशस्त ।
कालाल्लाभो यस्तु सत्यो भवेत
श्रेयो लाभ कुत्सितेऽस्मिन्न ते स्यात् ॥ २८ ॥

गौतम्युवाच ॥

का नु प्राप्तिर्गृह्यशत्रु निहत्य
का कामाप्ति प्राप्य शत्रु न मुक्त्वा ।
कस्मात्सौम्याह क्षमे नो भुजङ्गे
मोक्षार्थं वा कस्य हेतोर्न कुर्याम ॥ २९ ॥

लुब्धक उवाच ॥

अस्मादेकाद्बहवो रक्षितव्या
नैको बहुभ्यो गौतमि, रक्षितव्य ।
कृतागसं धर्मविदस्त्यजन्ति
सरीसृप पापमिमं जहि त्वम ॥ २० ॥

गौतम्युवाच ॥

नास्मिन्हते पन्नगे पुत्रको मे
सम्प्राप्स्यते लुब्धक, जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये
तस्मात्सर्प लुब्धक, मुञ्च जीवम् ॥ २१ ॥

लुब्धक उवाच ॥

वृत्रं हत्वा देवराट् श्रैष्ठ्यभाग्वै
यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्त चर त्वं
क्षिप्रं सर्प जहि मा भूत्त विशङ्का ॥ २२ ॥

भीष्म उवाच ॥

असकृत्प्रोच्यमानापि गौतमी भुजग प्रति ।
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम ॥ २३ ॥

ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः ।
उत्ससर्ज गिर मन्दा मानुर्षी पाशपीडितः ॥ २४ ॥

सर्प उवाच ॥

को न्वर्जुनक, दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवश यदचूचुदत् ॥ ३५ ॥

तस्यायं वचनाद्दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् ॥ ३६ ॥

लुब्धक उवाच ॥

यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥ ३७ ॥

मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥ ३८ ॥

किल्बिषी चापि मे वध्य किल्बिषी चासि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥ ३९ ॥

सर्प उवाच ॥

सर्वं एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष दोषो मतस्तव ॥ ४० ॥

अथवा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः ।
कार्यकारणसन्देहो भवत्यन्योन्यचोदनात् ॥ ४१ ॥

एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ॥ ४२ ॥

लुब्धक उवाच ॥

कारणं यदि न स्याद्वै न कर्ता स्यास्त्वमप्युत ।
विनाशकारणं त्वं च तस्माद्वध्योऽसि मे मतः ॥ ४३ ॥

असत्यपि कृते कार्ये नेह पन्नग, लिप्यते ।
तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहु मन्यसे ॥ ४४ ॥

सर्प उवाच ॥
कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्समेऽस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ॥ ४५ ॥

यद्यहं कारणत्वेन मतो लुब्धक, तत्वत ।
अन्यः प्रयोगे स्यादत्र किल्विषी जन्तुनाशने ॥ ४६ ॥

लुब्धक उवाच ॥
वध्यस्त्वं मम दुर्बुद्धे, बालघाती नृशंसकृत् ।
भाषसे किं बहु पुनर्वध्यः सन्पन्नगाधम ॥ ४७ ॥

सर्प उवाच ॥
यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहम् ॥ ४८ ॥

भीष्म उवाच ॥
तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥ ४९ ॥

मृत्युरुवाच ॥
प्रचोदितोऽहं कालेन पन्नग, त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥ ५० ॥

यथा वायुर्जलधरान्विकर्षति ततस्ततः ।
तद्वज्जलदवत्सर्प, कालस्याहं वशानुगः ॥ ५१ ॥

सात्त्विका राजसाश्चैव तामसा ये च केचन ।
भावा कालात्मका सर्वे प्रवर्तन्ते ह जन्तुषु ॥ ५२ ॥

जङ्गमा स्थावराश्चैव दिवि वा यदि वा भुवि ।
सर्वे कालात्मका सर्प, कालात्मकमिदं जगत् ॥ ५३ ॥

प्रवृत्तयश्च लोकेऽस्मिंस्तथैव च निवृत्तय ।
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ॥ ५४ ॥

आदित्यश्चन्द्रमा विष्णुरापो वायु शतक्रतु ।
अग्नि ख पृथिवी मित्र पर्जन्यो वसवोऽदिति ॥ ५५ ॥

सरित सागराश्चैव भावाभावौ च पन्नग ।
सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुन पुन ॥ ५६ ॥

एव ज्ञात्वा कथ मा त्व सदोष सर्प, मन्यसे ।
अथ चैव गते दोषे मयि त्वमपि दोषवान् ॥ ५७ ॥

सर्प उवाच ॥

निर्दोष दोषवन्त वा न त्वा मृत्यो, ब्रवीम्यहम् ।
त्वयाह चोदित इति ब्रवीम्येतावदेव तु ॥ ५८ ॥

यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यति ।
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ॥ ५९ ॥

निर्मोक्षस्तस्य दोषस्य मया कार्यो यथा तथा ।
मृत्योरपि न दोष स्यादिति मेऽत्र प्रयोजनम् ॥ ६० ॥

भीष्म उवाच ॥

सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम् ।
नानागसं मां पाशेन सन्तापयितुमर्हसि ॥ ६१ ॥

लुब्धक उवाच ॥

मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम ।
नैव तावददोषत्वं भवति त्वयि पन्नग ॥ ६२ ॥

मृत्युस्त्व चैव हेतुर्हि बालस्यास्य विनाशने ।
उभयं कारणं मन्ये न कारणमकारणम ॥ ६३ ॥

धिङ्मृत्यु च दुरात्मानं क्रूरं दुःखकरं सताम ।
त्वां चैवाहं वधिष्यामि पापं पापस्य कारणम ॥ ६४ ॥

मृत्युरुवाच ॥

विवशौ कालवशगावावां निर्दुष्टकारिणौ ।
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ॥ ६५ ॥

लुब्धक उवाच ॥

युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ ।
हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुम ॥ ६६ ॥

मृत्युरुवाच ॥

या काचिदेव चेष्टा स्यात्सर्वा कालप्रचोदिता ।
पूर्वमेवैतदुक्तं हि मया लुब्धक, कालतः ॥ ६७ ॥

तस्मादुभौ कालवशावावां निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ त्वया लुब्धक, कर्हिचित ॥ ६८ ॥

भीष्म उवाच ॥

अथोपगम्य कालस्तु तस्मिन्धर्मार्थसशये ।
अब्रवीत्पन्नग मृत्यु लुब्ध चार्जुनक तदा ॥ ६९ ॥

काल उवाच ॥

न ह्यह नाप्यय मृत्युर्नाय लुब्धक, पन्नग ।
किल्बिषी जन्तुमरणे न वय हि प्रयोजका ॥ ७० ॥

अकरोद्यदय कर्म तन्नोर्जुनक, चोदकम् ।
विनाशहेतुर्नान्योऽस्य वध्यतेऽय स्वकर्मणा ॥ ७१ ॥

यदनेन कृत कर्म तेनाय निधन गत ।
विनाशहेतु कर्मास्य सर्वे कर्मवशा वयम् ॥ ७२ ॥

कर्मदायादवाँल्लोक कर्मसबन्धलक्षण ।
कर्माणि चोदयन्तीह यथान्योन्य तथा वयम ॥ ७३ ॥

यथा मृत्पिण्डत कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृत कर्म मानव प्रतिपद्यते ॥ ७४ ॥

यथा छायातपौ नित्य सुसबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च सबद्धावात्मकर्मभि ॥ ७५ ॥

एव नाह न वै मृत्युर्न सर्पो न तथा भवान ।
न चेय ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥ ७६ ॥

तस्मिस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ।
स्वकर्मप्रत्ययाँल्लोकान्मत्वार्जुनकमब्रवीत् ॥ ७७ ॥

गौतम्युवाच ॥

नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मभिरयं बालः कालेन निधनं गतः ॥ ७८ ॥

मया च तत्कृत कर्म येनायं मे मृतः सुतः ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक, पन्नगम् ॥ ७९ ॥

भीष्म उवाच ॥

ततो यथागत जग्मुर्मृत्युः कालोऽथ पन्नगः ।
अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥ ८० ॥

एतच्छ्रुत्वा शमं गच्छ मा भूः शोकपरो नृप ।
स्वकर्मप्रत्ययाँल्लोकान्सर्वे गच्छन्ति वै नृप ॥ ८१ ॥

नैव त्वया कृतं कर्म नापि दुर्योधनेन वै ।
कालेनैतत्कृतं विद्धि निहता येन पार्थिवाः ॥ ८२ ॥

वैशम्पायन उवाच् ॥

इत्येतद्वचन श्रुत्वा बभूव विगतज्वरः ।
युधिष्ठिरो महातेजाः पप्रच्छेदं च धर्मवित् ॥ ८३ ॥

इति श्रीभारत आनुशासनिक पर्वणि
प्रथमोऽध्यायः ॥

# ॥ परीक्षित्सर्पदंशनम् ॥



परीक्षिदपि राजर्षिः प्रजाः सर्वाः सुधार्मिकः ।
अपालयच्च राजेन्द्रो षष्टिर्वर्षाण्यतन्द्रितः ।
बभूव मृगयाशीलो जगाम च वनं महत् ॥ १ ॥

विद्धं मृगं विचिन्वानो मध्याह्ने भूपतिः स्वयम ।
तृषितश्च परिश्रान्तः क्षुधितश्चोत्तरासुतः ॥ २ ॥

राजा धर्मेण संतप्तो ददर्श मुनिमन्तिके ।
ध्याने स्थितं मुनिं राजा जलं पप्रच्छ चातुरः ॥ ३ ॥

नोवाच किञ्चिन्मौनस्थश्चुकोप नृपतिस्तदा ।
मृतं सर्पं तदादाय धनुष्कोट्या तृषातुरः ।
कलिनाविष्टचित्तस्तु कण्ठे तस्य न्यवेशयत् ॥ ४ ॥

आरोपिते तथा सर्पे नोवाच मुनिसत्तमः ।
न चचाल समाधिस्थो राजापि स्वगृहं गतः ॥ ५ ॥

तस्य पुत्रोऽतितेजस्वी गविजातो महातपाः ।
महाशक्तोऽथ शुश्राव क्रीडमानो वनान्तिके ॥ ६ ॥

मित्राण्याहुश्च तत्पुत्रं पितुः कण्ठे तवाधुना ।
लम्बितोऽस्ति मृतः सर्पः केनापीति मुनीश्वर ॥ ७ ॥

तेषां तद्वचनं श्रुत्वा चुकोपातिशयं तदा ।
शशाप नृपतिं क्रुद्धो गृहीत्वाशु करे जलम् ॥ ८ ॥

पितुः कण्ठेऽद्य मे येन विनिक्षिप्तो मृतोरगः ।
तक्षकः सप्तरात्रेण तं दशेत्पापपूरुषम् ॥ ९ ॥

मुने शिष्योऽथ राजानं समुपेत्य गृहे स्थितम् ।
शापं निवेदयामास मुनिपुत्रेण चार्पितम् ॥ १० ॥

अभिमन्युसुतः श्रुत्वा शापं दत्तं द्विजेन वै ।
अनिवार्यं च विज्ञाय मन्त्रिवृद्धानुवाच ह ॥ ११ ॥

शप्तोऽहं द्विजरूपेण मम द्वेषादसंशयम् ।
किं विधेयं मयामात्या उपायश्चिन्त्यतामिह ॥ १२ ॥

मृत्युः किलानिवार्योऽसौ वदन्ति वेदवादिनः ।
यत्नस्तथापि शास्त्रोक्तः कर्तव्यः सर्वदा बुधैः ॥ १३ ॥

उपायवादिनः केचित्प्रवदन्ति मनीषिणः ।
विज्ञोपायेन सिध्यन्ति कार्याणि नेतरस्य च ॥ १४ ॥

मणिमन्त्रौषधीनां वै प्रभावाः खलु दुर्विदाः ।
न भवेदिति किं तैस्तु मणिमद्भिः सुसाधितैः ॥ १५ ॥

सर्पदष्टा पुरा भार्या मुनेः सञ्जीविता मृता ।
दत्त्वार्धमायुषस्तेन मुनिना मा वराप्सराः ॥ १६ ॥

भवितव्ये न विश्वासः कर्तव्यः सर्वथा बुधैः ।
प्रत्यक्षं तत्र दृष्टान्तं पश्यन्तु सचिवाः किल ॥ १७ ॥

दिवि कोऽपि पृथिव्यां वा दृश्यते पुरुष कश्चित् ।
दैवे मतिं समाधाय यस्तिष्ठेत्तु निरुद्यम ॥ १८ ॥

विरक्तस्तु यतिर्भूत्वा भिक्षार्थं याति सर्वथा ।
गृहस्थाना गृहे काममाहूतो वाथवान्यथा ॥ १९ ॥

यदृच्छयोपपन्न च क्षिप्त केनापि वा मुखे ।
उद्यमेन विना चास्यादुदरे सविशेत्कथम ॥ २० ॥

प्रयत्नश्चोद्यमे कार्यो यदा सिद्धि न याति चेत् ।
तदा दैव स्थित चेति चित्तमालम्बयेद्बुध ॥ २१ ॥

मन्त्रिण ऊचु ॥

को मुनिर्येन दत्त्वार्धमायुषो जीविता प्रिया ।
कथ मृता महाराज, तन्नो ब्रूहि सविस्तरम ॥ २२ ॥

राजोवाच ॥

भृगोर्भार्या वरारोहा पुलोमा नाम सुन्दरी ।
तस्यास्तु च्यवनो नाम मुनिर्जातोऽतिविश्रुत ॥ २३ ॥

च्यवनस्य च शर्याते सुकन्या नाम सुन्दरी ।
तस्या जज्ञे सुत श्रीमान्प्रमतिर्नाम विश्रुत ॥ २४ ॥

प्रमतेस्तु प्रिया भार्या प्रतापी नाम विश्रुता ।
रुरुर्नाम सुतो जातस्तथा परमतापस ॥ २५ ॥

तस्मिश्च समये कश्चित्स्थूलकेशश्च विश्रुत ।
बभूव तपसा युक्तो धर्मात्मा सत्यसम्मत ॥ २६ ॥

एतस्मिन्नन्तरे मान्या मेनका च वराप्सरा ।
क्रीडा चक्रे नदीतीरे सर्वलोकातिसुन्दरी ॥ २७ ॥

गर्भं विश्वावसोः प्राप्य निर्गता वरवर्णिनी ।
स्थूलकेशाश्रमे गत्वा विससर्ज वराप्सरा ॥ २८ ॥

कन्यका च नदीतीरे त्रिषु लोकेषु सुन्दरीम् ।
दृष्ट्वाऽनाथा तदा कन्या जग्राह मुनिसत्तम ॥ २९ ॥

पुपोष स्थूलकेशस्तु नाम्ना चक्रे प्रमद्वराम् ।
सा काले यौवनं प्राप्ता सर्वलक्षणसंयुता ।
रुरुर्दृष्ट्वाथ तां बालां कामबाणार्दितो ह्यभूत् ॥ ३० ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

परीक्षित उवाच ॥

कामार्तः स मुनिर्गत्वा रुरुः सुप्तो निजाश्रमे ।
पिता पप्रच्छ दीनं तं किं रुरो विमना असि ॥ १ ॥

स तमाहातिकामार्तः स्थूलकेशस्य चाश्रमे ।
कन्या प्रमद्वरा नाम सा मे भार्या भवेदिति ॥ २ ॥

स गत्वा प्रमतिस्तूर्णं स्थूलकेशं महामुनिम् ।
प्रणम्य सुमुखं कृत्वा ययाचे तां वराननाम् ॥ ३ ॥

ददौ वाच स्थूलकेश प्रदास्यामि शुभेऽहनि ।
विवाहार्थं च सभार रचयामासतुर्वने ॥ ४ ॥

प्रमति स्थूलकेशश्च विवाहार्थं समुद्यतौ ।
बभूवतुर्महात्मानौ समीपस्थौ तपोवने ॥ ५ ॥

तस्मिन्नवसरे कन्या रममाणा गृहाङ्गणे ।
प्रसुप्त पन्नग पादेनास्पृशच्चारुलोचना ॥ ६ ॥

दष्टा तु पन्नगेनाथ सा ममार वराङ्गना ।
कोलाहलस्तदा जातो मृता दृष्ट्वा प्रमद्वराम ॥ ७ ॥

मिलिता मुनय सर्वे चुक्रुशु शोकसयुता ।
भूमौ ता पतिता दृष्ट्वा पिता तस्यातिदु खित ॥ ८ ॥

रुरोद विगतप्राणा दीप्यमाना सुतेजसा ।
रुरु श्रुत्वा तदाक्रन्द दर्शनार्थं समागत ॥ ९ ॥

ददर्श पतिता तत्र सजीवामिव कामिनीम् ।
रुदन्त स्थूलकेश च दृष्ट्वान्यानृषिसत्तमान ॥ १० ॥

रुरु स्थानाद्बहिर्गत्वा रुरोद विरहाकुल ।
अहो दैवेन सर्पोऽय प्रेषित परमाद्भुत ॥ ११ ॥

मम शर्मविघाताय दु सहतुरय किल ।
कि करोमि क गच्छामि मृता मे प्राणवल्लभा ॥ १२ ॥

न वै जीवितुमिच्छामि वियुक्त प्रिययानया ।
नालिङ्गिता वरारोहा न मया चुम्बिता मुखे ॥ १३ ॥

न पाणिग्रहण प्राप्त मन्दभाग्येन सर्वथा ।
लाजहोमस्तथा चाग्नौ न कृतस्त्वनया सह ॥ १४ ॥

मानुष्य धिगिद काम गन्छन्त्वद्य ममासव ।
दु खितस्य न वा मृत्युर्वाञ्छित समुपैति हि ॥ १५ ॥

सुख तर्हि कथ दिव्यमाप्यते भुवि वाञ्छितम् ।
प्रपतामि ह्रदे घोरे पावके प्रपताम्यहम् ॥ १६ ॥

विपमग्निं गले पाश कृत्वा प्राणास्त्यजाम्यहम् ।
विलप्यैव रुरुस्तत्र विचार्य मनसा पुन ॥ १७ ॥

उपाय चिन्तयामास स्थितस्तस्मिन्नदीतटे ।
मरणात्किं फल मे स्यादात्महत्या दुरत्यया ॥ १८ ॥

दु खितश्च पिता मे स्याज्जननी चातिदु खिता ।
दैवस्तुष्टो भवेत्काम दृष्ट्वा मा त्यक्तजीवितम् ॥ १९ ॥

सर्व प्रमुदितश्च स्यान्मत्क्षये नात्र सशय ।
उपकार प्रियाया क परलोके भवेदपि ॥ २० ॥

मृते मय्यात्मघातेन विरहार्त्यार्डितेऽपि च ।
परलोके प्रिया सापि न मे स्यादात्मघातिन ॥ २१ ॥

एतदर्थ मृते दोषा मयि नैवामृते पुन ।
विमृश्यैव रुरुर्नद्य स्नात्वाचम्य शुचिस्मित ॥ २२ ॥

अब्रवीद्वचन कृत्वा जल पाणावसौ मुनि ।
यन्मया सुकृत किञ्चित्कृत देवार्चनादिकम् ॥ २३ ॥

गुरवः पूजिता भक्त्या हुतं जप्तं तपः कृतम्।
अधीतास्त्वखिला वेदा गायत्री संस्मृता यदि ॥ २४ ॥

रविराराधितस्तेन सञ्जीवतु मम प्रिया।
यदि जीवेन्न मे कान्ता त्यजे प्राणानहन्ततः।
इत्युक्त्वा तज्जलं भूमौ चिक्षेपाराध्य देवताः ॥ २५ ॥

एवं विलपतस्तस्य भार्यया दुःखितस्य च।
देवदूतस्तदाभ्येत्य वाक्यमाह रुरुं ततः ॥ २६ ॥

देवदूत उवाच ॥

मा कार्षीः साहसं ब्रह्मन्, कथं जीवेन्मृता प्रिया।
गतायुरेषा सुश्रोणी गन्धर्वाप्सरसोः सुता ॥ २७ ॥

अन्यां कामय चार्वङ्गीं मृतेयं चाविवाहिता।
किं रोदिषि सुदुर्बुद्धे, का प्रीतिस्तेऽनया सह ॥ २८ ॥

रुरुरुवाच ॥

देवदूत, न चान्यां वै वरिष्याम्यहमङ्गनाम्।
यदि जीवेन्न जीवेद्वा मर्तव्यं चाधुना मया ॥ २९ ॥

राजोवाच ॥

विदित्वेति हठं तस्य देवदूतो मुदान्वितः।
उवाच वचनं तस्य सत्यं चातिमनोहरम् ॥ ३० ॥

उपायं शृणु विप्रेन्द्र, विहितं यत्सुरैः पुरा।
आयुषोऽर्धप्रदानेन जीवयाशु प्रमद्वराम् ॥ ३१ ॥

न पाणिग्रहणं प्राप्तं मन्दभाग्येन सर्वथा ।
लाजहोमस्तथा चाग्नौ न कृतस्त्वनया सह ॥ १४ ॥

मानुष्यं धिगिदं कामं गच्छन्त्वद्य ममासवः ।
दुःखितस्य न वा मृत्युर्वाञ्छित. समुपैति हि ॥ १५ ॥

सुखं तर्हि कथं दिव्यमाप्यते भुवि वाञ्छितम् ।
प्रपतामि ह्रदे घोरे पावके प्रपताम्यहम् ॥ १६ ॥

विषमग्निं गले पाशं कृत्वा प्राणांस्त्यजाम्यहम् ।
विलप्यैवं रुरुस्तत्र विचार्य मनसा पुनः ॥ १७ ॥

उपायं चिन्तयामास स्थितस्तस्मिन्नदीतटे ।
मरणात्किं फलं मे स्यादात्महत्या दुरत्यया ॥ १८ ॥

दुःखितश्च पिता मे स्याज्जननी चातिदुःखिता ।
दैवस्तुष्टो भवेत्काम दृष्ट्वा मां त्यक्तजीवितम ॥ १९ ॥

सर्वः प्रमुदितश्च स्यान्मत्क्षये नात्र संशयः ।
उपकारः प्रियायाः कः परलोके भवेदपि ॥ २० ॥

मृते मय्यात्मघातेन विरहात्पीडितेऽपि च ।
परलोके प्रिया सापि न मे स्यादात्मघातिनः ॥ २१ ॥

एतदर्थं मृते दोषा मयि नैवामृते पुनः ।
विमृश्यैवं रुरुस्तत्र स्नात्वाचम्य शुचिस्मितः ॥ २२ ॥

अब्रवीद्वचनं कृत्वा जलं पाणावसौ मुनिः ।
यन्मया सुकृतं किञ्चित्कृत देवार्चनादिकम् ॥ २३ ॥

गुरव पूजिता भक्त्या हुत जप्त तप कृतम् ।
अधीतास्त्वखिला वेदा गायत्री सस्मृता यदि ॥ २४ ॥

रविराराधितस्तेन सञ्जीवतु मम प्रिया ।
यदि जीवेन्न मे कान्ता त्यजे प्राणानहन्तत ।
इत्युक्त्वा तज्जल भूमौ चिक्षेपाराध्य देवता ॥ २५ ॥

एव विलपतस्तस्य भार्यया दु खितस्य च ।
देवदूतस्तदाभ्येत्य वाक्यमाह रुरु तत ॥ २६ ॥

देवदूत उवाच ॥

मा कार्षी साहस ब्रह्मन , कथ जीवेन्मृता प्रिया ।
गतायुरेपा सुश्रोणी गन्धर्वाप्सरसो सुता ॥ २७ ॥

अन्या कामय चार्वङ्गी मृतेय चाविवाहिता ।
किं रोदिपि सुदुर्बुद्धे, का प्रीतिस्तेऽनया सह ॥ २८ ॥

रुरुरुवाच ॥

देवदूत, न चान्या वै वरिष्याम्यहमङ्गनाम ।
यदि जीवेन्न जीवेद्वा मर्तव्य चाधुना मया ॥ २९ ॥

राजोवाच ॥

विदित्वेति हठ तस्य देवदूतो मुदान्वित ।
उवाच वचन तथ्य सत्य चातिमनोहरम ॥ ३० ॥

उपाय शृणु विप्रेन्द्र, विहित यत्सुरै पुरा ।
आयुषोऽर्धप्रदानेन जीवयाशु प्रमद्वराम् ॥ ३१ ॥

रुरुरुवाच ॥

आयुषोऽर्धं प्रयच्छामि कन्यायै नात्र संशयः ।
अद्य प्रत्यागतप्राणा प्रोत्तिष्ठतु मम प्रिया ॥ ३२ ॥

विश्वावसुस्तदा तत्र विमानेन समागतः ।
ज्ञात्वा पुत्रीं मृतां चाशु स्वर्गलोकात्प्रमद्वराम् ॥ ३३ ॥

ततो गन्धर्वराजश्च देवदूतश्च सत्तमः ।
धर्मराजमुपेत्येदं वचनं प्रत्यभाषत ॥ ३४ ॥

धर्मराज. रुरोः पत्नी सुता विश्वावसोस्तथा ।
मृता प्रमद्वरा कन्या दृष्टा सर्पेण चाधुना ॥ ३५ ॥

सा रुरोरायुषोऽर्धेन भर्तुकामस्य सूर्यज ।
समुत्तिष्ठतु तन्वङ्गी व्रतचर्याप्रभावत. ॥ ३६ ॥

धर्म उवाच ॥

विश्वावसुसुतां कन्यां देवदूत, यदीच्छसि ।
उत्तिष्ठत्वायुषोऽर्धेन रुरुं गत्वा त्वमर्पय ॥ ३७ ॥

राजोवाच ॥

एवमुक्तस्ततो गत्वा जीवयित्वा प्रमद्वराम् ।
रुरोः समर्पयामास देवदूतस्त्वरान्वितः ।
ततः शुभेऽह्नि विधिना रुरुणापि विवाहिता ॥ ३८ ॥

इत्थं चोपाययोगेन मृताप्युज्जीविता तदा ।
उपायस्तु प्रकर्तव्यः सर्वथा शास्त्रसंमतः ॥ ३९ ॥

मणिमन्त्रौषधीभिश्च विविधैःप्राणरक्षणे ।
इत्युक्त्वा सचिवान्राजा कल्पयित्वा सुरक्षकान् ॥ ४० ॥

कारयित्वाऽथ प्रासादं सप्तभूमिकमुत्तमम् ।
आरुरोहोत्तरासूनु सचिवै सह तत्क्षणम् ॥ ४१ ॥

मणिमन्त्रधरा शूरा स्थापितास्तत्र रक्षणे ।
प्रेषयामास भूपालो मुनिं गौरमुखं तत ॥ ४२ ॥

प्रमादार्थं सेवकस्य क्षमस्वेति पुन पुन ।
ब्राह्मणान्सिद्धमन्त्रांश्च रक्षणार्थमितस्तत ॥ ४३ ॥

मन्त्रिपुत्र स्थितस्तत्र स्थापयामास दन्तिन ।
न कश्चिदारुहेत्तत्र प्रासादे चातिरक्षिते ॥ ४४ ॥

वातोऽपि न चरेत्तत्र प्रवेशे विनिवार्यते ।
भक्ष्यभोज्यादिकं राजा तत्रस्थश्च चकार स ॥ ४५ ॥

स्नानसन्ध्यादिकं कर्म तत्रैव विनिवर्त्य च ।
राजकार्याणि सर्वाणि तत्रस्थश्चाकरोन्नृप ॥ ४६ ॥

मन्त्रिभि सह सम्मन्त्र्य गणयन्दिवसानपि ।
कश्चिच्च कश्यपो नाम ब्राह्मणो मन्त्रिसत्तम ॥ ४७ ॥

शुश्राव च तथा शापं प्राप्तं राज्ञा महात्मना ।
स धनार्थी द्विजश्रेष्ठ कश्यप समचिन्तयत् ॥ ४८ ॥

प्रयामि तत्र यत्रास्ते शप्तो राजा द्विजेन ह ।
इति कृत्वा मतिं विप्र स्वगृहान्निर्गत पथि ॥ ५९ ॥

इति द्वितीयोऽध्याय ।

## तृतीयोऽध्यायः ॥

---

सूत उवाच ॥

तस्मिन्नेव दिने नाम्ना तक्षकस्तु नृपोत्तमम् ।
शप्तं ज्ञात्वा गृहात्तूर्णं निरगात पुरुषोत्तम ॥ १ ॥

वृद्धब्राह्मणवेषेण तक्षकः पथि निर्गतः ।
अपश्यत्कश्यपं मार्गे व्रजन्तं नृपतिं प्रति ॥ २ ॥

तमपृच्छत्पन्नगोऽसौ ब्राह्मणं मन्त्रवादिनम् ।
क भवांस्त्वरितो याति किञ्च कार्यं चिकीर्षति ॥ ३ ॥

कश्यप उवाच ॥

परीक्षितं नृपश्रेष्ठं तक्षकश्च प्रधक्ष्यति ।
तत्राहं त्वरितो यामि नृपं कर्तुमपज्वरम् ॥ ४ ॥

मन्त्रोऽस्ति मम विप्रेन्द्र, विषनाशकरः किल ।
जीवयिष्याम्यहं तं वै जीवितव्येऽधुना किल ॥ ५ ॥

तक्षक उवाच ॥

अहं स पन्नगो ब्रह्मन्, तं धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम् ॥ ६ ॥

कश्यप उवाच ॥

अहं दष्टं त्वया सर्प, नृपं शप्तं द्विजेन वै ।
जीवयिष्याम्यसन्देहं काम मन्त्रबलेन वै ॥ ७ ॥

तक्षक उवाच ॥

यदि त्वं जीवितुं यामि मया दष्टं नृपोत्तमम ।
मन्त्रशक्तिवलं विप्र दर्शय त्वं ममानघ ॥ ८ ॥

दक्ष्याम्येनञ्च न्यग्रोध विषदंष्ट्राभिरद्य वै ।

कश्यप उवाच ॥

जीवयिष्ये त्वया दष्टं दग्ध वा पन्नगोत्तम ॥ ९ ॥

सूत उवाच ॥

अदशत्पन्नगो वृक्ष भस्मसाच्च चकार तम ।
उवाच कश्यपं भूयो जीवयैनं द्विजोत्तम ॥ १० ॥

दृष्ट्वा भस्मीकृतं वृक्षं पन्नगेन विषाग्निना ।
सर्वं भस्म समावृत्य कश्यपो वाक्यमब्रवीत् ॥ ११ ॥

पश्य मन्त्रवल मेऽद्य न्यग्रोधं पन्नगोत्तम ।
जीवयाम्यद्य वृक्षं वै पश्यतस्ते महाविष ॥ १२ ॥

इत्युक्त्वा जलमादाय कश्यपो मन्त्रवित्तमः ।
सिषेच भस्मराशि तं मन्त्रितेनैव वारिणा ॥ १३ ॥

तद्वारिसेचनाज्जातो न्यग्रोधः पूर्ववच्छुभः ।
विस्मयं तक्षकः प्राप्तो दृष्ट्वा त जीवितं नगम ॥ १४ ॥

तमाह कश्यप नागः किमर्थं ते परिश्रमः ।
सपादयामि त कामं ब्रूहि याञ्छवाञ्छितम ॥ १५ ॥

कश्यप उवाच ॥

वित्तार्थी नृपतिं मत्वा अत्र पन्नग, निस्सृत ।
गृहादहश्चोपकर्तुं विद्यया नृपसत्तमम् ॥ १६ ॥

तक्षक उवाच ॥

वित्त गृहाण विप्रेन्द्र, यावदिच्छसि पार्थिवात् ।
ददामि स्वगृह याहि सकामोऽह भवाम्यत ॥ १७ ॥

सूत उवाच ॥

तच्छ्रुत्वा वचन तस्य कश्यप परमार्थवित् ।
चिन्तयामास मनसा किं करोमि पुन पुन ॥ १८ ॥

धन गृहीत्वा स्वगृह प्रयामि यद्यह पुन ।
भविष्यति न मे कीर्तिर्लोके लोभसमाश्रयात् ॥ १९ ॥

जीवितेऽथ नृपश्रेष्ठे कीर्ति स्यादचला मम ।
धनप्राप्तिश्च बहुधा भवेत्पुण्यश्च जीवनात् ॥ २० ॥

रमणीय यश काम धिग्धन यशसा विना ।
सर्वस्व रघुणा पूर्व दत्त विप्राय कीर्तये ॥ २१ ॥

हरिश्चन्द्रेण कर्णेन कीर्त्यर्थ बहुविस्तरम् ।
उपेक्षेय कथ भूप दह्यमान विषाग्निना ॥ २२ ॥

जीवितेऽस्मिन्मया राज्ञि सुख सर्वजनस्य च ।
अराजके प्रजानाशो भविता नात्र सशय ॥ २३ ॥

प्रजानाशस्य पाप मे भविष्यति मृते नृपे ।
अपकीर्तिश्च लोकेषु धनलोभाद्भविष्यति ॥ २४ ॥

इति संचिन्त्य मनसा ध्यानं कृत्वा स कश्यपः ।
गतायुषं च नृपतिं ज्ञातवान् बुद्धिमत्तरः ॥ २५ ॥

आसन्नमृत्युं राजानं ज्ञात्वा ध्यानेन कश्यपः ।
गृहं ययौ स धर्मात्मा धनमादाय तक्षकात् ॥ २६ ॥

निवर्त्य कश्यपं तक्षः सप्तमे दिवसे नृपम् ।
हन्तुकामो जगामाशु नगरं नागमाह्वयम् ॥ २७ ॥

शुश्राव नगरस्यान्ते प्रासादस्थं परीक्षितम् ।
मणिमन्त्रौषधैः कामं रक्ष्यमाणमतन्द्रितम् ॥ २८ ॥

चिन्ताविष्टस्तदा नागो विप्रशापभयाकुलः ।
चिन्तयामास योगेन प्रविशेयं गृहं कथम् ॥ २९ ॥

वध्ययामि कथं चैनं राजानं पापकारिणम् ।
विप्रशापाद्धतं मूढं विप्रपीडाकरं शठम् ॥ ३० ॥

पाण्डवानां कुले जातः कोऽपि नैतादृशो भवेत् ।
तापसस्य गले येन मृतः सर्पो निवेशितः ॥ ३१ ॥

कृत्वा विगर्हितं कर्म जानन्कालगतिं नृपः ।
रक्षकान्भवने कृत्वा प्रासादमभिगम्य च ॥ ३२ ॥

मृत्युं वञ्चयते राजा वर्ततेऽत्र निराकुलः ।
तं कथं धक्षयिष्यामि विप्रवाक्येन चोदितः ॥ ३३ ॥

न जानाति च मन्दात्मा मरणं ह्यनिवर्तनम् ।
तेनासौ रक्षकान्स्थाप्य सौधारूढोऽत्र मोदते ॥ ३४ ॥

यदि वै विहितो मृत्युर्दैवेनामिततेजसा ।
स कथं परिवर्तेत कृतैर्यत्नैस्तु कोटिभिः ॥ ३५ ॥

पाण्डवस्य च दायादो जानन्मृत्यु गतं नृपः ।
जीवने मतिमास्थाय स्थितः स्थाने निराकुलः ॥ ३६ ॥

दानपुण्यादिकं राजा कर्तुमर्हति सर्वथा ।
धर्मेण हन्यते व्याधिर्येनायुः शाश्वतं भवेत् ॥ ३७ ॥

नो चेन मृत्युविधि कृत्वा स्नानदानादिकाः क्रियाः ।
मरणं स्वर्गलोकाय नरकायान्यथा भवेत् ॥ ३८ ॥

द्विजपीडाकृतं पापं पृथग्वास्य च भूपतेः ।
विप्रशापस्तथा घोर आसन्ने मरणे किल ॥ ३९ ॥

न कोऽपि ब्राह्मणः पार्श्वे य एवं प्रतिबोधयेत् ।
वेधसा विहितो मृत्युरनिवार्यस्तु सर्वथा ॥ ४० ॥

इति संचिन्त्य सर्पोऽसौ स्वान्नागान्निकटे स्थितान् ।
कृत्वा तापसवेषांस्तान्प्राहिणोत्सुभुजङ्गमान् ॥ ४१ ॥

फलमूलादिकं गृह्य राज्ञे नागोऽथ तक्षकः ।
स्वयं च कीटरूपेण फलमध्ये ममार ह ॥ ४२ ॥

निर्गतास्ते तदा नागाः फलान्यादाय मत्वराः ।
ते राजभवनं प्राप्य स्थिताः प्रासादसन्निधौ ॥ ४३ ॥

रक्षकास्तापसान्दृष्ट्वा पप्रच्छुस्तच्चिकीर्षितम् ।
ऊचुस्ते भूपतिं द्रष्टुं प्राप्ताः स्मोऽत्र तपोधनाः ॥ ४४ ॥

अभिमन्युसुतं वीर कुलार्कं चारुदर्शनम् ।
परिवर्धयितु प्राप्ता मन्त्रैराथर्वणैस्तथा ॥ ४५ ॥

निवेदयध्व राजान दर्शनार्थागतान्मुनीन ।
कृत्वाभिषेकान्यास्यामो दत्त्वाभीष्टफलानि च ॥ ४६ ॥

भारतानां कुले क्वापि न दृष्टा द्वाररक्षका ।
न श्रुत तापसानां तु राज्ञोऽसंदर्शन किल ॥ ४७ ॥

आरोहामो वय तत्र यत्र राजा परीक्षित ।
आशीर्भिर्वर्धयित्वैनं दत्त्वाज्ञा प्रव्रजामहे ॥ ४८ ॥

सूत उवाच ॥

इत्याकर्ण्य वचस्तेषा तापसानां तु रक्षका. ।
प्रत्यूचुस्तान्द्विजान्मत्वा निदेश भूपतेर्यथा ॥ ४९ ॥

नाद्य वो दर्शन विप्रा, राज्ञः स्यादिति नो मतिः ।
श्वः सर्वतापसैरत्र त्वागन्तव्य नृपालये ॥ ५० ॥

अनारोह्यस्तु प्रासादो विप्राणां मुनिसत्तमाः ।
विप्रशापभयाद्राज्ञा विहितोऽस्ति न संशयः ॥ ५१ ॥

तदोचुस्तानथो विप्रा. फलमूलजलानि च ।
विप्राशिषश्च राज्ञेऽथ प्राहयन्तु सुरक्षकाः ॥ ५२ ॥

ते गत्वा नृपतिं प्रोचुस्तापसानागताश्चनाः ।
राजोवाचानयध्व वै फलमूलादिक च यत ॥ ५३ ॥

पृच्छध्व तापसान्कार्यं प्रातरागमन पुन ।
प्रणाम कथयध्व मे नाद्य सन्दर्शन मम ॥ ५४ ॥

ते गत्वाथ समादाय फलमूलादिक च यत् ।
राज्ञे समर्पयामासुर्बहुमानपुर सरम ॥ ५५ ॥

गतेषु तेषु नागेषु विप्रवेषावृतेषु च ।
फलान्यादाय राजासौ सचिवानिदमब्रवीत् ॥ ५६ ॥

सुहृदो भक्षयन्त्वद्य फलान्येतानि सर्वश ।
अद्ययह चैकमेतद्वै फल विप्रार्पित महत ॥ ५७ ॥

इत्युक्त्वा तत्फल दत्वा सुहृद्भ्यश्चोत्तरासुत ।
करे कृत्वा फल पक्व ददार नृपति स्वयम ॥ ५८ ॥

विदारित फल राज्ञा तत्र कृमिरभूदणु ।
सकृष्णनयनस्ताम्रो दृष्टो भूपतिना स्वयम ॥ ५९ ॥

त दृष्ट्वा नृपति प्राह सचिवान्विस्मितानथ ।
अस्तमभ्येति सविता निपादद्य न मे भयम ॥ ६० ॥

अङ्गीकरोमि त शाप कृमिको मा दशत्वयम ।
एवमुक्त्वा स राजेन्द्रो ग्रीवाया सन्यवेशयत ॥ ६१ ॥

अस्त याते दिवानाथे धृत कण्ठेऽथ कीटक ।
तक्षकस्तु तदा जात कालरूपो भयानक ॥ ६२ ॥

राजा सवेष्टितस्तेन दष्टश्चापि महीपति ।
मन्त्रिणो विस्मय प्राप्ता रुरुदुर्भृशदु खिता ॥ ६३ ॥

घोररूपमहिं वीक्ष्य दुद्रुवुस्ते भयार्दिता ।
चुक्रुशू रक्षका· सर्वे हाहाकारो महानभूत् ॥ ६४ ॥

वेष्टितो भोगिभोगेन विनष्टबहुपौरुप. ।
नोवाच नृपतिः किंचिन्न चचालोत्तरासुतः ॥ ६५ ॥

उत्थिताग्निशिखा घोरा विपजा तक्षकाननात् ।
प्रजज्वाल नृपं त्वाशु गतप्राणं चकार ह ॥ ६६ ॥

हृत्वाशु जीवितं राज्ञस्तक्षको गगने गत. ।
जगद्दग्धन्तु कुर्वाणं ददृशुस्त जना इह ॥ ६७ ॥

स पपात गतप्राणो राजा दग्ध इव द्रुमः ।
चुक्रुशुश्च जना· सर्वे मृत दृष्ट्वा नराधिपम ॥ ६८ ॥

इति तृतीयोऽध्यायः ॥

इति श्रीदेवीभागवते महापुराणे द्वितीयस्कन्धे
८—१० अध्यायाः ॥

## ॥ तापत्रयवर्णनम् ॥

श्रीपराशर उवाच ॥

आध्यात्मिकादि मैत्रेय, ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥ १ ॥

आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा ।
शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ॥ २ ॥

शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः ।
गुल्मार्शः श्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥ ३ ॥

तथाक्षिरोगातिसारकुष्टाङ्गामयसंज्ञितैः ।
भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ ४ ॥

कामक्रोधभयद्वेपलोभमोहविषादजः ।
शोकासूयावमानेर्ष्यामात्सर्यादिमयस्तथा ॥ ५ ॥

मानसोऽपि द्विजश्रेष्ठ, तापो भवति नैकधा ।
इत्येवमादिभिर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥ ६ ॥

मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः ।
सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ॥ ७ ॥

शीतावतोष्णवर्षाम्बुवैद्युतादिसमुद्भवः ।
तापो द्विजवर, श्रेष्ठैः कथ्यते चाधिदैविकः ॥ ८ ॥

गर्भजन्मजराज्ञानमृत्युनारकज तथा ।
दु ख सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ ९ ॥

सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते ।
उल्वसवेष्टितो भुग्नपृष्ठग्रीवास्थिसहति ॥ १० ॥

अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनै ।
अत्यन्ततापैरत्यर्थं वर्धमानातिवेदन ॥ ११ ॥

प्रसारणाकुञ्चनादौ नाङ्गाना प्रभुरात्मन ।
शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडित ॥ १२ ॥

निरुच्छ्वास सचैतन्य स्मरन् जन्मशतान्यथ ।
आस्ते गर्भेऽतिदु खेन निजकर्मनिबन्धन ॥ १३ ॥

जायमान पुरीषासृङ्मूत्रशुक्राविलानन ।
प्राजापत्येन वातेन पीड्यमानास्थिबन्धन ॥ १४ ॥

अधोमुखो वै क्रियते प्रबलै सूतिमारुतै ।
क्लेशान्निष्क्रान्तिमाप्नोति जठरान्मातुरातुर ॥ १५ ॥

मूर्च्छामवाप्य महतीं सस्पृष्टो बाह्यवायुभि ।
विज्ञानभ्रशमाप्नोति जातश्च मुनिसत्तम ॥ १६ ॥

कण्टकैरिव तुन्नाङ्ग क्रकचैरिव दारित ।
पूतिव्रणान्निपतितो धरण्या क्रिमिको यथा ॥ १७ ॥

कण्डूयनेऽपि चाशक्त परिवर्तेऽप्यनीश्वर ।
स्नानपानादिकाहारमप्याप्नोति परेच्छया ॥ १८ ॥

अशुचिप्रस्तरे सुप्तः कीटदंशादिभिस्तथा ।
भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥ १९ ॥

जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च ।
बालभावे यदाप्नोति ह्याधिभौतादिकानि च ॥ २० ॥

अज्ञानतमसाऽछन्नो मूढान्तःकरणो नरः ।
न जानाति कुतः कोऽहं काहं गन्ता किमात्मनः ॥ २१ ॥

केन बन्धेन बद्धोऽहं कारणं किमकारणम् ।
किं कार्यं किमकार्यं वा किं वाच्यं किं च नोच्यते ॥ २२ ॥

को धर्मः कश्च वाधर्मः कस्मिन्वर्तेऽथवा कथम् ।
किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत् ॥ २३ ॥

एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् ।
अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥ २४ ॥

अज्ञानं तामसो भावः कार्यारम्भप्रवृत्तयः ।
अज्ञानिनां प्रवर्तन्ते कर्मलोपास्ततो द्विज ॥ २५ ॥

नरकं कर्मणां लोपात्फलमाहुर्मनीषिणः ।
तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ॥ २६ ॥

जराजर्जरदेहश्च शिथिलावयवः पुमान् ।
विचलच्छीर्णदशनो वलिस्नायुशिरावृतः ॥ २७ ॥

दूरप्रणष्टनयनो व्योमान्तर्गततारकः ।
नासाविवरनिर्यातलोमपुञ्जश्चलद्वपुः ॥ २८ ॥

प्रकटीभूतसर्वास्थिर्नतपृष्ठास्थिसंहति ।
उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टित ॥ २९ ॥

कृच्छ्राचङ्क्रमणोत्थानशयनासनचेष्टित ।
मन्दीभवच्छ्रोत्रनेत्र स्रवल्लालाविलानन ॥ ३० ॥

अनायत्तैः समस्तैश्च करणैर्मरणोन्मुख ।
तत्क्षणेऽप्यनुभूतानामस्मर्ताखिलवस्तुनाम् ॥ ३१ ॥

सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रम ।
श्वासकाससमुद्भूतमहायासप्रजागर ॥ ३२ ॥

अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी ।
भृत्यात्मपुत्रदाराणामवमानास्पदीकृत ॥ ३३ ॥

प्रक्षीणाखिलशौचश्च विहाराहारसस्पृह ।
हास्यः परिजनस्यापि निर्विण्णाशेषबान्धव ॥ ३४ ॥

अनुभूतमिवान्यस्मिन् जन्मन्यात्मविचेष्टितम् ।
संस्मरन्यौवने दीर्घं निश्वसित्यतितापित ॥ ३५ ॥

एवमादीनि दुःखानि जरायामनुभूय वै ।
मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ॥ ३६ ॥

श्लथग्रीवाङ्घ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम् ।
मुहुर्ग्लानः परवशो मुहुर्ज्ञानलवान्वित ॥ ३७ ॥

हिरण्यधान्यतनयभार्याभृत्यगृहादिषु ।
एते कथं भविष्यन्तीत्यतीव ममताकुल ॥ ३८ ॥

मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः ।
शरैरिवान्तकस्योग्रैश्छिद्यमानासुबन्धनः ॥ ३९ ॥

परिवर्तिततारक्षो हस्तपादं मुहुः क्षिपन् ।
संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ॥ ४० ॥

निरुद्धकण्ठो दोषौघैरुदानश्वासपीडितः ।
तापेन महता व्याप्तस्तृषा चार्तस्तथा क्षुधा ॥ ४१ ॥

क्लेशादुत्क्रान्तिमाप्नोति यमकिंकरपीडितः ।
ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ॥ ४२ ॥

एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् ।
शृणुष्व नरके यानि प्राप्यन्ते पुरुषैर्मृतैः ॥ ४३ ॥

याम्यकिंकरपाशादिग्रहणं दण्डताडनम् ।
यमस्य दर्शनं चोग्रमुग्रमार्गविलोकनम् ॥ ४४ ॥

करम्भवालुकावह्नियन्त्रशस्त्रासिभीषणे ।
प्रत्येकं नरके याश्च यातना द्विज, दुःसहाः ॥ ४५ ॥

क्रकचैः पाट्यमानानां मूषायां चापि दह्यताम् ।
कुठारैः कृत्यमानानां भूमौ चापि निखन्यताम् ॥ ४६ ॥

शूलेष्वारोप्यमाणानां व्याघ्रवक्त्रैः प्रवेश्यताम् ।
गृध्रसंभक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम् ॥ ४७ ॥

क्वाथ्यतां तैलमध्ये च क्लिद्यतां क्षारकर्दमे ।
उच्चान्निपात्यमानानां क्षिप्यतां क्षेपयन्त्रकैः ॥ ४८ ॥

नरके यानि दुःखानि पापहेतूद्भवानि वै ।
प्राप्यन्ते नारकैर्विप्र, तेषां संख्या न विद्यते ॥ ४९ ॥

न केवलं द्विजश्रेष्ठ, नरके दुःखपद्धतिः ।
स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥ ५० ॥

पुनश्च गर्भे भवति जायते च पुनः पुनः ।
गर्भे विलीयते भूयो जायमानोऽस्तमेति वै ॥ ५२ ॥

जातमात्रश्च म्रियते बालभावेऽथ यौवने ।
मध्यमं वा वयः प्राप्य वार्धके वाथवा मृतिः ॥ ५२ ॥

यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः ।
तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत् ॥ ५३ ॥

द्रव्यनाशे तथोत्पत्तौ पालने च सदा नृणाम् ।
भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ॥ ५४ ॥

यत्प्रीतिकरं पुंसां वस्तु मैत्रेय, जायते ।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥ ५५ ॥

कलत्रपुत्रमित्रार्थगृहक्षेत्रधनादिकैः ।
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् ॥ ५६ ॥

इति संसारदुःखार्कतापतापितचेतसाम् ।
विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥ ५७ ॥

तदस्य त्रिविधस्यापि दुःखजातस्य वै मम ।
गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ ५८ ॥

निरस्तातिशयाह्लादसुखभावैकलक्षणा ।
भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥ ५९ ॥

तस्मात्तत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः ।
तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने ॥ ६० ॥

आगमोत्थं विवेकाच्च द्विधा ज्ञानं तदुच्यते ।
शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ ६१ ॥

अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे, विवेकजम् ॥ ६२ ॥

इति श्रीविष्णुपुराणे षष्ठांशे पञ्चमाध्याये आध्यात्मिकादि तापत्रयनिरसनप्रकारः ॥

# ॥ कीटोपाख्यानम् ॥



युधिष्ठिर उवाच ॥

अकामाश्च सकामाश्च ये हताः स्म महामृधे ।
कां गतिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ॥ १ ॥

दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।
जानासि त्वं महाप्राज्ञ, प्राणत्यागं सुदुष्करम् ॥ २ ॥

समृद्धौ वासमृद्धौ वा शुभे वा यदि वाशुभे ।
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ॥ ३ ॥

भीष्म उवाच ॥

समृद्धौ वासमृद्धौ वा शुभे वा यदि वाशुभे ।
संसारेऽस्मिन्समायाताः प्राणिनः पृथिवीपते ॥ ४ ॥

निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक् चायमनुप्रश्नस्त्वयोक्तस्तु युधिष्ठिर ॥ ५ ॥

अत्र ते वर्तयिष्यामि पुरा वृत्तमिदं नृप ।
द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ ६ ॥

ब्रह्मभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ ७ ॥

गतिज्ञः सर्वभूतानां भाषाज्ञश्च शरीरिणाम्।
सर्वज्ञः स तदा दृष्ट्वा कीटं वचनमब्रवीत्॥ ८॥

व्यास उवाच॥

कीट, संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे।
क्व धावसि तदाचक्ष्व कुतस्ते भयमागतम्॥ ९॥

कीट उवाच॥

शकटस्याऽस्य महतो घोषं श्रुत्वा भयं मम।
आगतं वै महाबुद्धे, स्वन एष हि दारुणः॥ १०॥

श्रूयते न च मां हन्यादिति ह्यस्मादपक्रमे।
श्वसतां च शृणोम्येनं गोपुत्राणां प्रतोदताम्॥ ११॥

वहतां सुमहाभारं संनिकर्षे स्वन प्रभो।
नृणां च संवाहयतां श्रूयते विविधस्वनः॥ १२॥

श्रोतुमस्मद्विधेनैष न शक्यः कीटयोनिना।
तस्मादतिक्रमाम्येष भयादस्मात्सुदारुणात्॥ १३॥

दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम्।
अतो भीतः पलायामि गच्छेयं नासुखं सुखात्॥ १४॥

भीष्म उवाच॥

इत्युक्तः स तु त प्राह कुत. कीट, सुखं तव।
मरणं ते सुखं मन्ये तिर्यग्योनौ तु वर्तमे॥ १५॥

शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून्।
नाभिजानासि कीट, त्वं श्रेयो मरणमेव ते॥ १६॥

कीट उवाच ॥

सर्वत्र निरतो जीव इतश्चापि सुखं मम ।
चिन्तयामि महाप्राज्ञ, तस्मादिच्छामि जीवितुम् ॥ १७ ॥

इहापि विषयः सर्वो यथादेहं प्रवर्तितः ।
मानुषास्तैर्यग्जाश्चैव पृथग्भोगा विशेषतः ॥ १८ ॥

अहं मासं मनुष्यो वै शूद्रो बहुधनः प्रभो ।
अब्रह्मण्यो नृशंसश्च कदर्यो वृद्धिजीवनः ॥ १९ ॥

वाक्तीक्ष्णो निकृतिप्रज्ञो द्वेष्टा विश्वस्य सर्वशः ।
मिथ्याकृतोऽपि विधिना परस्वहरणे रतः ॥ २० ॥

भृत्यातिथिजनश्चापि गृहे पर्यशितो मया ।
मात्सर्यात्स्वादुकामेन नृशंसेन बुभुक्षता ॥ २१ ॥

देवार्थं पितृयज्ञार्थमन्नं श्रद्धाहृतं मया ।
न दत्तमर्थकामेन देयमन्नं पुरा किल ॥ २२ ॥

गुप्तं शरणमाश्रित्य भयेषु शरणागताः ।
अकस्मात्ते मया त्यक्ता न त्राता अभयैषिणः ॥ २३ ॥

धनं धान्यं प्रियान्दारान्यानं वासस्तथाद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ २४ ॥

ईर्ष्युः परसुखं दृष्ट्वा अन्यस्य न बुभूषकः ।
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः ॥ २५ ॥

नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
स्मृत्वा तदनुतप्येऽहं हित्वा प्रियमिवात्मजम् ॥ २६ ॥

शुभानां नाभिजानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया ॥ २७ ॥

सकृज्जातिगुणोपेतः संगत्या गृहमागत. ।
अतिथिः पूजितो ब्रह्मन्, तेन मां नाजहात्स्मृतिः ॥ २८ ॥

कर्मणा पुनरेवाहं सुखमागामि लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ २९ ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

व्यास उवाच ॥

शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
ममैव कीट, तत्कर्म येन त्वं न प्रमुह्यसे ॥ १ ॥

अहं त्वां दर्शनादेव तारयामि तपोबलात् ।
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥ २ ॥

जानामि पापैः स्वकृतैर्गतं त्वां कीट, कीटताम् ।
अवाप्स्यसि पुनर्धर्मं धर्मं तु यदि मन्यसे ॥ ३ ॥

कर्मभूमिकृतं देवा भुञ्जते तिर्यगाश्रय ।
धर्मोऽपि हि मनुष्येषु कामार्थश्च तथा गुणा. ॥ ४ ॥

वाग्बुद्धिपाणिपादैश्च व्यपेतस्य विपश्चितः ।
किं हास्यति मनुष्यस्य मन्दस्यापि हि जीवतः ॥ ५ ॥

जीवन्हि कुरुते पूजा विप्राग्र्य. शशिसूर्ययो. ।
ब्रुवन्नपि कथां पुण्यां तत्र कीटत्वमेष्यसि ॥ ६ ॥

गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे ।
तत्र तेऽहं विनेष्यामि ब्रह्मत्वं यत्र वेत्स्यसि ॥ ७ ॥

स तथेति प्रतिश्रुत्य कीटो वर्त्मन्यतिष्ठत ।
शकटो व्रजश्च सुमहानागतश्च यदृच्छया ॥ ८ ॥

चक्राक्रमणभिन्नश्च कीटः प्राणान्मुमोच ह ।
सम्भूतः क्षत्रियकुले प्रसादादमितौजसः ॥ ९ ॥

तमृषि द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ।
श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम ॥ १० ॥

श्वपाकशूद्रवैश्यानां क्षत्रियाणां च योनिषु ।
स कीट एवमाभाष्य ऋषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्नि कृताञ्जलि. ॥ ११ ॥

कीट उवाच ॥

नमस्तेऽस्तु महाप्राज्ञ, किं करोमि प्रशाधि माम् ।
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥ १२ ॥

व्यास उवाच ॥

अर्चितोऽहं त्वया राजन्, वाग्भिरद्य यदृच्छया ।
अद्य ते कीटतां प्राप्य स्मृतिर्जाता जुगुप्सिता ॥ १३ ॥

न तु नाशोऽस्ति पापस्य यस्त्वयोपचितः पुरा ।
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ॥ १४ ॥

मम ते दर्शनं प्राप्तं तच्च वै सुकृतं त्वया ।
तिर्यग्योनौ स्म जातेन मम चाभ्यर्चना तथा ॥ १५ ॥

इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्य समवाप्स्यसि ।
गोब्राह्मणकृते प्राणान्हुत्वात्मानं रणाजिरे ॥ १६ ॥

राजपुत्र, सुखं प्राप्य क्रतूंश्चैवाप्तदक्षिणान् ।
अथ मोदिष्यसे स्वर्गे ब्रह्मभूतोऽव्ययः सुखी ॥ २७ ॥

तिर्यग्योन्याः शूद्रतामभ्युपैति
शूद्रो वैश्यं क्षत्रियत्वं च वैश्यः ।
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं
स्वर्गं पुण्यं ब्राह्मणः साधुवृत्तः ॥ २४ ॥

इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ॥

भीष्म उवाच ॥

क्षत्रधर्ममनुप्राप्तः स्मरन्नेव च वीर्यवान् ।
त्यक्त्वा स कीटतां राजन्, चचार विपुलं तपः ॥ १ ॥

तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।
आजगाम द्विजश्रेष्ठ, कृष्णद्वैपायनस्तदा ॥ २ ॥

व्यास उवाच ॥

क्षात्रं देवव्रतं कीट, भूतानां परिपालनम् ।
क्षात्रं देवव्रतं ध्यायंस्ततो विप्रत्वमेष्यसि ॥ ३ ॥

पाहि सर्वाः प्रजाः सम्यक् शुभाशुभविदात्मवान् ।
शुभैः संविभजन्कामैरशुभानां च पावनैः ॥ ४ ॥

आत्मवान्भव सुप्रीतः स्वधर्माचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ५ ॥

भीष्म उवाच ॥

सोऽथारण्यमनुप्राप्य पुनरेव युधिष्ठिर ॥
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पाल्य च ॥ ६ ॥

अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ७ ॥

ततस्तं ब्राह्मणं दृष्ट्वा पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ८ ॥

व्यास उवाच ॥

भो भो ब्रह्मोपम श्रीमन्, मा व्यथिष्ठाः कथंचन ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ९ ॥

उपपन्नाति धर्मज्ञ, यथापापफलोपगम ।
तस्मान्मृत्युभयात्कीट, मा व्यथिष्ठाः कथंचन ॥ १० ॥

धर्मलोपभयं ते स्यात्तस्माद्धर्मं चरोत्तमम् ।

कीट उवाच ॥

सुखात्सुखतर प्राप्तो भगवंस्त्वत्कृते ह्यहम् ॥ ११ ॥

धर्ममूलां श्रियं प्राप्य पाप्मा नष्ट इहाद्य मे ।

भीष्म उवाच ॥

भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ॥ १२ ॥

अकरोत्पृथिवीं राजन्, यज्ञयूपशताङ्किताम् ।
ततः सालोक्यमगमद्ब्राह्मणो ब्रह्मवित्तमः ॥ १३ ॥

अवाप च पदं कीटः पार्थ, ब्रह्म सनातनम् ।
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ १४ ॥

तेऽपि यस्मात्प्रभावेण हताः क्षत्रियपुंगवाः ।
संप्राप्तास्ते गतिं पुण्यां तस्मान्मा शोच पुत्रक ॥ १५ ॥

इति तृतीयोऽध्यायः ॥

इति श्रीमहाभारते अनुशासनपर्वणि कीटोपाख्यान
११७—११९ अध्यायाः ॥



# ॥ श्रीशुकचरितम् ॥

युधिष्ठिर उवाच ॥

कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तः तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच ॥

अत्र ते वर्तयिष्यामि जन्मयोगफलं तदा ।
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः ॥ २ ॥

मेरुशृङ्गे किल पुरा कर्णिकारवनायुते ।
विजहार महादेवो भीमैर्भूतगणैर्वृतः ॥ ३ ॥

शैलराजसुता चैव देवी तत्राभवत्पुरा ।
तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनस्तदा ॥ ४ ॥

योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ ५ ॥

एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् ॥ ६ ॥

उवाच चैनं भगवांस्त्र्यम्बकः प्रहसन्निव ।
एवंविधस्ते तनयो द्वैपायन, भविष्यति ॥ ७ ॥

यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम् ।
यथा च खं तथा शुद्धो भविता ते सुतो महान् ॥ ८ ॥

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः ॥

---

भीष्म उवाच ॥

स लब्ध्वा परमं देवाद्वरं सत्यवतीसुत. ।
अरणी सहिते गृह्य ममन्थाग्निचिकीर्षया ॥ १ ॥

तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा ।
विभ्रत्पितुश्च कौरव्य, रूपवर्णमनुत्तमम् ॥ २ ॥

बभौ तदा भावितात्मा विधूम इव पावकः ।
त गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ॥ ३ ॥

स्वरूपिणी तदाभ्येत्य तर्पयामास वारिणा ।
अन्तरिक्षाच्च कौरव्य, दण्डः कृष्णाजिन च ह ॥ ४ ॥

पपात भूमि राजेन्द्र, शुकस्यार्थे महात्मनः ।
जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ५ ॥

जातमात्र मुनेः पुत्र विधिनोपानयत्तदा ।
तस्य देवेश्वर. शक्रो दिव्यमद्भुतदर्शनम ॥ ६ ॥

ददौ कमण्डलुं प्रीत्या देववासांसि वा विभो ।
हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ॥ ७ ॥

प्रदक्षिणमवर्तन्त शुकाश्चापाश्च भारत ।
आरणेयस्ततो दिव्यं प्राप्य जन्म महाद्युतिः ॥ ८ ॥

तत्रैवोवास मेधावी व्रतचारी समाहितः ।
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ॥ ९ ॥

उपतस्थुर्महाराज, यथास्य पितरं तथा ।
बृहस्पतिं च वव्रे स वेदवेदाङ्गभाष्यवित् ॥ १० ॥

उपाध्यायं महाराज, धर्ममेवानुचिन्तयन् ।
सोऽधीत्य निखिलान्वेदान्सरहस्यान्ससंग्रहान् ॥ ११ ॥

इतिहासं च कात्स्न्येन राजशास्त्राणि वा विभो ।
गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः ॥ १२ ॥

उग्रं तपः समारेभे ब्रह्मचारी समाहितः ।
देवतानामृषीणां च बाल्येऽपि स महातपाः ॥ १३ ॥

संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ।
न त्वस्य रमते बुद्धिराश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ १४ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

भीष्म उवाच ॥

स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोऽर्थी विनयान्वितः ॥ १ ॥

मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे ।
यथा मे मनसः शान्तिः परमा सम्भवेत्प्रभो ॥ २ ॥

श्रुत्वा पुत्रस्य च वचः परमर्षिरुवाच तम् ।
अधीष्व पुत्र, मोक्षं वै धर्मांश्च विविधानपि ॥ ३ ॥

पितुर्नियोगाज्जग्राह शुको धर्मभृतां वरः ।
योगशास्त्रं च निखिलं कापिलं चैव भारत ॥ ४ ॥

स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षधर्मविशारदम् ॥ ५ ॥

उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलं मिथिलेश्वरः ॥ ६ ॥

पितुर्नियोगमादाय जगाम मिथिलां नृप ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ ७ ॥

उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः ।
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ॥ ८ ॥

आर्जवेनैव गन्तव्य न सुखान्वेषिणा तथा ।
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिन ॥ ९ ॥

अहकारो न कर्तव्यो याज्ये तस्मिन्नराधिपे ।
स्वातव्य च वशे तस्य स ते च्छेत्स्यति सशयम् ॥ १० ॥

स धर्मकुशलो राजा मोक्षशास्त्रविशारद ।
याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ॥ ११ ॥

एवमुक्त स धर्मात्मा जगाम मिथिला मुनि ।
मनसा त वहन्भार तमेवार्थं विचिन्तयन् ॥ १२ ॥

आत्माराम प्रसन्नात्मा मिथिलामाससाद ह ।
तस्य द्वार समासाद्य निश्शङ्क प्रविवेश ह ॥ १३ ॥

तत्रापि द्वारपालास्तमुग्रवाचा न्यपेधयन् ।
तथैव च शुकस्तत्र निर्मन्यु समतिष्ठत ॥ १४ ॥

न चातपाध्वसन्तप्त क्षुत्पिपासाश्रमान्वित ।
प्रताम्यति ग्लायति वा नापैति च तथातपात् ॥ १५ ॥

तेषा तु द्वारपालानामक शोकसमन्वित ।
मध्य गतमिवादित्य दृष्ट्वा शुकमवस्थितम् ॥ १६ ॥

पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलि ।
प्रावेशयत्तत कक्ष्या द्वितीया राजवेश्मन ॥ १७ ॥

तत्रासीन शुकस्तात, मोक्षमेवान्वचिन्तयन् ।
छायायामातप चैव समदर्शी समद्युति ॥ १८ ॥

तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां तृतीयां राजवेश्मनः ॥ १९ ॥

इति तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥

भीष्म उवाच ॥

ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरः पुरोहितं कृत्वा सर्वाण्यन्त.पुराणि च ॥ १ ॥

आसन च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घमादाय गुरुपुत्रं समभ्यगात् ॥ २ ॥

स तदासनमादाय बहुरत्नविभूषितम् ।
स्वर्घ्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ ३ ॥

पुरोधसा सगृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ ४ ॥

तत्रोपविष्टं तं कार्ष्णि शास्त्रतः प्रत्यपूजयत् ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ॥ ५ ॥

स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ।
प्रतिगृह्य तु तां पूजा जनकाद्द्विजसत्तमः ॥ ६ ॥

गा चैव समनुज्ञाय राजानमनुमान्य च ।
पर्यपृच्छन्महातेजा राज्ञ कुशलमव्ययम ॥ ७ ॥

अनामय च राजेन्द्र, शुक सानुचरस्य ह ।
अनुशिष्टस्तु तेनासौ निपसाद सहानुग ॥ ८ ॥

उदारसत्वाभिजनो भूमौ राजा कृताञ्जलि ।
कुशल चाव्यय चैव प्रष्ट्वा वैयासकि नृप ।
किमागमनमित्येव पर्यपृच्छत्त पार्थिव ॥ ९ ॥

शुक उवाच ॥

पित्राहमुक्तो भद्र ते मोक्षधर्मार्थकोविद ।
विदेहराजो याज्यो मे जनको नाम विश्रुत ॥ १० ॥

तत्र गच्छस्व वै तूर्ण यदि ते हृदि सशय ।
प्रवृत्तौ वा निवृत्तौ वा स ते च्छेत्स्यति सशयम् ॥ ११ ॥

सोऽह पितुर्नियोगात्त्वामुपप्रष्टुमिहागत ।
तन्मे धर्मभृता श्रेष्ठ, यथावद्वक्तुमर्हसि ॥ १२ ॥

कि कार्य ब्राह्मणेनह मोक्षार्थश्च किमात्मक ।
कथ च मोक्ष प्राप्तव्यो ज्ञानेन तपसाथवा ॥ १३ ॥

जनक उवाच ॥

यत्कार्य ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात, भवेद्वदपरायण ॥ १४ ॥

तपसा गुरुवृत्त्या च ब्रह्मचर्येण वा विभो ।
देवताना पितृणा चाप्यनृणा ह्यनसूयक ॥ १५ ॥

वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ।
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः ।
समावृत्तश्च गार्हस्थ्ये स्वदारनिरतो भवेत् ॥ १६ ॥

शुक उवाच ॥

उत्पन्ने ज्ञानविज्ञाने निर्द्वन्द्वे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु भवंत्रिषु ॥ १७ ॥

एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति ।
यथा वेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ १८ ॥

जनक उवाच ॥

न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् ।
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः ॥ १९ ॥

गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत ॥ २० ॥

अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश्चातुराश्रम्यसंकटः ॥ २१ ॥

अनेन क्रमयोगेन बहुजातिषु कर्मणाम् ।
हित्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥ २२ ॥

भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ २३ ॥

तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सतः ॥ २४ ॥

राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत् ।
सात्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥ २५ ॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
स पश्यन्नोपलिप्येत जले वारिचरो यथा ॥ २६ ॥

पक्षिवत्प्रवणादूर्ध्वममुत्रानन्त्यमश्नुते ।
विहाय देहान्निर्मुक्तो निर्द्वन्द्वः प्रशमं गतः ॥ २७ ॥

अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना ।
धार्यन्ते या द्विजैस्तात, मोक्षशास्त्रविशारदैः ॥ २८ ॥

ज्योतिरात्मनि नान्यत्र सर्वजन्तुषु तत्समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ॥ २९ ॥

न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ३० ॥

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ३१ ॥

संयोज्य मनसात्मानमीर्ष्यामुत्सृज्य मोहनीम् ।
त्यक्त्वा कामं च मोहं च तदा ब्रह्मत्वमश्नुते ॥ ३२ ॥

यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ॥ ३३ ॥

यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखं दुःखं तथैव च ॥ ३४ ॥

शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ॥ ३५ ॥

प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥ ३६ ॥

तमःपरिवृतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ ३७ ॥

एतत्सर्वं च पश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि वेत्तव्यं तत्त्वतो वेत्ति तद्भवान् ॥ ३८ ॥

ब्रह्मर्षे, विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन प्रादुर्भूतं महामुने ॥ ३९ ॥

ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ।
अधिकं तव विज्ञानमधिका च गतिस्तव ॥ ४० ॥

अधिकं तव चाश्चर्यं तच्च त्वं नानुबुध्यसे ।
बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात् ॥ ४१ ॥

उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिम् ।
व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः ॥ ४२ ॥

विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ।
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः ॥ ४३ ॥

व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ।
नास्ति ते सुखदुःखेषु विशेषो नासि लोलुपः ॥ ४४ ॥

नौत्सुक्य नृत्यगीतेषु न राग उपजायते ।
न बन्धुष्वनुबन्धस्ते न भयेष्वस्ति ते भयम् ॥ ४५ ॥

पश्यामि त्वा महाभाग, तुल्यलोष्टाश्मकाञ्चनम् ।
अह त्वामनुपश्यामि ये चाप्यन्ये मनीषिण. ॥ ४६ ॥

आस्थित परम मार्गमक्षय त्वामनामयम् ।
यत्फल ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन्वै वर्तसे ब्रह्मन्, किमन्यत्परिपृच्छसि ॥ ४८ ॥

इति चतुर्थोऽध्यायः ॥



## पञ्चमोऽध्यायः ॥

भीष्म उवाच ॥

एतच्छ्रुत्वा तु वचन कृतात्मा कृतनिश्चयः ।
आत्मनात्मानमास्थाय दृष्ट्वा चात्मानमात्मना ॥ १ ॥

कृतकार्यः सुखी शान्तस्तूर्ष्णी प्रायादुदङ्मुख ।
शैशिर गिरिमुद्दिश्य सधर्मा मातरिश्वनः ॥ २ ॥

एतस्मिन्नन्तरे शून्ये नारद समुपागमत् ।
शुकं स्वाध्यायनिरत वेदार्थान्प्रष्टुमीप्सया ॥ ३ ॥

देवर्षि तु शुको दृष्ट्वा नारद समुपस्थितम् ।
अर्घपूर्वेण विधिना वेदोक्तेनाभ्यपूजन ॥ ४ ॥

नारदोऽथाब्रवीत्प्रीतो ब्रूहि धर्मभृता वर ।
केन त्वा श्रेयसा वत्स, योजयामीति ह्यब्रवत ॥ ५ ॥

नारदस्य वच श्रुत्वा शुक प्रोवाच भारत ।
अस्मिन्लोके हित यत्स्यात्तेन मा योक्तुमर्हसि ॥ ६ ॥

नारद उवाच ॥

तत्त्व जिज्ञासता पूर्वमृषीणा भावितात्मनाम् ।
सनत्कुमारो भगवानिद वचनमब्रवीत् ॥ ७ ॥

नास्ति विद्यासम चक्षुर्नास्ति सत्यसम तप ।
नास्ति रागसस दु ख नास्ति त्यागसम सुखम् ॥ ८ ॥

निवृत्ति कर्मण पापात्सतत पुण्यशीलता ।
सद्वृत्ति समुदाचार श्रेय एतदनुत्तमम् ॥ ९ ॥

मानुष्यमसुख प्राप्य य सज्जति स मुह्यति ।
नाल स दु खमोक्षाय सयोगो दु खलक्षणम् ॥ १० ॥

सक्तस्य बुद्धिश्चलति मोहजालविवर्द्धनी ।
मोहजालावृतो दु खमिह चामुत्र सोऽश्नुते ॥ ११ ॥

सर्वोपायात्तु कामस्य क्रोधस्य च विनिग्रह ।
कार्य श्रेयोऽर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥ १२ ॥

नित्य क्रोधात्तपो रक्षेच्छ्रियं रक्षेच्च मत्सरात् ।
विद्या मानावमानाभ्यामात्मान तु प्रमादत ॥ १३ ॥

आनृशस्य परो धर्म क्षमा च परम बलम् ।
आत्मज्ञान पर ज्ञान न सत्याद्विद्यते परम ॥ १४ ॥

सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत् ।
यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम ॥ १५ ॥

सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः ।
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः ॥ १६ ॥

इन्द्रियैरिन्द्रियार्थान्यश्चरत्यात्मवशैरिह ।
असज्जमानः शान्तात्मा निर्विकारः समाहितः ॥ १७ ॥

आत्मभूतैरतद्भूतः सह चैव विनैव च ।
स विमुक्तः परं श्रेयो न चिरेणाधितिष्ठति ॥ १८ ॥

अदर्शनमसंस्पर्शस्तथासंभाषणं सदा ।
यस्य भूतैः सह मुने, स श्रेयो विन्दते परम् ॥ १९ ॥

न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ २० ॥

आकिंचन्यं सुसंतोषो निराशीस्त्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ २१ ॥

परिग्रहं परित्यज्य भव तात, जितेन्द्रियः ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ २२ ॥

निरामिषा न शोचन्ति त्यजेदामिषमात्मनः ।
परित्यज्यामिषं सौम्य, दुःखतापाद्विमोक्ष्यसे ॥ २३ ॥

तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ २४ ॥

गुणसंगेष्वनासक्त एकचर्यारतः सदा ।
ब्राह्मणो न चिरादेव सुखमायात्यनुत्तमम् ॥ २५ ॥

द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः ।
विद्धि प्रज्ञानतृप्तं त ज्ञानतृप्तो न शोचति ॥ २६ ॥

शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ २७ ॥

तत्र मृत्युजराद्दुःखैः सतत समभिद्रुतः ।
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे ॥ २८ ॥

अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः ।
अनर्थे चार्थसंज्ञस्त्व किमर्थं नावबुध्यसे ॥ २९ ॥

अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कृमिर्हि कोशकारस्तु वध्यते स परिग्रहात् ॥ ३० ॥

पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ३१ ॥

महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान् ।
स्नेहजालसमाकृष्टान्पश्य जन्तून्सुदुःखितान् ॥ ३२

कुटुम्बपुत्रदारांश्च शरीरं संचयाश्च ये ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ ३२ ॥

यदा सर्वान्परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं समर्थं नानुतिष्ठसि ॥ ३४ ॥

अविश्रान्तमनालम्बमपाथेयमदैशिकम् ।
तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥ ३५ ॥

न हि त्वां प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वां यास्यन्तमनुयास्यति ॥ ३६ ॥

विद्या कर्म च शौचं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थश्च विमुच्यते ॥ ३७ ॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ३८ ॥

रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ ३९ ॥

क्षमारित्रां सत्यमयीं धर्मस्थैर्यवटारकाम् ।
त्यागवाताध्वगां शीघ्रां नौतार्यां तां नदीं तरेत् ॥ ४० ॥

त्यज धर्ममधर्मं च तथा सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ४१ ॥

त्यज धर्ममसङ्कल्पादधर्मं चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ ४२ ॥

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ४३ ॥

जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यज ॥ ४४ ॥

इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत् ।
महाभूतात्मकं सर्वं महद्यत्परमाश्रयात् ॥ ४५ ॥

इन्द्रियाणि च पञ्चैव तमः सत्त्वं रजस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ ४६ ॥

सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गणः ॥ ४७ ॥

एतैः सर्वैः समायुक्तो पुमानित्यभिधीयते ।
त्रिवर्गं तु सुखं दुःखं जीवितं मरणं तथा ॥ ४८ ॥

य इदं वेद तत्त्वेन स वेद प्रभवात्ययौ ।
पारम्पर्येण बोद्धव्यं ज्ञानानां यच्च किंचन ॥ ४९ ॥

इन्द्रियैर्गृह्यते यद्यत्तदव्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ५० ।

इन्द्रियैर्नियतैर्देही धाराभिरिव तप्यते ।
लोके विततमात्मानं लोकांश्चात्मनि पश्यति ॥ ५१

परावरदृशः शक्तिर्ज्ञानमूला न नश्यति ।
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ॥ ५२ ॥

सर्वभूतस्य संयोगो नाशुभेनोपपद्यते ।
ज्ञानेन विविधान्क्लेशानतिवृत्तस्य मोहजान् ॥ ५३ ॥

लोके बुद्धिप्रकाशेन लोकमार्गेन रिष्यते ।
अनादिनिधनं जन्तुमात्मनि स्थितमव्ययम् ॥ ५४ ।

अकर्तारममूर्तं च भगवानाह तीर्थवित् ।
यो जन्तु स्वकृतैस्तैस्तै कर्मभिर्नित्यदु खित ॥ ५५ ॥

स दु खप्रतिघातार्थं हन्ति जन्तूननेकधा ।
तत कर्म समादत्ते पुनरन्य नव बहु ॥ ५६ ॥

तप्यतेऽथ पुनस्तेन भुक्त्वापथ्यमिवातुर ।
अजस्रमेव मोहान्धो दु खेपु सुखसज्ञित ॥ ५७ ॥

वध्यते मथ्यते चैव कर्मभिर्मन्थवत्सदा ।
ततो निवद्ध स्वा योनि कर्मणामुदयादिह ॥ ५८ ॥

परिभ्रमति ससार चक्रवद्वहुवेदन ।
स त्व निवृत्तवन्धस्तु निवृत्तश्चापि कर्मत ॥ ५९ ॥

सर्वविस्सर्वजित्सिद्धो भवभावविवर्जित ।
सयमेन नव वन्ध निवर्त्य तपसो वलात् ।
सप्राप्ता नहव सिद्धिमप्यवाधा सुखोदयाम् ॥ ६० ॥

इति पञ्चमोऽध्याय ॥

---

## षष्ठोऽध्यायः ॥

---

नारद उवाच ॥

अशोक शोकनाशार्थं शास्त्र शान्तिकर शिवम् ।
निशम्य लभते बुद्धि ता लब्ध्वा सुखमेधते ॥ १ ॥

प्रज्ञया मानस दु ख हन्याच्छारीरमौपधै ।
एतद्विज्ञानसामर्थ्य न बालै समतामियात ॥ १२ ॥

अनित्य यौवन रूप जीवित द्रव्यसचय ।
आरोग्य प्रियसवासो गृध्येत्तत्र न पण्डित ॥ १३ ॥

न जानपदिक दु खमेक शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १४ ॥

सुखाद्बहुतर दु ख जीविते नात्र सशय ।
स्निग्धत्व चेन्द्रियार्थेपु मोहान्मरणमप्रियम ॥ १५ ॥

परित्यजति यो दु ख सुख वाप्युभय नर ।
अभ्येति ब्रह्म सोऽत्यन्त न त शोचन्ति पण्डिता ॥ १६ ॥

त्यजन्ते दु खमर्था हि पालने न च ते सुखा ।
दु खेन चाधिगम्यन्ते नाशमेपा न चिन्तयेत् ॥ १७ ॥

अन्यामन्या धनावस्था प्राप्य वैशेपिकीं नरा ।
अतृप्ता यान्ति विध्वम सतोप यान्ति पण्डिता ॥ १८ ॥

निमेपमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येपु नित्य किमनुचिन्तयेत ॥ १९ ॥

सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रया ।
सयोगा विप्रयोगान्ता मरणान्त च जीवितम ॥ २० ॥

अन्तो नास्ति पिपासायास्तुष्टिस्तु परम सुखम ।
तस्मात्सतोपमेवेह धन पश्यन्ति पण्डिता ॥ २१ ॥

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २ ॥

तस्मादनिष्टनाशार्थमितिहासं निबोध मे ।
तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम् ॥ ३ ॥

अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः ॥ ४ ॥

द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
न तानाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ॥ ५ ॥

दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ॥ ६ ॥

सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ।
अनिष्टवर्धितं पश्येत्तथा क्षिप्रं विरज्यते ॥ ७ ॥

नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ८ ॥

नाश्रु कुर्वन्ति ये बुध्या दृष्ट्वा लोकेषु संततिम् ।
सम्यक्प्रपश्यतः सर्वं नाश्रुकर्मोपपद्यते ॥ ९ ॥

दु.खोपघाते शारीरे मानसे चाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ॥ १० ॥

भैषज्यमेतद्दु.खस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ ११ ॥

प्रज्ञया मानस दु ख हन्याच्छारीरमौपधै ।
एतद्विज्ञानसामर्थ्यं न वालै समतामियात् ॥ १२ ॥

अनित्य यौवन रूप जीवित द्रव्यसचय ।
आरोग्य प्रियसवासो गृध्येत्तत्र न पण्डित ॥ १३ ॥

न जानपदिक दु खमेक शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १४ ॥

सुखाद्बहुतर दु ख जीविते नात्र सशय ।
स्निग्धत्व चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १५ ॥

परित्यजति यो दु ख सुख वाप्युभय नर ।
अभ्येति ब्रह्म सोऽत्यन्त न त शोचन्ति पण्डिता ॥ १६ ॥

त्यजन्ते दु खमर्था हि पालने न च ते सुखा ।
दु खेन चाधिगम्यन्ते नाशमेषा न चिन्तयेत् ॥ १७ ॥

अन्यामन्या धनावस्था प्राप्य वैशेषिकीं नरा ।
अतृप्ता यान्ति विध्वस सतोष यान्ति पण्डिता ॥ १८ ॥

निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्य किमनुचिन्तयेत् ॥ १९ ॥

सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रया ।
सयोगा विप्रयोगान्ता मरणान्त च जीवितम् ॥ २० ॥

अन्तो नास्ति पिपासायास्तुष्टिस्तु परम सुखम् ।
तस्मात्सतोषमेवेह धन पश्यन्ति पण्डिता ॥ २१ ॥

भूतेषु भावं संचिन्त्य ये बुद्ध्वा मनसः परम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् ॥ २२ ॥

संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥ २३ ॥

तथाप्युपायं संपश्येद्दुःखस्य परिमोक्षणम् ।
अशोचन्नारभेच्चैव मुक्तश्चाव्यसनी भवेत् ॥ २४ ॥

शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात्परं किंचिद्धनिनो वाधनस्य च ॥ २५ ॥

प्राक्संप्रयोगाद्भूतानां नास्ति दुःखं परायणम् ।
विप्रयोगात्तु सर्वस्य न शोचेत्प्रकृतिस्थितः ॥ २६ ॥

धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया ॥ २७ ॥

प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च ।
विचरेदसमुन्नद्धः स सुखी स च पण्डितः ॥ २८ ॥

अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत्स सुखी भवेत् ॥ २९ ॥

इति षष्ठोऽध्यायः ॥

## सप्तमोऽध्यायः ॥

नारद उवाच ॥

सुखदुःखविपर्यासो यदा समनुपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् ॥ १ ॥

स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति ।
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ॥ २ ॥

रुजन्ति हि शरीराणि रोगाः शारीरमानसाः ।
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ॥ ३

व्यथितस्य विधित्साभिस्ताम्यतो जीवितैषिणः ।
अवशस्य विनाशाय शरीरमपकृष्यते ॥ ४ ॥

स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ॥ ५ ॥

व्यत्ययो ह्ययमत्यन्तपक्षयोः शुक्लकृष्णयोः ।
जातान्मर्त्यान् जरयति निमेषान्नावतिष्ठते ॥ ६ ॥

सुखदुःखानि भूतानामजरो जरयत्यसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ ७ ॥

अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ॥ ८ ॥

योऽयमिच्छेद्यथाकाम कामाना तदवाप्नुयात् ।
यदि स्यात्र पराधीन पुरुषस्य क्रियाफलम् ॥ ९ ॥

सयताश्च हि दक्षाश्च मतिमन्तश्च मानवा ।
दृश्यन्ते निष्फला मन्त प्रहीणा सर्वकर्मभि ॥ १० ॥

अपरे बालिशा सन्तो निर्गुणा पुरुषाधमा ।
आशीर्भिरप्यसयुक्ता दृश्यन्ते सर्वकामिन ॥ ११ ॥

भूतानामपर कश्चिद्धिंसाया सततोत्थित ।
वञ्चनाया च लोकस्य स सुखेष्वेव जीर्यते ॥ १२ ॥

अचेष्टमानमासीन श्री कचिदुपतिष्ठते ।
कश्चित्कर्मानुसृत्यान्यो नाप्राप्यमधिगच्छति ॥ १३ ॥

अपराध समाचक्ष्व पुरुषस्य स्वभावत ।
नाभ्युत्थाने मनुष्याणा योगा स्युर्नात्र सशय ।
व्याधिभिश्च विमथ्यन्ते व्याधै क्षुद्रमृगा इव ॥ १४ ॥

व्याधिभिर्मथ्यमानाना त्यजता विपुल धनम् ।
वेदना नापकर्षन्ति यतमानाश्चिकित्सका ॥ १५ ॥

ते चातिनिपुणा वैद्या कुशला सभृतौषधा ।
व्याधिभि परिकृष्यन्ते मृगा व्याधैरिवार्दिता ॥ १६ ॥

ते पिबन्त कषायाश्च सर्पींषि विविधानि च ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमै ॥ १७ ॥

के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिण ।
श्वापदानि दरिद्राश्च प्रायो नार्तिभवन्ति ते ॥ १८ ॥

घोरानपि दुराधर्षान्नृपतीनुग्रतेजसः ।
आक्रम्याददते रोगाः पशून्पशुगणा इव ॥ १९ ॥

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम ।
स्रोतसा सहसा क्षिप्तं ह्रियमाण बलीयसा ॥ २० ॥

न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावमतिवर्तन्ते ये नियुक्ताः शरीरिणः ॥ २१ ॥

न म्रियेरन्न जीर्येरन्सर्वेभ्यः सर्वकामिनः ।
नाप्रियं प्रतिपश्येयुरुत्थानस्य फले सति ॥ २२ ॥

उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ २३ ॥

ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च ।
अप्रमत्ताः शठाः शूरा विक्रान्ताः पर्युपासते ॥ २४ ॥

क्लेशाः परिनिवर्तन्ते केषांचिदसमीक्षिता ।
स्वं स्वं च पुनरन्येषां न किंचिदधिगम्यते ॥ २५ ॥

महच्च फलवैषम्यं दृश्यते कर्मसंधिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ॥ २६ ॥

सर्वेषामृद्धिकामानामन्ये रथपुरःसराः ।
मनुष्याश्च गतस्त्रीका. शतशो विधवाः स्त्रियः ॥ २७ ॥

द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः ।
इदमन्यत्परं पश्य मात्र मोहं करिष्यसि ॥ २८ ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ २९ ॥

एतत्ते परम गुह्यमाख्यातमृषिसत्तम ।
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः ॥ ३० ॥

नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् ।
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥ ३१ ॥

पुत्रदारैर्महान्क्लेशो विद्योन्माथी महान् श्रमः ।
किं नु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ॥ ३२ ॥

ततो मुहूर्तं संचिन्त्य निश्चितां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥ ३३ ॥

कथं त्वहमसंश्लिष्टो गच्छेयं गतिमुत्तमाम् ।
नावर्तेयं यथा भूयो योनिसंकरसागरे ॥ ३४ ॥

परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः ।
सर्वसङ्गान्परित्यज्य निश्चिन्तो मनसा गतिम् ॥ ३५ ॥

तत्र यास्यामि यत्रात्मा शमं मेऽधिगमिष्यति ।
अक्षयश्चाव्ययश्चैव यत्र शाम्यामि शाश्वतः ॥ ३६ ॥

न तु योगमृते शक्या प्राप्तुं सा परमा गतिः ।
अवबन्धो हि बुद्धस्य कर्मभिर्नोपपद्यते ॥ ३७ ॥

तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥ ३८ ॥

न ह्येष क्षयता याति सोम सुरगणैर्यथा ।
कम्पित पतते भूमिं पुनश्चैवाधिरोहति ॥ ३९ ॥

क्षीयते हि सदा सोम पुनश्चैवाभिपूर्यते ।
नेच्छाम्येव विदित्वैते ह्रासवृद्धी पुन पुन ॥ ४० ॥

रविस्तु सन्तापयते लोकान् रश्मिभिरुल्बणै ।
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डल ॥ ४१ ॥

अतो मे रोचते गन्तुमादित्य दीप्ततेजसम् ।
अत्र वत्स्यामि दुर्धर्षो निश्शङ्केनान्तरात्मना ॥ ४२ ॥

सूर्यस्य सदने चाह निक्षिप्येद कलेवरम् ।
ऋषिभि सह यास्यामि सौर तेजोऽतिदुस्सहम् ॥ ४३ ॥

आपृच्छामि नगान्नागान्गिरिमुर्वी दिशो दिवम् ।
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ॥ ४४ ॥

लोकेषु सर्वभूतानि प्रवेक्ष्यामि न सशय ।
पश्यन्तु योगवीर्यं मे सर्वे देवा सहर्षिभि ॥ ४५ ॥

अथानुज्ञाप्य तमृषिं नारद लोकविश्रुतम् ।
तस्मादनुज्ञा सप्राप्य जगाम पितर प्रति ॥ ४६ ॥

सोऽभिवाद्य महात्मान कृष्णद्वैपायन मुनिम् ।
शुक प्रदक्षिण कृत्वा कृष्णमापृष्टवान्मुनिम् ॥ ४७ ॥

श्रुत्वा चर्षिस्तद्वचन शुकस्य
प्रीतो महात्मा पुनराह चैनम् ।

भो भो पुत्र स्थीयतां तावदद्य
यावचक्षुः प्रीणयामि त्वदर्थे ॥ ४८ ॥

निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तसंशयः ।
मोक्षमेवानुसंचिन्त्य गमनाय मनो दधे ॥ ४९ ॥

पितरं संपरित्यज्य जगाम मुनिसत्तमः ।
कैलासपृष्ठं विपुलं सिद्धसंघनिषेवितम् ॥ ५० ॥

इति सप्तमोऽध्यायः ॥



## अष्टमोऽध्यायः ॥



भीष्म उवाच ॥

गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत ।
समे देशे विविक्ते स निःशलाक उपाविशत् ॥ १ ॥

धारयामास चात्मानं यथाशास्त्रं यथाविधि ।
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ॥ २ ॥

ततः स प्राङ्मुखो विद्वानादित्ये नाचिरोदिते ।
पाणिपादं समादाय विनीतवदुपाविशत् ॥ ३ ॥

न तत्र पक्षिसंघातो न शब्दो नातिदर्शनम् ।
यत्र वैयासकिर्धीमान्योक्तुं समुपचक्रमे ॥ ४ ॥

स ददर्श तदात्मानं सर्वसङ्गविनिःसृतम् ।
प्रजहास ततो हासं शुकः संप्रेक्ष्य तत्परम् ॥ ५ ॥

स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ।
महायोगेश्वरो भूत्वा सोऽत्यक्रामद्विहायसम् ॥ ६ ॥

ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं ततः ।
निवेदयामास च तं स्वं योगं परमर्षये ॥ ७ ॥

शुक उवाच ॥

दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥ ८ ॥

नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् ॥ ९ ॥

कैलासपृष्ठादुत्पत्य स पपात दिवं तदा ।
अन्तरिक्षचरः श्रीमान्वायुभूतः सुनिश्चितः ॥ १० ॥

तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम् ।
ददृशुः सर्वभूतानि मनोमारुतरंहसम् ॥ ११ ॥

व्यवसायेन लोकांस्त्रीन्सर्वान्सोऽथ विचिन्तयन् ।
आस्थितो दीर्घमध्वानं पावकार्कसमप्रभः ॥ १२ ॥

तमेकमनसं यान्तमव्यग्रमकुतोभयम् ।
ददृशुः सर्वभूतानि जङ्गमानि चराणि च ॥ १३ ॥

यथाशक्ति यथान्यायं पूजां वै चक्रिरे तदा ।
पुष्पवर्षैश्च दिव्यैस्तमवचक्रुर्दिवौकसः ॥ १४ ॥

त दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः ।
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः ॥ १५ ॥

अन्तरिक्षगतः कोऽयं तपसा सिद्धिमागतः ।
अधःकायोर्द्ध्ववक्त्रश्च नेत्रैः समभिरज्यते ॥ १६ ॥

ततः परमधर्मात्मा त्रिपु लोकेपु विश्रुतः ।
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगमत् ॥ १७ ॥

शब्देनाकाशमखिलं पूरयन्निव सर्वशः ।
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ॥ १८ ॥

संभ्रान्तमनसो राजन्, आसन्परमविस्मिताः ।
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥ १९ ॥

दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम् ।
सुनिश्चितमिहायाति विमुक्तमिव निस्पृहम् ॥ २० ॥

ततः समभिचक्राम मलयं नाम पर्वतम् ।
उर्वशी पुर्वचित्तिश्च यं नित्यमनुसेवतः ॥ २१ ॥

तस्य ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम ।
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ॥ २२ ॥

अचिरेणैव कालेन नभश्चरति चन्द्रवत ।
पितृशुश्रूपया बुद्धिं संप्राप्तोऽयमनुत्तमाम ॥ २३ ॥

पितृभक्तो दृढतपाः पितुः सदयितः सुतः ।
अनन्यमनसा तेन कथं पित्रा विसर्जितः ॥ २४ ॥
उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशः सर्वा वचने गतमानसः ॥ २५ ॥

सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम् ।
विलोकयामास तदा सरांसि सरितस्तथा ॥ २६ ॥

ततो द्वैपायनसुतं बहुमानात्समन्ततः ।
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः ॥ २७

अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित् ।
पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ॥ २८

ततः प्रतिवचो देयं सर्वैरेव समाहितैः ।
एतन्मत्स्नेहतः सर्वे वचनं कर्तुमर्हथ ॥ २९ ॥

शुकस्य वचनं श्रुत्वा दिशः सर्वाः सकाननाः ।
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः ॥ ३०

यथाज्ञापयसे विप्र, बाढमेवं भविष्यति ।
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ॥ ३१ ॥

इति अष्टमोऽध्यायः ॥

## नवमोऽध्यायः ॥

भीष्म उवाच ॥

इत्येवमुक्त्वा वचन ब्रह्मर्षि सुमहातपा ।
प्रातिष्ठत शुक सिद्धिं हित्वा दोषाश्चतुर्विधान् ॥ १ ॥

तमो ह्यष्टविध हित्वा जहौ पञ्चविध रज ।
तत सत्त्व जहौ धीमास्तदद्भुतमिवाभवत् ॥ २ ॥

ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ॥ ३ ॥

उल्कापातो दिशा दाहो भूमिकम्पस्तथैव च ।
प्रादुर्भूत क्षणे तस्मिंस्तदद्भुतमिवाभवत् ॥ ४ ॥

द्रुमा शाखाश्च मुमुचु शिखराणि च पर्वता ।
निर्घातशब्दैश्च गिरिर्हिमवान् दीर्यतीव ह ॥ ५ ॥

न बभासे सहस्रांशुर्न जज्वाल च पावक ।
ह्रदाश्च सरितश्चैव चुक्षुभु सागरास्तथा ॥ ६ ॥

ववर्ष वासवस्तोय रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवह शुचि ॥ ७ ॥

स शृङ्गे प्रथमे दिव्ये हिमवन्मेरुसम्भवे ।
सश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ॥ ८ ॥

शतयोजनविस्तारे तिर्यगूर्द्ध्वं च भारत ।
उदीचीं दिशमास्थाय रुचिरे संददर्श ह ॥ ९ ॥

सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ।
ततः पर्वतशृङ्गे द्वे सहसैव द्विधा कृते ॥ १० ॥

अदृश्येतां महाराज, तदद्भुतमिवाभवत् ।
ततः पर्वतशृङ्गाभ्यां सहसैव विनिस्सृतः ॥ ११ ॥

न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ।
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ॥ १२ ॥

गन्धर्वाणामृषीणां च ये च शैलनिवासिनः ।
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधाकृतम् ॥ १३ ॥

साधु साध्विति तत्रासीन्नादः सर्वत्र भारत ।
स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा ॥ १४ ॥

यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा ।
दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः ॥ १५ ॥

आसीत्किल महाराज, शुकाभिपतने तदा ।
ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन् ॥ १६ ॥

शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ।
तस्यां क्रीडन्त्यभिरतास्ते चैवाप्सरसां गणाः ॥ १७ ॥

शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ।
तमाक्रामन्तमाज्ञाय पिता स्नेहसमन्वित ॥ १८ ॥

उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ।
शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम् ॥ १९ ॥

दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा ।
महायोगगतिं त्वन्यां व्यासोत्थाय महातपाः ॥ २० ॥

निमेषान्तरमात्रेण शुकाभिपतनं ययौ ।
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ॥ २१ ॥

शशंसुर्ऋषयस्तत्र कर्म पुत्रस्य तत्तदा ।
ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ॥ २२ ॥

स्वय पित्रा स्वरेणोच्चैस्त्रींल्लोकाननुनाद्य वै ।
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ॥ २३ ॥

प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन ।
तत एकाक्षरं नादं भोरित्येव समीरयन् ॥ २४ ॥

प्रत्याहरज्जगत्सर्वमुच्चैः स्थावरजङ्गमम ।
ततः प्रभृति चाद्यापि शब्दानुच्चारितान्पृथक् ॥ २५ ॥

गिरिगह्वरपृष्ठेषु व्याहरन्ति शुक प्रति ।
अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ॥ २६ ॥

गुणान्संत्यज्य शब्दादीन्पदमभ्यगमत्परम् ।
महिमानं तु त दृष्ट्वा पुत्रस्यामिततेजसः ॥ २७ ॥

निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन ।
ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसा गणाः ॥ २८ ॥

आसाद्य तमृषिं सर्वा सम्भ्रान्ता गतचेतस ।
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ॥ २९ ॥

वसनान्यादद्‌ु काश्चित्त दृष्ट्वा मुनिसत्तमम् ।
ता मुक्तता तु विज्ञाय मुनि पुत्रस्य वै तदा ॥ ३० ॥

सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ।
त देवगन्धर्ववृतो महर्षिगणपूजित ॥ ३१ ॥

पिनाकहस्तो भगवानभ्यागच्छत शकर ।
तमुवाच महादेव सान्त्वपूर्वमिद वच ॥ ३२ ॥

पुत्रशोकाभिसतप्त कृष्णद्वैपायन तदा ।
अग्नेर्भूमेरपा वायोरन्तरिक्षस्य चैव ह ॥ ३३ ॥

वीर्येण सदृश पुत्र पुरा मत्तस्त्वया वृत ।
स तथालक्षणो जातस्तपसा तव सभृत ॥ ३४ ॥

मम चैव प्रसादेन ब्रह्मतेजोमय शुचि ।
स गतिं परमा प्राप्तो दुष्प्रापामजितेन्द्रियै ॥ ३५ ॥

दैवतैरपि विप्रर्षे, त त्व किमनुशोचसि ।
यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागरा ॥ ३६ ॥

तावत्तवाक्षया कीर्ति सपुत्रस्य भविष्यति ।
छाया स्वपुत्रसदृशीं सर्वतोऽनपगा सदा ॥ ३७ ॥

द्रक्ष्यसे त्व च लोकेऽस्मिन्मत्प्रसादान्महामुने ।
सोऽनुनीतो भगवता स्वय रुद्रेण भारत ॥ ३८ ॥

छाया पश्यन्समावृत्त स मुनि परया मुदा ।
इति जन्मगतिश्चैव शुकस्य भरतर्पभ ।
विस्तरेण समाख्याता यन्मा त्वं परिपृच्छसि ॥ ३९ ॥

एतदाचष्ट मे राजन्, देवर्षिर्नारद पुरा ।
व्यासश्चैव महायोगी सजल्पेपु पदे पदे ॥ ४० ॥

इतिहासमिद पुण्य मोक्षधर्मोपसहितम् ।
धारयेद्य शमपर स गच्छेत्परमा गतिम ॥ ४१ ॥

इति नवमोऽध्याय ॥

इति श्रीमहाभारते शान्तिपर्वणि मोक्षधर्म शुकचरित नाम
३२५—३३३ अध्याया. ॥

# ॥ शुकवैराग्योपदेशः ॥



धिष्ठिर उवाच ॥

कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ।
एतदिच्छाम्यहं श्रोतु परं कौतूहलं हि मे ॥ १ ॥

अव्यक्तव्यक्ततत्त्वानां निश्चय बुद्धिनिश्चयम् ।
वक्तुमर्हसि कौरव्य, देवस्याजस्य या कृतिः ॥ २ ॥

ीष्म उवाच ॥

प्राकृतेन प्रवृत्तेन चरन्तमकुतोभयम् ।
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम् ॥ ३ ॥

यास उवाच ॥

धर्मं पुत्र, निषेवस्व सुतीक्ष्णौ च हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥ ४ ॥

सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत्परिपालय ॥ ५ ॥

सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य संलिह ॥ ६ ॥

फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते ।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ॥ ७ ॥

अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्समानेषु बाल, त्वं नावबुध्यसे ॥ ८ ॥

अहःसु गण्यमानेषु क्षीयमाणे तथायुषि ।
जीविते लिख्यमाने च किमुत्थाय न धावसि ॥ ९ ॥

ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ १० ॥

धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयातापि पीड्यते ॥ ११ ॥

ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च ॥ १२ ॥

उपधार्य मतं तेषां बुधानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ १३ ॥

आद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः ।
सर्वभक्ष्या न पश्यन्ति कर्मभूमिमचेतसः ॥ १४ ॥

धर्मं निःश्रेणिमास्थाय किंचित्किंचित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नानुबुध्यसे ॥ १५ ॥

नास्तिकं भिन्नमर्यादं कूलपातमिव स्थितम् ।
वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धृतम् ॥ १६ ॥

कामं क्रोधं च मृत्युं च पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर ॥ १७ ॥

मृत्युनाभ्याहते लोके जरया परिपीडिते ।
अमोघासु पतन्तीषु धर्मपोतेन सन्तर ॥ १८ ॥

तिष्ठन्त च शयान च मृत्युरन्वेषते यदा ।
निर्वृतिं लभते कस्मादकस्मान्मृत्युनाशित ॥ १९ ॥

सचिन्वानकमेवैन कामानामवितृप्तकम् ।
वृको वोरणमासाद्य मृत्युरादाय गच्छति ॥ २० ॥

क्रमश सचितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्य दीपो यत्नेन धार्यताम् ॥ २१ ॥

सपतन्देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्य लभते जन्तुस्तत्पुत्र, परिपालय ॥ २२ ॥

ब्राह्मण्यस्य तु देहोऽय न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपम सुखम् ॥ २३ ॥

ब्राह्मण्य बहुभिरवाप्यते तपोभि
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्त
क्षेमार्थी कुशलपर सदा यतस्व ॥ २४ ॥

अव्यक्तप्रकृतिरय कलाशरीर
सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा ।
सवास्य समबलशुक्लकृष्णनेत्रो
मासाङ्गो द्रवति वयोहयो नराणाम् ॥ २५ ॥

तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं
गच्छन्तं सततमिहान्ववेक्षमाणम् ।
चक्षुस्ते यदि न परप्रणेतृनेयं
धर्मे ते भवतु मनः परं निशम्य ॥ २६ ॥

ये चात्र प्रचलितधर्मकामवृत्ताः
क्रोशन्तः सततमनिष्टसंप्रयोगाः ।
क्लिश्यन्तः परिगतवेदनाशरीरा
वह्नीभिः सुभृशमधर्मकारणाभिः ॥ २७ ॥

राजा सदा धर्मपरः शुभाशुभस्य
गोप्ता समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुविधमपि चरति विशति
सुखमनुपगतं निरवद्यम् ॥ २८ ॥

श्वानोभीपणकाया अयोमुखानि
वयांसि बलगृध्रपक्षिणां च संघाः ।
नरकदने रुधिरपा गुरुवचन-
नुदमुपरतं विशन्त्यसन्तः ॥ २९ ॥

मर्यादा नियताः स्वयंभुवा य इहेमाः
प्रभिनत्ति दशगुणा मनोनुगत्वात् ।
निवसति भृशमसुखं पितृ-
विषयविपिनमवगाह्य स पापः ॥ ३० ॥

यो लुब्धः सुभृशं प्रियानृतश्च मनुष्यः
सततनिकृतिवचनाभिरतिः स्यात् ।

उपनिधिभिरसुखकृत्स परमनिरयगो
भृशमसुखमनुभवति दुष्कृतकर्मा ॥ ३१ ॥

उष्णां वैतरणीं महानदी-
मवगाढोऽसि पत्त्रवनभिन्नगात्रः ।
परशुवनशयो निपतितो
वसति च महानिरये भृशार्तः ॥ ३२ ॥

महापदानि कत्थसे न चाप्यवेक्षसे परं
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ।
प्रयायतां किमास्यते समुत्थितं महद्भय-
मतिप्रमाथि दारुणं सुखस्य संविधीयताम् ॥

पुरामृतः प्रणीयते यमस्य राजशासना-
त्त्वमन्तकायदारुणैः प्रयत्नमार्जवे कुरु ।
पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवि-
त्तवेह जीवितं यमो न चास्य तस्य वारकः ॥ ३४ ॥

पुराभिवाति मारुतो यमस्य यः पुरःसरः
पुरैक एव नीयसे कुरुष्व साम्परायिकम् ।
पुरा स हि क एव ते प्रवाति मारुतोऽन्तकः
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥ ३५ ॥

श्रुतिश्च सन्निरुध्यते पुरा तवेह पुत्रक,
समाकुलस्य गच्छतः समाधिमुत्तम कुरु ।
शुभाशुभे पुराकृते प्रमादकर्मविप्लुते
स्मरन्पुरा न तप्यसे निधत्स्व केवलं निधिम् ॥ ३६ ॥

पुरा जरा कलेवरं विजर्जरीकरोति ते
वलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ।
पुरा शरीरमन्तको भिनत्ति रोगसारथिः
प्रसह्य जीवितक्षये तपो महत्समाचर ॥ ३७ ॥

पुरा वृका भयङ्करा मनुष्यदेहगोचरा
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ।
पुरान्धकारमेकको नु पश्यसि त्वरस्व वै
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ॥ ३८ ॥

पुरा कुसङ्गता न ते सुहृन्मुखाश्च शत्रवः
विचालयन्ति दर्शनाद्धटस्व पुत्र, यत्परम् ।
धनस्य यस्य राजतो भयं न चास्ति चोरतः
मृतं च यन्न मुञ्चति समर्जयस्व तद्धनम् ॥ ३९ ॥

न तत्र संविभज्यते स्वकर्मभिः परस्परं
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ।
परत्र येन जीव्यते तदेव पुत्र, दीयतां
धन यदक्षर ध्रुव समर्जयस्व तत्स्वयम् ॥ ४० ॥

न यावदेव पच्यते महाजनस्य यावक-
मपक एव चावके पुरा प्रलीयसे त्वर ।
न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः
अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम् ॥ ४१ ॥

यदेव कर्म केवल पुराकृतं शुभाशुभं
तदेव पुत्र, सार्थकं भवत्यमुत्र गच्छतः ।

हिरण्यरत्नसञ्चया शुभाशुभेन सञ्चिता
न तस्य देहसचये भवन्ति कार्यसाधका ॥ ४२ ॥

परत्र गामि कस्य ते कृताकृतस्य कर्मणो
न साक्षिरात्मना समो नृणामिहास्ति कश्चन ।
मनुष्यदेहशून्यक भवत्यमुत्र गच्छत
प्रविश्य बुद्धिचक्षुपा प्रदृश्यते हि सर्वश ॥ ४३ ॥

इहाग्निसूर्यवायव शरीरमाश्रितास्त्रय
स्त एव तस्य साक्षिणो भवन्ति धर्मदर्शिन ।
अहर्निशेषु सर्वत स्पृशत्सु सर्वचारिषु
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ॥ ४४ ॥

अनेकपारिपन्थिके विरूपरौद्रमक्षिके
स्वमेव कर्म रक्ष्यता स्वकर्म तत्र गच्छति ।
न तत्र सविभज्यते स्वकर्मणा परस्पर
तथाकृत स्वकर्मज तदेव भुज्यते फलम् ॥ ४५ ॥

यथाप्सरोगणा फल सुख महर्षिभि सह
तथाप्नुवन्ति कर्मज विमानकामगामिन ।
यथेह यत्कृत शुभ विपाप्मभि कृतात्मभि
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनय ॥ ४६ ॥

प्रजापते सलोकता बृहस्पते शतक्रतो-
र्व्रजन्ति ते परा गतिं गृहस्थधर्मसेतुभि ।
सहस्रशोऽप्यनेकश प्रवक्तुमुत्सुकाय ते
अबुद्धिमोहन पुन प्रभुर्विनाय पावक ॥ ४७ ॥

गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः
कुरुष्व धर्मसञ्चयं वयो हि तेऽतिवर्तते ।
पुरा करोति सोऽन्तकः प्रमादगोऽसुखां चमूं
यथागृहीतमुत्थितस्त्वरस्व धर्मपालने ॥ ४८ ॥

यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि
तथा गतिं गमिष्यतः किमात्मना परेण वा ।
यदेकपातिना सतां भवत्यमुत्र गच्छतां
भयेषु साम्परायिकं निधत्स्व केवलं निधिम् ॥ ४९ ॥

सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवा-
न्न सन्ति यस्य वारकाः कुरुष्व धर्मसंनिधिम् ।
इदं निदर्शनं मया तवेह पुत्र, सांप्रतं
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥ ५० ॥

दधाति यः स्वकर्मणा ददाति यस्य कस्यचित्
अबुद्धिमोहजैर्गुणैः स एक एव युज्यते ।
श्रुतं समस्तमश्नुते प्रकुर्वतः शुभाः क्रिया-
स्तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥ ५१ ॥

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ५२ ॥

किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक, यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताश्च सर्वे ॥ ५३ ॥

श्व कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीयते मृत्यु कृत वास्य न वा कृतम ॥ ५४ ॥

अनुगम्य विनाशान्ते निवर्तन्ते ह् बान्धवा ।
अग्नौ प्रक्षिप्य पुरुष ज्ञातय सुहृदस्तथा ॥ ५५ ॥

नास्तिकान्निरनुक्रोशान्नरान्पापमते स्थितान् ।
वामत कुरु विस्रब्ध परप्रेप्सुरतन्द्रित ॥ ५६ ॥

एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्म सर्वात्मना कुरु ॥ ५७ ॥

अथेम दर्शनोपाय सम्यग्यो वेत्ति मानव ।
सम्यक्स्वधर्म कृत्वेह परत्र सुखमश्नुते ॥ ५८ ॥

न देहभेदे मरण विजानताम्
न च प्रणाश स्वनुपालिते पथि ।
धर्म हि यो वर्धयते स पण्डितो
य एव धर्मान्च्यवते स मुह्यति ॥ ५९ ॥

प्रयुक्तयो कर्मपथि स्वकर्मणो
फल प्रयोक्ता लभते यथाकृतम् ।
निहीनकर्मा निरय प्रपद्यते
त्रिविष्टप गच्छति धर्मपारग ॥ ६० ॥

सोपानभूत स्वर्गस्य मानुष्य प्राप्य दुर्लभम् ।
तथात्मान समादध्याद्भ्रश्यते न पुनर्यथा ॥ ६१ ॥

यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं पुत्रबान्धवैः ॥ ६२ ॥

यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते ।
स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयम् ॥ ६३ ॥

तपोवनेषु ये जातास्तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगानजानताम् ॥ ६४ ॥

यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत् ।
न तेन किञ्चिन्न प्राप्तं तन्मे बहुमतं फलम् ॥ ६५ ॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥ ६६ ॥

अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं न तं पश्यामि यो मम ॥ ६७ ॥

न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति ॥ ६८ ॥

इह लोके हि धनिनां स्वजनः स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥ ६९ ॥

सञ्चिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥ ७० ॥

पश्यति छिन्नभूतं हि जीवलोकं स्वकर्मणा ।
तत्कुरुष्व तथा पुत्र, कृत्स्नं यत्समुदाहृतम् ॥ ७१ ॥

तदेतत्संप्रदृश्यैव कर्मभूमिं प्रपश्यता ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥ ७२ ॥

मासर्तुसञ्ज्ञापरिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥ ७३ ॥

धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो वशी ॥ ७४ ॥

भीष्म उवाच ॥
इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदेशिकम् ॥ ७५ ॥

इति श्रीमहाभारते शान्तिपर्वणि
३२१ अध्यायः ॥



# ॥ चतुर्विंशतिगुरूपाख्यानम् ॥



अत्राप्युदाहरन्तीममितिहास पुरातनम ।
अवधूतस्य सवाद यदोरमिततेजस ॥ १ ॥

अवधूत द्विज कचिच्चरन्तमकुतोभयम ।
कविं निरीक्ष्य तरुण यदु पप्रच्छ धर्मवित् ॥ २ ॥

यदुरुवाच ॥

कुतो बुद्धिरिय ब्रह्मन्, अकर्तु सुविशारदा ।
यामासाद्य भवान् लोक विद्वाश्चरति बालवत् ॥ ३ ॥

प्रायो धर्मार्थकामेषु विविरत्साया च मानवा ।
हेतुनैव समीहन्ते आयुषो यशस श्रिय ॥ ४ ॥

त्व तु कल्प कविर्दक्ष सुभगोऽमृतभाषण ।
न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥ ५ ॥

जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना मुक्तो गङ्गाम्भस्थ इव द्विप ॥ ६ ॥

त्व हि न पृच्छता ब्रह्मन, आत्मन्यानन्दकारणम ।
ब्रूहि स्पर्शविहीनस्य भवत केवलात्मन ॥ ७ ॥

श्रीभगवानुवाच ॥

यदुनैव महाभागा ब्रह्मण्येन सुमेधसा ।
पृष्टः सभाजितः प्राह प्रश्रयावनतं नृपम् ॥ ८ ॥

ब्राह्मण उवाच ॥

सन्ति मे गुरवो राजन्, बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽटामीह तान्शृणु ॥ ९ ॥

पृथिवीवायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥ १० ॥

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत्सर्प ऊर्णनाभिः सुपेशकृत् ॥ ११ ॥

एते मे गुरवो राजन्, चतुर्विंशतिराश्रिताः ।
शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ १२ ॥

यतो यदनुशिक्षामि यथा वा नाहुषात्मज ।
तत्तथा पुरुषव्याघ्र, निबोध कथयामि ते ॥ १३ ॥

भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विद्वान्नचलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥ १४ ॥

शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ १५ ॥

प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ॥ १६ ॥

विषयेष्वाविशन्योगी नानाधर्मेषु सर्वत ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ १७ ॥

पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रय ।
गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ॥ १८ ॥

अन्तर्हितश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्याव्यवछेदमसङ्गमात्मनो
मुनिर्नभस्त्व विततस्य भावयेत ॥ १९ ॥

तेजोऽवन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितै ।
न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणै पुमान् ॥ २० ॥

स्वच्छ प्रकृतित स्निग्धो माधुर्यस्तीर्थभूर्नृणाम ।
मुनि पुनात्यपा मित्रमीक्षोपस्पर्शकीर्तनै ॥ २१ ॥

तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजन ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥ २२ ॥

कचिच्छन्न कचित्स्पष्ट उपास्य श्रेय इच्छताम ।
भुङ्क्ते सर्वत्र दातृणा दहन्प्रागुत्तराशुभम् ॥ २३ ॥

स्वमायया सृष्टमिद सदसल्लक्षण विभु ।
प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥ २४ ॥

विसर्गाद्या श्मशानान्ता भावा देहस्य नात्मन ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ २५ ॥

कालेन ह्योघवेगेन भूताना प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ २६ ॥

गुणैर्गुणानुपादत्ते यथाकाल विमुञ्चति ।
न तेषु युज्यते योगी गोभिर्गा इव गोपति ॥ २७ ॥

बुध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गत ।
लक्ष्यते स्थूलमतिभि आत्मा चावस्थितोऽर्कवत् ॥ २८ ॥

नातिस्नेह प्रसङ्गो वा कर्तव्य क्वापि केनचित् ।
कुर्वन्विन्देत सन्ताप कपोत इव दीनधी ॥ २९ ॥

कपोत कश्चनारण्ये कृतनीडो वनस्पतौ ।
कपोत्या भार्यया सार्धमुवास कतिचित्समा ॥ ३० ॥

कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।
दृष्टि दृष्ट्याङ्गमङ्गेन बुद्धि बुद्धया बबन्धतु ॥ ३१ ॥

शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ।
मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥ ३२ ॥

य य वाञ्छति सा राजस्तर्पयन्त्यनुकम्पिता ।
त त समनयत्काम कृच्छ्रेणाप्यजितेन्द्रिय ॥ ३३ ॥

कपोती प्रथम गर्भ गृह्णती काल आगते ।
अण्डानि सुषुवे नीडे स्वपत्यु सन्निधौ सती ॥ ३४ ॥

तेषु काले व्यजायन्त रचितावयवा हरे ।
शक्तिभिर्दुर्विभाव्याभि कोमलाङ्गतनूरुहा ॥ ३५ ॥

प्रजा पुपुपतु प्रीतौ दम्पती पुत्रवत्सलौ ।
शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ॥ ३६ ॥

तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ।
प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ॥ ३७ ॥

स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया ।
विमोहितौ दीनधियौ शिशून्पुपुपतुः प्रजाः ॥ ३८ ॥

एकदा जग्मतुस्तासामन्नार्थौ तौ कुटुम्बिनौ ।
परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ३९ ॥

दृष्ट्वा तॉल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः ।
जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ४० ॥

कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ ।
गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ४१ ॥

कपोती स्वात्मजान्वीक्ष्य बालकाञ्जालसंवृतान् ।
तानभ्यधावत्क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ४२ ॥

सा सकृत्स्नेहगुणिता दीनचित्ताजमायया ।
स्वयं चाबध्यत शिचा बद्धान्पश्यन्त्यपस्मृतिः ॥ ४३ ॥

कपोतश्चात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान् ।
भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥ ४४ ॥

अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ।
अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥ ४५ ॥

अनुरूपानुकूला च यस्य मे पतिदेवता ।
शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ४६ ॥

सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः ।
जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ४७ ॥

तांस्तथैवावृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः ।
स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ४८ ॥

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् ।
कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम् ॥ ४९ ॥

एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् ।
पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥ ५० ॥

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् ।
गृहेषु खगवत्सक्तस्तमारुढच्युत विदुः ॥ ५१ ॥

इति प्रथमोऽध्यायः ॥

## द्वितीयोऽध्यायः ॥

ब्राह्मण उवाच ॥

सुखमैन्द्रियिकं राजन्, स्वर्गे नरक एव च ।
देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुध. ॥ १ ॥

ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा ।
यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ॥ २ ॥

शयीताहानि भूरीणि निराहारोऽनुपक्रम. ।
यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् ॥ ३ ॥

ओज सहोबलयुतं विभ्रद्देहमकर्मकम ।
शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ४ ॥

मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्यय. ।
अनन्तपारोऽह्यक्षोभ्य. स्तिमितोद इवार्णवः ॥ ५ ॥

समृद्धकामो हीनो वा नारायणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागर. ॥ ६ ॥

दृष्ट्वा स्त्रिय देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ७ ॥

योषिद्धिरण्याभरणाम्बरादि-
द्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या
पतङ्गवन्नश्यति नष्टदृष्टि. ॥ ८ ॥

स्तोक स्तोक ग्रसेद्ग्रास देहो वर्तेत यावता ।
ग्रहानहिंसन्नातिष्ठेद्वृत्ति माधुकरीं मुनिः ॥ ९ ॥

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ १० ॥

सायतनं श्वस्तनं वा न सगृह्णीत भिक्षितम ।
पाणिपात्रोदरामत्रो मक्षिकेव न सग्रही ॥ ११ ॥

सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः ।
मक्षिका इव संगृह्णन्सह तेन विनश्यति ॥ १२ ॥

पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि ।
स्पृशन्करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥

नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः ।
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥

न देय नोपभोग्यं च लुब्धैर्यद्दुःखसञ्चितम् ।
भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥

सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः ।
मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥

ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित् ।
शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ १७ ॥

नृत्यवादित्रगीतानि जुषन्ग्राम्याणि योषिताम् ।
आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥ १८ ॥

जिह्वयातिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥

इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ २० ॥

तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥

पिङ्गला नाम वेश्यासीद्विदेहनगरे पुरा ।
तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन ॥ २२ ॥

सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ।
अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥

मार्ग आगच्छतो वीक्ष्य पुरुषान्पुरुषर्षभ ।
तान्शुल्कदान्वित्तवतः कान्तान्मेनेऽर्थकामुका ॥ २४ ॥

आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अप्यन्यो वित्तवान्कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥

एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती ।
निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥

तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ।
निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ।
निर्वेद आशापाशानां पुरुषस्य यथाह्यसिः ॥ २८ ॥

नह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ।
यथा विज्ञानरहितो मनुजो ममतां नृप ॥ २९ ॥

पिङ्गलोवाच ॥

अहो मे मोहविततिं पश्यताविजितात्मनः ।
या कान्तादसतः कामं कामये येन बालिशा ॥ ३० ॥

सन्तं समीपे रमणं रतिप्रदं
वित्तप्रदं नित्यमिमं विहाय ।

अकामदं दुःखभयाधिशोक-
मोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ३१ ॥

अहो मयात्मा परितापितो वृथा
साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।
स्त्रैणान्नराद्यार्थतृषोऽनुशोच्या-
त्क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ३२ ॥

यदस्थिभिर्निर्मितवंशवंस्य-
स्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेत-
द्विण्मूत्रपूर्णं मदुपैति कान्या ॥ ३३ ॥

विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ।
यान्यमिच्छन्त्यसत्यस्मादात्मदात्कामभच्युतात् ॥ ३४ ॥

सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ॥ ३५ ॥

कियत्प्रियं ते व्यभजन्कामा ये कामदा नराः ।
आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ३६ ॥

नूनं मे भगवान्प्रीतो विष्णुः केनापि कर्मणा ।
निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ॥ ३७ ॥

मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।
येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥ ३८ ॥

तेनोपकृतमादाय शिरसा ग्राम्यसगताः ।
त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥ ३९ ॥

संतुष्टा: श्रद्दधत्येतद्यथालाभेन जीवती ।
विहराम्यमुनैवाहमात्मनो रमणेन वै ॥ ४० ॥

ससारकूपे पतित विषयैर्मुषितेक्षणम् ।
ग्रस्त कालाहिनात्मानं कोऽन्यस्त्रातुमधीश्वरः ॥ ४१ ॥

आत्मैवह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् ।
अप्रमत्त इद पश्येद्ग्रस्तं कालाहिना जगत् ॥ ४२ ॥

ब्राह्मण उवाच ॥

एव व्यवसितमतिर्दुराशा कान्ततर्पजाम् ।
छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥ ४३ ॥

आशा हि परमं दुःखं नैराश्य परमं सुखम् ।
यथा सञ्छिद्य कान्ताशा सुख सुष्वाप पिङ्गला ॥ ४४ ॥

इति द्वितीयोऽध्याय. ॥

## तृतीयोऽध्यायः ॥

ब्राह्मण उवाच ॥

परिग्रहो हि दु.खाय यद्यत्प्रियतम नृणाम् ।
अनन्त सुखमाप्नोति तद्विद्वान्यस्त्वकिंचनः ॥ १ ॥

सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥ २ ॥

न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ।
आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥ ३ ॥

द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ॥ ४ ॥

कचित्कुमारीत्यात्मानं वृणानान्गृहमागतान् ।
स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ॥ ५ ॥

तेषामभ्यवहारार्थं शालीन्रहसि पार्थिव ।
अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ६ ॥

सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ।
बभञ्जैकैकशः शङ्खान्द्वौ द्वौ पाण्योरशेषयत् ॥ ७ ॥

उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शंखयोः ।
तत्राप्येकं निरभिदद्देकस्मान्नाभवद्ध्वनिः ॥ ८ ॥

अन्वशिक्षमिमं तस्या उपदेशमरिंदम ।
लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ ९ ॥

वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि ।
एक एव चरेत्तस्मात्कुमार्या इव कंकणः ॥ १० ॥

मन एकत्र संयुञ्ज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ ११ ॥

यस्मिन्मनो लब्धपदं यदेत-
च्छनैः शनैर्मुञ्चति कर्मरेणून् ।
सत्त्वेन वृद्धेन रजस्तमश्च
विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥

तदैवमात्मन्यवरुद्धचित्तो
न वेद किंचिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्त-
मिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥

एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ।
आलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषण. ॥ १४ ॥

गृहारम्भोऽतिदुःखाय विफलश्चाध्रुवात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥

एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ।
सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥

परावराणां परम आस्ते कैवल्यसंज्ञितः ।
केवलानुभवानन्दसन्दोहो निरुपाधिकः ॥ १८ ॥

केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ।
सङ्क्षोभयन्सृजत्यादौ तया सूत्रमरिंदम ॥ १९ ॥

तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ।
यस्मिन्प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥

यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥

यत्र यत्र मनो देही धारयेत्सकलं धिया ।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ २२ ॥

कीटः पेशस्कृतं ध्यायन्कुड्यान्तेन प्रवेशितः ।
याति तत्साम्यतां राजन्, पूर्वरूपमसन्त्यजन् ॥ २३ ॥

एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।
स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥

देहो गुरुर्मम विरक्तिविवेकहेतु-
बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम् ।
तत्त्वान्यनेन विमृशामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥

जायात्मजार्थपशुभृत्यगृहाप्तवर्गा-
न्पुष्णाति यत्प्रियचिकीर्षया वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः
सृष्ट्वास्य बीजमवसीदति वृक्षधर्मः ॥ २६ ॥

जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।

घ्राणोऽन्यतश्चपलदृक् क च कर्मशक्ति
वह्व्य सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥
सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या
वृक्षान्सरीसृपपशून्खगदशमत्स्यान् ।
तैस्तैरतुष्टहृदय पुरुष विधाय
ब्रह्मावलोकधिषण मुदमाप देव ॥ २८ ॥
लब्ध्वा सुदुर्लभमिद बहुसभवान्ते
मानुष्यमर्थदमनित्यमपीह धीर ।
तूर्णं यतेत न पतेदनुमृत्यु याव
न्नि श्रेयसाय विषय खलु सर्वत स्यात् ॥ २९ ॥

एव सजातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेता मुक्तसङ्गोऽनहङ्कृति ॥ ३० ॥
न ह्येकस्माद्गुरोर्ज्ञान सुस्थिर स्यात्सुपुष्कलम ।
ब्रह्मैतदद्वितीय वै गीयते बहुधर्षिभि ॥ ३१ ॥

श्रीभगवानुवाच ॥

इत्युक्त्वा स यदु विप्रस्तमामन्त्र्य गभीरधी ।
वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ॥ ३२ ॥
अवधूतवच श्रुत्वा पूर्वेषा न स पूर्वज ।
सर्वसङ्गविनिर्मुक्त समचित्तो बभूव ह ॥ ३३ ॥

इति श्रीमद्भागवत एकादशस्कन्ध
७—९ अध्याया ॥

# ॥ गुरुभक्तिमहिमा ॥



एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामापोदस्तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति । स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास 'गच्छ केदारखण्डं बधान' इति। स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत्। स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति । स तत्र संविवेश केदारखण्डे। शयाने च तस्मिंस्तदुदकं तस्थौ। ततः कदाचिदुपाध्याय आपोदो धौम्यः शिष्यावपृच्छत 'क्व आरुणिः पाञ्चाल्यो गतः' इति। तौ तं प्रत्यूचतुः, भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्तस्तौ शिष्यौ प्रत्युवाच 'तस्मात्तत्र सर्वे गच्छामो यत्र स गतः' इति। स तत्र गत्वा तस्याह्वानाय शब्दं चकार 'भो आरुणे पाञ्चाल्य, क्वासि। वत्सैहि' इति। स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे। प्रोवाच चैनम्। 'अयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः। तदभिवादये भगवन्तम्। आज्ञापयतु भवान्। कमर्थं करवाणि' इति। स एवमुक्त उपाध्यायः प्रत्युवाच 'यस्माद्भवान्केदारखण्डं विदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान्भविष्यतीत्युपाध्यायेनानुगृहीतः । यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि। सर्वे च ते वेदा प्रतिभास्यन्ति। सर्वाणि च धर्मशास्त्राणि' इति। स एवमुपाध्यायेनोक्त इष्टं देशं जगाम।

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्योपमन्युर्नाम। तं चोपाध्यायः प्रेषयामास 'वत्सोपमन्यो गा रक्षस्व' इति। स उपाध्यायवचनादरक्षद्गाः। स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायः पीवानमपश्यत्। उवाच चैनम्। 'वत्सोपमन्यो केन वृत्तिं कल्पयसि। पीवानसि दृढम्' इति। स उपाध्यायं प्रत्युवाच 'भो भैक्ष्येण वृत्तिं कल्पयामि' इति। तमुपाध्यायः प्रत्युवाच 'मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यम्' इति। स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायस्य न्यवेदयत्। स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात्। स तथेत्युक्तः पुनररक्षद्गाः। अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच 'वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्मं गृह्णामि। केनेदानीं वृत्तिं कल्पयसि' इति। स एवमुक्त उपाध्यायं प्रत्युवाच 'भगवते निवेद्य पूर्वमपरं चरामि। तेन वृत्तिं कल्पयामि' इति। तमुपाध्यायः प्रत्युवाच 'नैषा न्याय्या गुरुवृत्तिः। अन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि। इत्येवं वर्तमानो लुब्धो भवसि' इति। स तथेत्युक्त्वा गा अरक्षत्। रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे। तमुपाध्यायस्तथापि पीवानमेव पुनरुवाच। 'वत्सोपमन्यो, अहं ते सर्वं भैक्ष्यं गृह्णामि। न चान्यच्चरसि। पीवानसि भृशम्। केन वृत्तिं कल्पयसि' इति। स एवमुक्तस्तमुपाध्यायं प्रत्युवाच 'भो एतासां गवां पयसा वृत्तिं कल्पयामि' इति। तमुवाचोपाध्यायः नैतन्न्याय्यं पय उपभोक्तुं भवतो मया नाभ्यनुज्ञातम्' इति। स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्याय-

स्तोतुं न शक्नोमि गुणैर्भवन्तौ
चक्षुर्विहीनः पथि सम्प्रमोहः ।
दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे
युवां शरण्यौ शरणं प्रपद्ये ॥ १ ॥

सौतिरुवाच ॥

एवमृग्भिश्चान्यैरस्तुवत् । इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनम् । 'प्रीतौ स्वः, एष तेऽपूपोऽशानैनम्' इति । स एवमुक्तः प्रत्युवाच 'नानृतमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्य' इति । ततस्तमश्विनावूचतुः 'आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यां अपूपो दत्तः । उपयुक्तः स तेनानिवेद्य गुरवे । त्वमपि तथैव कुरुष्व । यथाकृतमुपाध्यायेन' इति । स एवमुक्तः प्रत्युवाच 'एतत्प्रत्यनुनये भगवन्तावश्विनौ । नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपयोक्तुम्' इति । तमश्विनावाहतुः 'प्रीतौ स्वः तवानया गुरुभक्त्या । उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति । चक्षुष्मांश्च भविष्यसि । श्रेयश्चावाप्स्यसि' इति । स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसमीपमागम्याभ्यवादयत् । आचचक्षे च । स चास्य प्रीतिमान्बभूव । आह चैनम् 'यथाश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति । सर्वे च ते वेदाः प्रतिभास्यन्ति । सर्वाणि च धर्मशास्त्राणि' इति । एषा तस्यापि परीक्षोपमन्योः ॥

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्य वैदो नाम । तमुपाध्यायः समादिदेश 'वत्स वैद, इहास्यतां तावन्मम गृहे कांचि-

त्कालं शुश्रूषुणा च भवितव्य श्रेयस्ते भविष्यति' इति। स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत्।

गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुः-खसहः सर्वत्राप्रतिकूलस्तस्य महता कालेन गुरु. परितोष जगाम। तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप। एपा तस्यापि परीक्षा वैदस्य। स उपाध्यायेनानुज्ञात. समावृत्तस्तस्माद्गृहाश्रमं प्रत्यपद्यत। तस्यापि स्वगृहे वसतस्त्रयः शिष्याः बभूवु। स शिष्यान्न किंचिदुवाच, कर्म वा क्रियतां गुरुशुश्रूपा वेति। दु खाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष। अथ कस्मिंश्चित्काले वैदं ब्राह्मणं जनमेजय पौष्यश्च क्षत्रियावुपेत्योपाध्यायं वरयाञ्चक्रतुः। स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोज-यामास 'भो यत्किंचिदस्मद्गृहे परिहीयते, तदिच्छाम्यहमपरिहीय-मानं भवता क्रियमाणम्' इति। स एवं प्रतिसंदिश्योत्तङ्कं वैदः प्रवासं जगाम॥

अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म। स तत्र वसमान उपाध्यायस्त्रीभि. सहिताभिराहूयोक्तः 'उपाध्या-यानी ते ऋतुमती। उपाध्यायश्च प्रोषितः। अस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम्। एषा विषीदति' इति। एवमुक्तस्ताः स्त्रियः प्रत्युवाच 'न मया स्त्रीणां वचनादिदमकार्यं करणीयम्। नह्यहमुपा-ध्यायेन सन्दिष्टोऽकार्यमपि त्वया कार्यम्' इति। तस्य पुनरुपाध्या-यः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात्। स तु तद्वृत्तं तस्या-शेषमुपलभ्य प्रीतिमानभूत्। उवाच चैनम् 'वत्सोत्तङ्क, किं ते प्रियं करवाणीति। धर्मतो हि शुश्रूषितोऽस्मि भवता। तेन प्रीतिः परस्परेण

नौ सवृद्धा। तदनुजाने भवन्तम्। सर्वानेव कामानवाप्स्यसि गम्यताम्' इति। स एवमुक्त प्रत्युवाच 'किं ते प्रिय करवाणीति' एव ह्याहु।

यश्चाधर्मेण वै ब्रूयात् यश्चाधर्मेण पृच्छति।
तयोरन्यतर प्रैति विद्वेष चाधिगच्छति॥

सोऽहमनुज्ञातो भवता इच्छामीष्ट गुर्वर्थम्' इति। तेनैवमुक्त उपाध्याय प्रत्युवाच 'वत्सोत्तङ्क, उष्यता तावत्' इति। स कदाचित्तमुपाध्यायमाह 'उत्तङ्क आज्ञापयतु भवान्किं ते प्रियमुपहरामि गुर्वर्थम्' इति। तमुपाध्याय प्रत्युवाच 'वत्सोत्तङ्क, बहुशो मा चोदयसि गुर्वर्थमुपहरामीति। तद्गच्छैना प्रविश्योपाध्यायानीं पृच्छ किमुपहरामीति। एषा यद्ब्रवीति तदुपाहरस्व' इति। स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छत् 'भवति, उपाध्यायेनास्म्यनुज्ञातो गृह गन्तुमिच्छामीष्ट ते गुर्वर्थमुपहृत्यानृणो गन्तु तदाज्ञापयतु भवती किमुपहरामि गुर्वर्थम्' इति। सैवमुक्तोपाध्यायानी तमुत्तङ्क प्रत्युवाच 'गच्छ पौष्य प्रति राजान कुण्डले भिक्षितु तस्य क्षत्रियया पिनद्धे। आनयस्वेतश्चतुर्थेऽहनि पुण्यकर्म भविता। ताभ्यामाबद्धाभ्या शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि। तत्सपादयस्व एव हि कुर्वत श्रेयो भविता। अन्यथा श्रेय कुत' इति। स एवमुक्तस्तयोपाध्यायान्या प्रातिष्ठतोत्तङ्क। स पथि गच्छन्नपश्यदृषभमतिप्रमाण तमधिरूढ च पुरुषमतिप्रमाणमेव। स पुरुष उत्तङ्कमभ्यभाषत 'भो उत्तङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्व' इति। स एवमुक्तो नैच्छत्। तमाह पुरुषो भूय 'भक्षयस्वोत्तङ्क मा विचारयोपाध्यायेनापि ते भक्षित पूर्वम्' इति। स एवमुक्तो

बाढमित्युक्त्वा तदा तद्वृषभस्य मूत्रं पुरीषं च भक्षयित्वोत्तङ्क सम्भ्रमादुत्थित एवापोऽनुपस्पृश्य प्रतस्थे।

यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुत्तङ्कः। स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच 'अर्थी भवन्तमुपागतोऽस्मि' इति स एनमभिवाद्योवाच 'भगवन्, पौष्यः खल्वहं किं करवाणि' इति स तमुवाच 'गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मि। ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हति' इति। तं प्रत्युवाच 'पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यताम्' इति। स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत्। स पौष्यं पुनरुवाच 'न युक्तं भवताहमनृतेनोपचरितुम्। न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि।' स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच 'नियतं भवानुच्छिष्टः। स्मर तावत् नहि सा क्षत्रिया उच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात्सैषा नाशुचेर्दर्शनमुपैति' इति। अथैवमुक्त उत्तङ्कः स्मृत्वोवाच 'अस्ति खलु मया तु भक्षितं नोपस्पृष्टमागच्छता' इति। तं पौष्यः प्रत्युवाच 'एष ते व्यतिक्रमो नोत्थितेनोपस्पृष्टं भवति शीघ्रमागच्छता' इति। अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश। ततस्तां क्षत्रियामपश्यत्। सा च दृष्ट्वैवोत्तङ्कं प्रत्युत्थायाभिवाद्योवाच 'स्वागतं ते भगवन्, आज्ञापय किं करवाणि' इति। स तामुवाच 'एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसि' इति। सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छत्। आह चैनम्

'एते कुण्डले तक्षको नागराज सुभृश प्रार्थयत्यप्रमत्तो नेतुमर्हसि' इति । स एवमुक्तस्ता क्षत्रिया प्रत्युवाच 'भवती सुनिर्वृता भवतु । न मा शक्तस्तक्षको नागराजो धर्षयितुम्' इति । स एवमुक्त्वा ता क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् । आह चैनम् 'भो पौष्य प्रीतोऽस्मि' इति । तमुत्तङ्क पौष्य प्रत्युवाच 'भगवन्, चिरेण पात्रमासाद्यते । भवाश्च गुणवानतिथि । तदिच्छे श्राद्ध कर्तु क्रियता क्षण' इति । तमुत्तङ्क प्रत्युवाच 'कृतक्षण एवास्मि । शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृत भवता' इति । स तथेत्युक्त्वा यथोपपन्नेनान्नेनैन भोजयामास । अथोत्तङ्क सकेश शीतमन्न दृष्ट्वा अशुच्येतदिति मत्वा त पौष्यमुवाच 'यस्मान्मे अशुच्यन्न ददासि तस्मादन्धो भविष्यसि' इति । त पौष्यस्प्रत्युवाच 'यस्मात्त्वमदुष्टमन्न दूषयसि तस्मादनपत्यो भविष्यसि' इति । तमुत्तङ्क प्रत्युवाच 'न युक्त भवताऽन्नमशुचि दत्त्वा प्रतिशाप दातु तस्मादन्नमेव प्रत्यक्षीकुरु ।' तत पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरोक्षयामास । अथ तदन्न मुक्तकेश्या स्त्रियोपहृतमनुष्ण सकेश चाशुच्येतदिति मत्वा तमृषिमुत्तङ्क प्रसादयामास 'भगवन्, एतदज्ञानादन्न सकेश उपाहृत शीत च । तत्क्षामये भवन्तम् । न भवेयमन्ध' इति । तमुत्तङ्क प्रत्युवाच 'न मृषा ब्रवीमि । भूत्वा त्वमन्धो न चिरादनन्धो भविष्यसि' इति 'ममापि शापो भवता दत्तो न भवेत्' इति । त पौष्य प्रत्युवाच 'न चाह शक्त शाप प्रत्यादातुम् । न हि मे मन्युरद्याप्युपशम गच्छति । किं चैतद्भवता न ज्ञायते । यथा ।

नवनीत हृदये ब्राह्मणस्य
वाचि क्षुरो निहितस्तीक्ष्णधार ।

तदुभयमेतद्विपरीत क्षत्रियस्य
वाङ्नवनीत हृदय तीक्ष्णधारम् ॥ इति ।

तदेव गते न शक्तोऽह तीक्ष्णहृदयत्वात्त शापमन्यथाकर्तुं गम्यताम्' इति । तमुत्तङ्क प्रत्युवाच 'भवताहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीत । प्राक्तेऽभिहित यस्माददुष्टमन्न दूषयसि तस्मादनपत्यो भविष्यसीति । दुष्टे चान्ने नैष मम शापो भविष्यतीति । साधयामस्तावत्' इत्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा । सोऽपश्यदथ पथि नग्न क्षपणकमागच्छन्त मुहुर्मुहुर्दृश्यमानमदृश्यमान च । अथोत्तङ्कस्ते कुण्डले सन्यस्य भूमावुदकार्थं प्रचक्रमे । एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् । तमुत्तङ्कोऽभिसृत्य कृतोदककार्य शुचि प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् । तस्य तक्षको दृढमासन्न । स त जग्राह । गृहीतमात्र स तद्रूप विहाय तक्षकस्वरूप कृत्वा सहसा धरण्या विवृत महाबिल प्रविवेश । प्रविश्य च नागलोक स्वभवनमगच्छत् । अथोत्तङ्कस्तस्या क्षत्रियाया वच स्मृत्वा त तक्षकमन्वगच्छन् । स तद्बिल दण्डकाष्ठेन चखान । न चाशकत् । त क्लिश्यमानमिन्द्रोऽपश्यत् । स वज्र प्रेषयामास 'गच्छ, अस्य ब्राह्मणस्य साहाय्य कुरुष्व' इति । अथ वज्र दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् । तमुत्तङ्को ऽनुविवेश तेनैव विलेन । प्रविश्य च त नागलोकमपर्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्यूहशतसङ्कुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् । स तत्र नागास्तानस्तुवत् ।

स्तुवन्नपि नागान्यदा ते कुण्डले नालभत्तदापश्यत् स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पट वयन्त्यौ । तस्मिंस्तन्त्रे कृष्णा सिताश्च

तन्तवश्चक्रं चापश्यद्द्वादशारं षड्भिः कुमारैः परिवर्त्यमानं पुरुषं चापश्यदश्वं च दर्शनीयम्। स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवाद श्लोकैः।

त्रीण्यर्पितान्यत्र शतानि मध्ये
षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन्।
चक्रे चतुर्विंशतिपर्वयोगे
षड् वै कुमाराः परिवर्तयन्ति ॥

तन्त्रं चेदं विश्वरूपे युवत्यौ
वयतस्तन्तून्सन्ततं वर्तयन्त्यौ।
कृष्णान्सितांश्चैव विवर्तयन्त्यौ
भूतान्यजस्रं भुवनानि चैव ॥

वज्रस्य भर्ता भुवनस्य गोप्ता
वृत्रस्य हन्ता नमुचेर्निहन्ता।
कृष्णे वसानो वसने महात्मा
सत्यानृते यो विविनक्ति लोके ॥

यो वाजिनं गर्भमपां पुराणं
वैश्वानरं वाहनमभ्युपैति।
नमोऽस्तु तस्मै जगदीश्वराय
लोकत्रयेशाय पुरंदराय ॥

ततः स एनं पुरुषः प्राह 'प्रीतोऽस्मि तेऽहमनेन स्तोत्रेण। किं ते प्रियं करवाणि' इति। स तमुवाच 'नागा मे वशमीयुः' इति। स चैनं पुरुषः पुनरुवाच 'एतमश्वमपाने धमस्व' इति।

ततोऽश्वस्यापानमधमत् । ततोऽश्वाद्धम्यमानात्सर्वस्रोतोभ्यः पावकार्चिषः सधूमा निष्पेतु । ताभिर्नागलोक उपधूपितेऽथ सम्भ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद्विषण्ण कुण्डले गृहीत्वा सहसा भवनान्निष्क्रम्योत्तङ्कमुवाच 'इमे कुण्डले गृह्णातु भवान्' इति । स ते प्रतिजग्राहोत्तङ्कः। प्रतिगृह्य च कुण्डलेऽचिन्तयत् । अद्य तत्पुण्यकमुपाध्यायान्याः दूरं चाहमभ्यागतः, स कथं सभावयेयमिति । तत एनं चिन्तयानमेव स पुरुष उवाच 'उत्तङ्क, एनमेवाश्वमधिरोह, त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यति' इति । स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम् । उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टा, उत्तङ्को नागच्छतीति शापायास्य मनो दधे । अथैतस्मिन्नन्तरे स उत्तङ्कः प्रविश्य उपाध्यायकुलं उपाध्यायानीमभ्यवादयन्, ते चास्यै कुण्डले प्रायच्छत । सा चैनं प्रत्युवाच 'उत्तङ्क, देशे कालेऽभ्यागतः स्वागतं ते वत्स, इदानीं ह्यनागतोऽसि, कोपितया मया शप्तो भविष्यसि । श्रेयस्तवोपस्थितं सिद्धिमाप्नुहि' इति । अथोत्तङ्क उपाध्यायमभ्यवादयत् । तमुपाध्यायः प्रत्युवाच 'वत्सोत्तङ्क, स्वागतं ते किंचिर कृतम्' इति । तमुत्तङ्क उपाध्यायं प्रत्युवाच "भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन् कर्मणि, तेनास्मि नागलोकं गतः । तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ। तस्मिंश्च कृष्णाः सिताश्च तन्तवः। किं तत्। तत्र च मया चक्रं दृष्टं द्वादशारम् । षट् चैनं कुमाराः परिवर्तयन्ति । तदपि किम्। पुरुषश्चापि मया दृष्टः स चापि कः। अश्वश्चातिप्रमाणो दृष्टः। स चापि कः। पथि गच्छता च मया ऋषभो दृष्टस्तं च पुरुषोऽधिरूढस्तेनास्मि सोपचारमुक्त 'उत्तङ्क, अस्य ऋषभस्य पुरीषं

भक्षय उपाध्यायेनापि ते भक्षितम्' इति। ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तं स चापि कः। तदेतद्भवतोपदिष्टमिच्छेयं श्रोतुं किं तत्" इति। स तेनैवमुक्त उपाध्यायः प्रत्युवाच 'ये ते स्त्रियौ धाता विधाता च। ये च ते कृष्णाः सितास्तन्तवस्ते रात्र्यहनी। यदपि तच्चक्रं द्वादशारं षट्कुमाराः परिवर्तयन्ति। तेऽपि षडृतवः। द्वादशारा द्वादशमासाः संवत्सरश्चक्रम्। यः पुरुषः स पर्जन्यः। योऽश्वः सोऽग्निः। य ऋषभस्त्वया पथि गच्छता दृष्टः स ऐरावतो नागराट्। यश्चैनमधिरूढः पुरुषः स चेन्द्रः। यदपि ते भक्षितं तस्य ऋषभस्य पुरीषं तदमृतम्। तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वम्। स हि भगवानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान्। तस्मात्कुण्डले गृहीत्वा पुनरागतोऽसि। तत्सौम्य, गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसि' इति।

इति श्रीम-महाभारते आदिपर्वणि पौष्यपर्वणि
तृतीयोऽध्याय ॥



# ॥ यक्षप्रश्नः ॥



जनमेजय उवाच ॥

एव हृताया भार्याया प्राप्य क्लेशमनुत्तमम् ।
प्रतिपद्य तत कृष्णा किमकुर्वत पाण्डवा ॥ १ ॥

वैशपायन उवाच ॥

एव हृताया कृष्णाया प्राप्य क्लेशमनुत्तमम ।
विहाय काम्यक राजा सह भ्रातृभिरच्युत ॥ २ ॥

पुनर्द्वैतवन रम्यमाजगाम युधिष्ठिर ।
स्वादुमूलफल रम्य विचित्रबहुपादपम् ॥ ३ ॥

अनुभुक्त फलाहारा सर्व एव मिताशना ।
न्यवसन्पाण्डवास्तत्र कृष्णया सह भारत ॥ ४ ॥

वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिर ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ५ ॥

ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रता ।
क्लेशमार्च्छन्त विपुल सुखोदर्क परन्तपा ॥ ६ ॥

तस्मिन्प्रतिवसन्तस्ते यत्प्रापु कुरुसत्तमा ।
वने क्लेश सुखोदर्क तत्प्रवक्ष्यामि ते श्रुणु ॥ ७ ॥

अरणीसहित मन्थ ब्राह्मणस्य तपस्विन ।
मृगस्य धर्षमाणस्य विषाणे समसज्जत ॥ ८ ॥

तमादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमात्त्वरित. शीघ्रं प्लवमानो महाजव. ॥ ९ ॥

ह्रियमाणं तु तं दृष्ट्वा स विप्र कुरुसत्तम ।
त्वरितोऽभ्यगमत्तत्र अग्निहोत्रपरीप्सया ॥ १० ॥

अजातशत्रुमासीन भ्रातृभि सहित वने ।
आगम्य ब्राह्मणस्तूर्णं सन्तप्तश्चेदमब्रवीत् ॥ ११ ॥

अरणीसहित मन्थं समासक्तं वनस्पतौ ।
मृगस्य धर्षमाणस्य विषाणे समसज्जत ॥ १२ ॥

तमादाय गतो राजस्त्वरमाणो महामृग ।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजव ॥ १३ ॥

तस्य गत्वा पदं राजन्, आसाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवा. ॥ १४ ॥

ब्राह्मणस्य वच. श्रुत्वा सन्तप्तोऽथ युधिष्ठिर ।
धनुरादाय कौन्तेय प्राद्रवद्भ्रातृभि सह ॥ १५ ॥

संनद्धा धन्विन. सर्वे प्राद्रवन्नरपुङ्गवा: ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वागमन्मृगम् ॥ १६ ॥

कर्णिनालीकनाराचानुत्सृजन्तो महारथा: ।
नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् ॥ १७ ॥

तेषां प्रयतमानानां नादृश्यत महामृगः ।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ १८ ॥

शीतलच्छायमागम्य न्यग्रोधं गहने वने ।
क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ १९ ॥

तेषां समुपविष्टानां नकुलो दुःखितस्तदा ।
अब्रवीद्भ्रातरं श्रेष्ठममर्षात्कुरुनन्दनम् ॥ २० ॥

नास्मिन्कुले मज्जतु जातु धर्मो न चालस्यादर्थलोपो बभूव ।
अनुत्तराः सर्वभूतेषु भूयः संप्राप्ताः स्म संशयं किं नु राजन् ॥

इति प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ॥

युधिष्ठिर उवाच ॥

नापदामस्ति मर्यादा न निमित्तं न कारणम् ।
धर्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः ॥ १ ॥

भीम उवाच ॥

प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा ।
न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ २ ॥

अर्जुन उवाच ॥

वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः ।
अतितीव्रा मया क्षान्तास्तेन प्राप्ताः स्म संशयम् ॥ ३ ॥

सहदेव उवाच ॥

शकुनिस्त्वां यदाजैषीदक्षद्यूतेन भारत ।
स मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ४ ॥

वैशम्पायन उवाच ॥

ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ।
आरुह्य वृक्षं माद्रेय, निरीक्षस्व दिशो दश ॥ ५ ॥

पानीयमन्तिके पश्य वृक्षांश्चाप्युदकाश्रितान् ।
एते हि भ्रातरः श्रान्तास्तव तात, पिपासिताः ॥ ६ ॥

नकुलस्तु तथेत्युक्त्वा शीघ्रमारुह्य पादपम् ।
अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ॥ ७ ॥

पश्यामि बहुलान् राजन्, वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादमत्रोदकमसंशयम् ॥ ८ ॥

ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
गच्छ सौम्य, ततः शीघ्रं तूर्णं पानीयमानय ॥ ९ ॥

नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ १० ॥

स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ॥ ११ ॥

यक्ष उवाच ॥

मा तात, साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु माद्रेय, ततः पिब हरस्व च ॥ १२ ॥

अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १३ ॥

चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमरिन्दमम् ॥ १४ ॥

भ्राता हि चिरयातो नः सहदेवस्तवाग्रजः ।
तमेवानय सोदर्यं पानीयं च त्वमानय ॥ १५ ॥

सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ १६ ॥

भ्रातृशोकाभिसन्तप्तस्तृषया च प्रपीडितः ।
अभिदुद्राव पानीयं ततो वागभ्यभाषत ॥ १७ ॥

मा तात, साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ॥ १८ ॥

अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १९ ॥

अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातरौ ते परिगतौ बीभत्सो शत्रुकर्शन ॥ २० ॥

तौ चैवानय भद्रं ते पानीयं च त्वमानय ।
त्वं हि नस्तात, सर्वेषां दुःखितानामुपाश्रयः ॥ २१ ॥

एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ २२ ॥

तत पुरुषशार्दूलौ पानीयहरणे गतौ ।
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहन ॥ २३ ॥

प्रसुप्ताविव तौ दृष्ट्वा नरसिंह सुदु खित ।
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ २४ ॥

नापश्यत्तत्र किंचित्स भूतमस्मिन्महावने ।
सव्यसाची तत श्रान्त पानीय सोऽभ्यधावत ॥ २५ ॥

अभिधावस्ततो वाक्यमन्तरिक्षात्स शुश्रुवे ।
किमासीदसि पानीय नैतच्छक्य बलात्त्वया ॥ २६ ॥

कौन्तेय, यदि हि प्रश्नान्मयोक्तान्प्रतिपत्स्यसे ।
तत पास्यसि पानीय हरिष्यसि च भारत ॥ २७ ॥

वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय ।
यावद्बाणैर्विनिर्भिन्न पुनर्नैव वदिष्यसि ॥ २८ ॥

एवमुक्त्वा तत पार्थ शरैरस्त्रानुमन्त्रितै ।
प्रववर्ष दिश कृत्स्ना शब्दवेध च दर्शयन् ॥ २९ ॥

कर्णनालीकनाराचानुत्सृजन्भरतर्षभ ।
स त्वमोघानिपून्मुक्त्वा तृष्णयाभिप्रपीडित ॥ ३० ॥

अनेकैरिपुसघातैरन्तरिक्षे ववर्ष ह ।

यक्ष उवाच ॥

किं विघातेन ते पार्थ, प्रश्नानुक्त्वा तत पिब ।
अनुक्त्वा च पिबन्प्रश्नान् पीत्वैव न भविष्यसि ॥ ३१ ॥

एवमुक्तस्ततः पार्थः सव्यसाची धनञ्जयः ।
अवज्ञायैव तां वाचं पीत्वैव निपपात ह ॥ ३२ ॥

अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च बीभत्सुश्च परन्तप ॥ ३३ ॥

चिरं गतास्तोयहेतोर्न चागच्छन्ति भारत ।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ३४ ॥

भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत ।
यत्र ते पुरुषव्याघ्रा भ्रातरोऽस्य निपातिताः ॥ ३५ ॥

तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ३६ ॥

स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य वै ।
पास्यामि तावत्पानीयमिति पार्थो वृकोदरः ।
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः । ३७ ॥

यक्ष उवाच ॥
मा तात, साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय, ततः पिब हरस्व च ॥ ३८ ॥

एवमुक्तस्तदा भीमो यक्षेणामिततेजसा ।
अनुक्त्वैव तु तान्प्रश्नान्पीत्वैव निपपात ह ॥ ३९ ॥

ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुषर्षभः ।
समुत्थाय महाबाहुर्दह्यमानेन चेतसा ॥ ४० ॥

व्यपेतजननिर्घोषं प्रविवेश महावनम् ।
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ॥ ४१ ॥

नीलभास्वरवर्णैश्च पादपैरुपशोभितम् ।
भ्रमरैरुपगीतं च पक्षिभिश्च महायशाः ॥ ४२ ॥

स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम् ।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ॥ ४३ ॥

उपेतं नलिनीजालैः सिन्धुवारैः सवेतसैः ।
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम् ।
श्रमार्तस्तदुपागम्य सरो दृष्ट्वाथ विस्मितः ॥ ४४ ॥

इति द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ॥

वैशम्पायन उवाच ॥

स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रप्रतिमगौरवान् ॥ १ ॥

विनिकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चैव निर्विचेष्टान्गतायुषः ॥ २ ॥

स दीर्घमुष्णं निश्वस्य शोकबाष्पपरिप्लुतः ।
तान्दृष्ट्वा पतितान्भ्रातॄन्सर्वांश्चिन्तासमन्वितः ॥ ३ ॥

धर्मपुत्रो महाबाहुर्विललाप सुविस्तरम् ।
ननु त्वया महाबाहो, प्रतिज्ञात वृकोदर ॥ ४ ॥

सुयोधनस्य भेत्स्यामि गदया सक्थिनी रणे ।
व्यर्थं तदद्य सर्वं मे त्वयि वीरे निपातिते ॥ ५ ॥

महात्मनि महाबाहो कुरूणां कीर्तिवर्धन ।
मनुष्यसभवा वाचो विधर्मिण्य प्रतिश्रुता ॥ ६ ॥

भवता दिव्यवाचस्तु ता भवन्तु कथ मृषा ।
देवाश्चापि यदावोचन्सूतके त्वा धनञ्जय ॥ ७ ॥

सहस्राक्षादनवर कुन्तिपुत्रस्तवेति वै ।
उत्तरे पारियात्रे च जगुर्भूतानि सर्वश ॥ ८ ॥

विप्रणष्टा श्रिय चैषामाहर्ता पुनरञ्जसा ।
नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ॥ ९ ॥

सोऽय मृत्युवश यात कथ जिष्णुर्महाबल ।
अय ममाशा सहत्य शेते भूमौ धनञ्जय ॥ १० ॥

आश्रित्य य वय नाथ दु खान्येतानि सेहिम ।
रणे प्रमत्तौ वीरौ च सदा शत्रुनिबर्हणौ ॥ ११ ॥

कथ रिपुवश यातौ कुन्तीपुत्रौ महाबलौ ।
यौ सर्वास्त्राप्रतिहतौ भीमसेनधनञ्जयौ ॥ १२ ॥

अश्मसारमय नून हृदय मम दुर्हृद ।
यमौ यदेतौ दृष्ट्वाद्य पतितौ नावदीर्यते ॥ १३ ॥

शास्त्रज्ञा देशकालज्ञास्तपोयुक्ता क्रियान्विता ।
अकृत्वा सदृश कर्म किं शेध्व पुरुषर्षभा ॥ १४ ॥

अविक्षतशरीराश्चाप्यप्रमृष्टशरासना ।
असज्ञा भुवि सङ्गम्य किं शेध्वमपराजिता ॥ १५ ॥

सानूनिवाद्रे ससुप्तान्दृष्ट्वा भ्रातॄन्महामति ।
सुख प्रसुप्तान्प्रस्विन्न खिन्न कष्टा दशा गत ॥ १६ ॥

एवमेवेदमित्युक्त्वा धर्मात्मा स नरेश्वर ।
शोकसागरमध्यस्थो दध्यौ करुणमाकुल ॥ १७ ॥

इतिकर्तव्यता चेति देशकालविभागवित् ।
नाभिपेदे महाबाहुश्चिन्तयानो महामति ॥ १८ ॥

अथ सस्तभ्य धर्मात्मा तदात्मान तप सुत ।
एव विलप्य बहुधा धर्मपुत्रो युधिष्ठिर ॥ १९ ॥

नैषा शस्त्रप्रहारोऽस्ति पद नहास्ति कस्यचित् ।
भूत महदिद मन्ये भ्रातरो येन मे हता ॥ २० ॥

एकाग्र चिन्तयिष्यामि पीत्वा वत्स्यामि वा जलम् ।
स्यात्तु दुर्योधनेनेदमुपाशु विहित कृतम् ॥ २१ ॥

गान्धारराजरचित सतत जिह्मबुद्धिना ।
यस्य कार्यमकार्य वा सममेव भवत्युत ॥ २२ ॥

कस्तस्य विश्वसेद्वीरो दुष्कृतेरकृतात्मन ।
अथवा पुरुषैर्गूढै प्रयोगोऽय दुरात्मन ॥ २३ ॥

भवेदिति महाबुद्धिर्बहुधा तदचिन्तयत् ।
तस्यासीन्न विषेणेदमुदकं दूषितं यथा ॥ २४ ॥

मृतानामपि चैतेषां विकृतं नैव जायते ।
मुखवर्णाः प्रसन्ना मे भ्रातृणामित्यचिन्तयत् ॥ २५ ॥

एकैकशश्चौघबलानिमान्पुरुषसत्तमान् ।
कोऽन्यः प्रतिसमासीत कालान्तकयमादृते ॥ २६ ॥

एतेन व्यवसायेन तत्तोयं व्यवगाढवान् ।
गाहमानश्च तत्तोयमन्तरिक्षात्स शुश्रुवे ॥ २७ ॥

यक्ष उवाच ॥

अहं बकः शैवलमत्स्यभक्षो
नीता मया प्रेतवशं तवानुजाः ।
त्वं पञ्चमो भविता राजपुत्र,
न चेत्प्रश्नान्पृच्छते व्याकरोषि ॥ २८ ॥

मा तात, साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय, ततः पिब हरस्व च ॥ २९ ॥

युधिष्ठिर उवाच ॥

रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् ।
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम् ॥ ३० ॥

हिमवान्पारियात्रश्च विन्ध्यो मलय एव च ।
चत्वारः पर्वता केन पातिता भूरितेजसः ॥ ३१ ॥

अतीव ते महत्कर्म कृतं च बलिनां वर ।
यान्न देवा न गन्धर्वा नासुराश्च न राक्षसाः ॥ ३२ ॥

विषहेरन्महायुद्धे कृतं ते तन्महाद्भुतम् ।
न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षितम् ॥ ३३ ॥

कौतूहलं महज्जातं साध्वसं चागतं मम ।
येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः ॥ ३४ ॥

पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति ।

यक्ष उवाच ॥

यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ॥ ३५ ॥

मयैते निहताः सर्वे भ्रातरस्ते महौजसः ।

वैशम्पायन उवाच ॥

ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षरम् ॥ ३६ ॥

यक्षस्य ब्रुवतो राजन्नुपक्रम्य तदा स्थितः ।
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम् ॥ ३७ ॥

ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम् ।
वृक्षमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः ॥ ३८ ॥

मेघगम्भीरनादेन तर्जयन्तं महास्वनम् ।
इमे ते भ्रातरो राजन्, वार्यमाणा मयासकृत् ॥ ३९ ॥

बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया ।
न पेयमुदकं राजन्, प्राणानिह परीप्सता ॥ ४० ॥

पार्थ, मा साहस कार्षीर्मम पूर्वपरिग्रह ।
प्रश्नानुक्त्वा तु कौन्तेय, तत पिब हरस्व च ॥ ४१ ॥

युधिष्ठिर उवाच ॥

न चाह कामये यक्ष, तव पूर्वपरिग्रहम् ।
काम नैतत्प्रशसन्ति सन्तो हि पुरुषा सदा ॥ ४२ ॥

यदात्मना स्वमात्मान प्रशसेत्पुरुषर्षभ ।
यथाप्रज्ञ तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम् ॥ ४३ ॥

यक्ष उवाच ॥

किंस्विदादित्यमुन्नयति के च तस्याभितश्चरा ।
कश्चैनमस्त नयति कस्मिश्च प्रतितिष्ठति ॥ ४४ ॥

युधिष्ठिर उवाच ॥

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चरा ।
धर्मश्चास्त नयति च सत्ये च प्रतितिष्ठति ॥ ४५ ॥

यक्ष उवाच ॥

केन स्विच्छ्रोत्रियो भवति केनस्विद्विन्दते महत् ।
केनस्विद्द्वितीयवान्भवति राजन्, केन च बुद्धिमान ॥ ४६ ॥

युधिष्ठिर उवाच ॥

श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥ ४७ ॥

यक्ष उवाच ॥

किं ब्राह्मणाना देवत्व कश्च धर्म सतामिव ।
कश्चैषा मानुषो भाव किमेषामसतामिव ॥ ४८ ॥

युधिष्ठिर उवाच ॥

स्वाध्याय एषा देवत्व तप एषा सतामिव ।
मरण मानुषो भाव परिवादोऽसतामिव ॥ ४९ ॥

यक्ष उवाच ॥

किं क्षत्रियाणा देवत्व कश्च धर्म सतामिव ।
कश्चैषा मानुषो भावो किमेषामसतामिव ॥ ५० ॥

युधिष्ठिर उवाच ॥

इष्वस्त्रमेषा देवत्व यज्ञ एषा सतामिव ।
भय वै मानुषो भाव परित्यागोऽसतामिव ॥ २१ ॥

यक्ष उवाच ॥

किमेक यज्ञिय साम किमेक यज्ञिय यजु ।
का चैषा वृणुते यज्ञ का यज्ञो नातिवर्तते ॥ ५२ ॥

युधिष्ठिर उवाच ॥

प्राणो वै यज्ञिय साम मनो वै यज्ञिय यजु ।
ऋगेका वृणुते यज्ञ ता यज्ञो नातिवर्तते ॥ ५३ ॥

यक्ष उवाच ॥

किं स्विदावपता श्रेष्ठ किंस्विन्निवपता वरम् ।
किंस्वित्प्रतिष्ठमानाना किंस्वित्प्रसवता वरम् ॥ ५४ ॥

युधिष्ठिर उवाच ॥

वर्षमावपता श्रेष्ठ बीज निवपता वरम ।
गाव प्रतिष्ठमानाना पुत्र प्रसवता वरम ॥ ५५ ॥

यक्ष उवाच ॥

इन्द्रियार्थाननुभवन् बुद्धिमान् लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ५६ ॥

युधिष्ठिर उवाच ॥

देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ५७ ॥

यक्ष उवाच ॥

किंस्विद्गुरुतरं भूमेः किंस्विदुच्चतरं च खात् ।
किंस्विच्छीघ्रतरं वायोः किंस्विद्बहुतरं तृणात् ॥ ५८ ॥

युधिष्ठिर उवाच ॥

माता गुरुतरा भूमेः खात्पितोच्चतरस्तथा ।
मनश्शीघ्रतरं वाताच्चिन्ता बहुतरा तृणात् ॥ ५९ ॥

यक्ष उवाच ॥

किंस्वित्सुप्तं न निमिषति किंस्विज्जातं न चोपति ।
कस्यस्विद्धृदयं नास्ति किंस्विद्वेगेन वर्धते ॥ ३० ॥

युधिष्ठिर उवाच ॥

मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चेङ्गते ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ६१ ॥

यक्ष उवाच ॥

किंस्वित्प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।
आतुरस्य च किं मित्रं किंस्विन्मित्रं मरिष्यतः ॥ ६२ ॥

युधिष्ठिर उवाच ॥

सार्थः प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ६३ ॥

यक्ष उवाच ॥

कोऽतिथिः सर्वभूतानां किंस्विद्धर्मं सनातनम् ।
अमृतं किंस्विद्राजेन्द्र, किंस्वित्सर्वमिदं जगत् ॥ ६४ ॥

युधिष्ठिर उवाच ॥

अतिथिः सर्वभूतानामग्निः सोमो गवामृतम् ।
सनातनोऽमृतो धर्मो वायुः सर्वमिदं जगत् ॥ ६५ ॥

यक्ष उवाच ॥

किंस्विदेको विचरते जातः को जायते पुनः ।
किंस्विद्धिमस्य भैषज्य किंस्विदावपनं महत् ॥ ६६ ॥

युधिष्ठिर उवाच ॥

सूर्य एको विचरते चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥ ६७ ॥

यक्ष उवाच ॥

किं स्विदेकपदं धर्म्यं किंस्विदेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ ६८ ॥

युधिष्ठिर उवाच ॥

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ६९ ॥

यक्ष उवाच ॥

किंस्विदात्मा मनुष्यस्य किंस्विद्दैवकृत सखा ।
उपजीवनं किंस्विदस्य किंस्विदस्य परायणम् ॥ ७० ॥

युधिष्ठिर उवाच ॥

पुत्र आत्मा मनुष्यस्य भार्या दैवकृत सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥ ७१ ॥

यक्ष उवाच ॥

धन्यानामुत्तमं किंस्विद्धनानां स्यात्किमुत्तमम् ।
लाभानामुत्तमं किं स्यात्सुखानां स्यात्किमुत्तमम् ॥ ७२ ॥

युधिष्ठिर उवाच ॥

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा ॥ ७३ ॥

यक्ष उवाच ॥

कश्च धर्मः परो लोके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश्च संधिर्न जीर्यते ॥ ७४ ॥

युधिष्ठिर उवाच ॥

आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः ।
मनो यम्य न शोचन्ति सद्भिः संधिर्न जीर्यते ॥ ७५ ॥

यक्ष उवाच ॥

किंनु हित्वा प्रियो भवति किंनु हित्वा न शोचति ।
किंनु हित्वार्थवान् भवति किंनु हित्वा सुखी भवेत् ॥ ७६ ॥

युधिष्ठिर उवाच ॥

मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वाऽर्थवान्भवति लोभं हित्वा सुखी भवेत ॥ ७७ ॥

यक्ष उवाच ॥

किमर्थं ब्राह्मणे दानं किमर्थं नटनर्तके ।
किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ॥ ७८ ॥

युधिष्ठिर उवाच ॥

धर्मार्थं ब्राह्मणे दानं यशोऽर्थं नटनर्तके ।
भृत्येषु भरणार्थं वै भयार्थं चैव राजसु ॥ ७९ ॥

यक्ष उवाच ॥

केन स्विदावृतो लोकः केनस्विन्न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ८० ॥

युधिष्ठिर उवाच ॥

अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ ८१ ॥

यक्ष उवाच ॥

का दिक्किमुदकं प्रोक्तं किमन्नं किं च वै विषम् ।
श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ॥ ८२ ॥

युधिष्ठिर उवाच ॥

सन्तो दिग्जलमाकाशं गौरन्नं प्रार्थना विषम् ।
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥ ८३ ॥

यक्ष उवाच ॥

मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं वा स्यात्कथं यज्ञो मृतो भवेत् ॥ ८४ ॥

युधिष्ठिर उवाच ॥

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ८५ ॥

यक्ष उवाच ॥

तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तितः ।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्तिता ॥ ८६ ॥

युधिष्ठिर उवाच ॥

तपः स्वधर्मवर्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम ॥ ८७ ॥

यक्ष उवाच ॥

किं ज्ञानं प्रोच्यते राजन , कः शमश्च प्रकीर्तितः ।
दया च का परा प्रोक्ता किं चार्जवमुदाहृतम ॥ ८८ ॥

युधिष्ठिर उवाच ॥

ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया सर्वसुखैषित्वमार्जवं समचित्तता ॥ ८९ ॥

यक्ष उवाच ॥

कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ ९० ॥

युधिष्ठिर उवाच ॥

क्रोध सुदुर्जय शत्रुर्लोभो व्याधिरनन्तक ।
सर्वभूतहित साधुरसाधुर्निर्दय स्मृत ॥ ९१ ॥

यक्ष उवाच ॥

को मोह प्रोच्यते राजन्, कश्च मान प्रकीर्तित ।
किमालस्य च विज्ञेय कश्च शोक प्रकीर्तित ॥ ९२ ॥

युधिष्ठिर उवाच ॥

मोहो हि धर्ममूढत्व मानस्त्वात्माभिमानिता ।
धर्मनिष्क्रियतालस्य शोकस्त्वज्ञानमुच्यते ॥ ९३ ॥

यक्ष उवाच ॥

किं स्थैर्यमृषिभि प्रोक्त किं च धैर्यमुदाहृतम् ।
स्नान च किं पर प्रोक्त दान च किमिहोच्यते ॥ ९४ ॥

युधिष्ठिर उवाच ॥

स्वधर्मे स्थिरता स्थैर्य धैर्यमिन्द्रियनिग्रह ।
स्नान मनोमलत्यागो दान वै भूतरक्षणम् ॥ ९५ ॥

यक्ष उवाच ॥

क पण्डित पुमान् ज्ञेयो नास्तिक कश्च उच्यते ।
को मूर्ख कश्च काम स्यात्को मत्सर इति स्मृत ॥ ९६ ॥

युधिष्ठिर उवाच ॥

धर्मज्ञ पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
काम संसारहेतुश्च हृत्तापो मत्सर स्मृत ॥ ९७ ॥

यक्ष उवाच ॥

कोऽहंकार इति प्रोक्तः कश्च दम्भः प्रकीर्तितः ।
किं तद्दैवं परं प्रोक्तं किं तत्पैशुन्यमुच्यते ॥ ९८ ॥

युधिष्ठिर उवाच ॥

मोहाज्ञानमहंकारो दम्भो धर्मध्वजोच्छ्रयः ।
दैवं दानफलं प्रोक्तं पैशुन्यं परदूषणम् ॥ ९९ ॥

यक्ष उवाच ॥

धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
एषां नित्यविरुद्धानां कथमेकत्र संगमः ॥ १०० ॥

युधिष्ठिर उवाच ॥

यदा धर्मश्च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ॥ १०१ ॥

यक्ष उवाच ॥

अक्षयो नरकः केन प्राप्यते भरतर्षभ ।
एतन्मे पृच्छतः प्रश्नं तच्छीघ्रं वक्तुमर्हसि ॥ १०२ ॥

युधिष्ठिर उवाच ॥

ब्राह्मणं स्वयमाहूय याचमानमकिंचनम् ।
पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत् ॥ १०३ ॥

वेदेषु धर्मशास्त्रेषु मिथ्या यो वै द्विजातिषु ।
देवेषु पितृधर्मेषु सोऽक्षयं नरकं व्रजेत् ॥ १०४ ॥

विद्यमाने धने लोभाद्दानभोगविवर्जितः ।
पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत् ॥ १०५ ॥

यक्ष उवाच ॥

राजन्, कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम् ॥ १०६ ॥

युधिष्ठिर उवाच ॥

शृणु यक्ष, कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः ॥ १०७ ॥

वृत्तं यत्नेन संरक्ष्य ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥ १०८ ॥

पाठकापाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो मूर्खाः यः क्रियावान् स पण्डितः ॥ १०९ ॥

चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते ।
योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ॥ ११० ॥

यक्ष उवाच ॥

को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका ।
वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ १११ ॥

युधिष्ठिर उवाच ॥

पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी चाऽप्रवासी च स वारिचर, मोदते ॥ ११२ ॥

अहन्यहनि भूतानि गच्छन्ति यमसादनम् ।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ ११३ ॥

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको ऋषिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ११४ ॥

अस्मिन्महामोहमये कटाहे
सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्ता ॥ ११५ ॥

यक्ष उवाच ॥
प्रियवचनवादी कि लभते
विमृशितकार्यकरः किं लभते ।
बहुमित्रकरः किं लभते
धर्मे रतः किं लभते कथय ॥ ११६ ॥

युधिष्ठिर उवाच ॥
प्रियवचनवादी प्रियो भवति
विमृशितकार्यकरोऽधिकं जयति ।
बहुमित्रकरः सुखं वसते
यश्च धर्मरतः स गतिं लभते ॥ ११७ ॥

यक्ष उवाच ॥
व्याख्याता मे त्वया प्रश्ना याथातथ्यं परंतप ।
पुरुषं त्विदानीं व्याख्याहि यश्च सर्वधनी नरः ॥ ११८ ॥

युधिष्ठिर उवाच ॥

दिव स्पृशति भूमि च शब्द पुण्येन कर्मणा ।
यावत्स शब्दो भवति तावत्पुरुष उन्यते ॥ ११९ ॥

तुल्ये प्रियाप्रिये यस्य सुखदु खे तथैव च
अतीतानागते चोभे स वै सर्वधनी नर ॥ १२० ॥

यक्ष उवाच ॥

व्याख्यात पुरुषो राजन्, यश्च सर्वधनी नर ।
तस्मात्त्वमेक भ्रातृणा यमिच्छसि स जीवतु ॥ १२१ ॥

युधिष्ठिर उवाच ॥

श्यामो य एष रक्ताक्षो बृहच्छाल इवोत्थित ।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष, जीवतु ॥ १२२ ॥

यक्ष उवाच ॥

प्रियस्ते भीमसेनोऽयमर्जुनो व परायणम ।
स कस्मान्नकुल राजन्, सापत्न जीवमिच्छसि ॥ १२३ ॥

यस्य नागसहस्रेण दशसख्येन वै बलम् ।
तुल्य त भीममुत्सृज्य नकुल जीवमिच्छसि ॥ १२४ ॥

तथैन मनुजा प्राहुर्भीमसेन प्रिय तव ।
अथ केनानुभावेन सापत्न जीवमिच्छसि ॥ १२५ ॥

यस्य बाहुबल सर्वे पाण्डवा समुपासते ।
अर्जुन तमपाहाय नकुल जीवमिच्छसि ॥ १२६ ॥

युधिष्ठिर उवाच ॥

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मं न त्यजामि मा नो धर्मो हतो वधीत् ॥ १२७ ॥

आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष, जीवतु ॥ १२८ ॥

धर्मशीलः सदा राजा इति मां मानवा विदुः ।
स्वधर्मान्न च लुप्यामि नकुलो यक्ष, जीवतु ॥ १२९ ॥

कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम ।
उभे सपुत्रे स्यातां वै इति मे धीयते मतिः ॥ १३० ॥

यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
मातृभ्यां सममिच्छामि नकुलो यक्ष, जीवतु ॥ १३१ ॥

यस्य तेऽर्थाच्च कामाच्च आनृशंस्यं परं मतम् ।
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ॥ १३२ ॥

इति तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः ॥

वैशम्पायन उवाच ॥

ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवाः ।
क्षुत्पिपासे च सर्वेषां क्षणेन व्यपगच्छताम् ॥ १ ॥

युधिष्ठिर उवाच ॥

सरस्येकेन पादेन तिष्ठन्तमपराजितम् ।
पृच्छामि को भवान्देवो न मे यक्षो मतो भवान् ॥ २ ॥

वसूनां वा भवानेको रुद्राणामथवा भवान् ।
अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ॥ ३ ॥

मम हि भ्रातर इमे सहस्रशतयोधिनः ।
तं योधं न प्रपश्यामि येन सर्वे निपातिताः ॥ ४ ॥

सुखं प्रतिप्रबुद्धानामिन्द्रियाण्युपलक्षये ।
स भवान्सुहृदोऽस्माकमथवा नः पिता भवान् ॥ ५ ॥

यक्ष उवाच ॥

अहं ते जनकस्तात, धर्मो मृदुपराक्रमः ।
त्वां दिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ॥ ६ ॥

यशः सत्यं दमः शौचमार्जवं श्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ७ ॥

अहिंसा समता शान्तिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सदा मम ॥ ८ ॥

दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते पद्पदी जिता ।
द्वे पूर्वे मध्यमे द्वे च द्वे चान्ते सांपरायिके ॥ ९ ॥

धर्मोऽहमिति भद्रं ते जिज्ञासुस्त्वामिहागतः ।
आनृशंस्येन तुष्टोऽस्मि वरं दास्यामि तेऽनघ ॥ १० ॥

ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ।
वरं वृणीष्व राजेन्द्र, दाता ह्यस्मि तवानघ ॥ ११ ॥

युधिष्ठिर उवाच ॥

अरणीसहितं यस्य मृगो ह्यादाय गच्छति ।
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम ॥ १२ ॥

यक्ष उवाच ॥

अरणीसहितं ह्यस्य ब्राह्मणस्य हृतं मया ।
मृगवेषेण कौन्तेय, जिज्ञासार्थं तव प्रभो ॥ १३ ॥

वैशम्पायन उवाच ॥

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।

यक्ष उवाच ॥

अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ १४ ॥

युधिष्ठिर उवाच ॥

वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।
तत्र नो नाभिजानीयुर्वसतो मनुजाः क्वचित् ॥ १५ ॥

वैशम्पायन उवाच ॥

ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम् ॥ १६ ॥

यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वो विज्ञास्यते कश्चित्त्रिषु लोकेषु भारत ॥ १७ ॥

वर्षं त्रयोदशमिदं मत्प्रसादात्कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ॥ १८ ॥

यद्वः स्वसङ्कल्पितं रूपं मनसा यस्य यादृशम् ।
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ ॥ १९ ॥

अरणीसहितं चेदं ब्राह्मणाय प्रयच्छत ।
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा ॥ २० ॥

प्रवृणीष्वापरं सौम्य, वरमिष्टं ददानि ते ।
न तृप्यामि नरश्रेष्ठ, प्रयच्छन्वै वरांस्तथा ॥ २१ ॥

तृतीयं गृह्यतां पुत्र, वरमप्रतिमं महत् ।
त्वं हि मत्प्रभवो राजन, विदुरश्च ममांशजः ॥ २२ ॥

युधिष्ठिर उवाच ॥

देवदेवो मया दृष्टो भवान्साक्षात्सनातनः ।
यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः ॥ २३ ॥

जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं भवेत् ॥ २४ ॥

धर्म उवाच ॥

उपपन्नो गुणैरेतैः स्वभावेनासि पाण्डव ।
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति ॥ २५ ॥

वैशम्पायन उवाच ॥

इत्युक्त्वान्तर्दधे धर्मो भगवाँल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः ॥ २६ ॥

उपेत्य चाश्रमं वीराः सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ २७ ॥

इद समुत्थानसमागत मह-
त्पितुश्च पुत्रस्य च कीर्तिवर्द्धनम् ।
पठन्नर स्याद्विजितेन्द्रियो वशी
सपुत्रपौत्र शतवर्षभाग्भवेत् ॥ ७८ ॥

न चाप्यधर्मे न सुहृत्प्रभेदने
परस्वहारे परदारमर्शने ।
कदर्यभावे न रमेन्मन सदा
नृणा सदाख्यानमिद विजानताम् ॥ ७९ ॥

इति श्रीमहाभारत आरण्यक पर्वणि आरणेयपर्वणि
३१०—३१३ अध्याया ॥



# ॥ रामचरितम् ॥

## बालकाण्डम् ।

कोसलो नाम मुदित स्फीतो जनपदो महान् ।
निविष्ट सरयूतीरे प्रभूतधनधान्यवान् ॥ १ ॥

अयोध्या नाम नगरी तत्रासील्लोकविश्रुता ।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ २ ॥

ता तु राजा दशरथो महाराष्ट्रविवर्धन ।
पुरीमावासयामास दिव देवपतिर्यथा ॥ ३ ॥

तस्य त्वेवप्रभावस्य धर्मज्ञस्य महात्मन ।
सुतार्थं तप्यमानस्य नासीद्वशकर सुत ॥ ४ ॥

ततो वसिष्ठप्रमुखा सर्वे एव द्विजोत्तमा ।
ऋश्यशृङ्ग पुरस्कृत्य यज्ञकर्मारभस्तदा ॥ ५ ॥

तत प्रक्रम्य तामिष्टिं पुत्रीया पुत्रकारणात् ।
जुहाव चाग्नौ तेजस्वी मन्त्रदृष्टेन कर्मणा ॥ ६ ॥

ततो वै यजमानस्य पावकादतुलप्रभम् ।
प्रादुर्भूत महद्भूत महावीर्य महाबलम् ॥ ७ ॥

समवेक्ष्याब्रवीद्वाक्यमिदं दशरथं नृपम् ।
इदं तु नरशार्दूल, पायसं देवनिर्मितम् ।
प्रजाकरं गृहाण त्वं धन्यमारोग्यवर्धनम् ॥ ८ ॥

तथेति नृपतिः प्रीतः शिरसा प्रतिगृह्य ताम् ।
पात्रीं देवान्नसंपूर्णां देवदत्तां हिरण्मयीम् ॥ ९ ॥

कौसल्यायै नरपतिः पायसार्धं ददौ तदा ।
अर्धादर्धं ददौ चापि सुमित्रायै नराधिपः ।
कैकेय्यै चावशिष्टार्धं ददौ पुत्रार्थकारणात् ॥ १० ॥

प्रददौ चावशिष्टार्धं पायसस्यामृतोपमम् ।
अनुचिन्त्य सुमित्रायै पुनरेव महीपतिः ॥ ११ ॥

तास्त्वेवं पायसं प्राप्य नरेन्द्रस्योत्तमाः स्त्रियः ।
सम्मानं मेनिरे सर्वाः प्रहर्षोदितचेतसः ॥ १२ ॥

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ।
उवास सुचिरं तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ १३ ॥

ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ॥ १४ ॥

ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ।
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ॥ १५ ॥

कौसल्याजनयद्रामं सर्वलक्षणसंयुतम् ।
विष्ण्वर्धं महाभागं पुत्रमैक्ष्वाकवर्धनम् ॥ १६ ॥

भरतो नाम कैकेय्या जज्ञे सत्यपराक्रम ।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ ॥ १७ ॥

पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधी ।
सार्पे जातौ तु सौमित्री कुलीरेऽभ्युदिते रवौ ॥ १८ ॥

राज्ञ पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ।
गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमा ॥ १९ ॥

उत्सवश्च महानासीदयोध्याया जनाकुल ।
अतीत्यैकादशाह तु नामकर्म तथाकरोत् ॥ २० ॥

ज्येष्ठ राम महात्मान भरत कैकेयीसुतम् ।
सौमित्रि लक्ष्मणमिति शत्रुघ्नमपर तथा ॥ २१ ॥

वसिष्ठ परमप्रीतो नामानि कृतवास्तदा ।
तेषा जन्मक्रियादीनि सर्वकर्माण्यकारयत् ॥ २२ ॥

ते चापि मनुजव्याघ्रा वैदिकाध्ययने रता ।
पितृशुश्रूषणरता धनुर्वेदे च निष्ठिता ॥ २३ ॥

अथ राजा दशरथस्तेषा दारक्रिया प्रति ।
चिन्तयामास धर्मात्मा सोपाध्याय सबान्धव ॥ २४ ॥

तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मन ।
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनि ॥ २५ ॥

अथ हृष्टमना राजा विश्वामित्र महामुनिम् ।
उवाच परमोदारो हृष्टस्तमभिपूजयन् ॥ २६ ॥

अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।
ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ॥ २७ ॥

कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥ २८ ॥

तच्छ्रुत्वा राजसिंहस्य वाक्यमद्भुतविस्तरम् ।
हृष्टरोमा महातेजा विश्वामित्रोऽभ्यभाषत ॥ २९ ॥

सदृशं राजशार्दूल, तवैतद्भुवि नान्यथा ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥ ३० ॥

यत्तु मे हृद्गतं वाक्यं तस्य कार्यस्य निश्चयम् ।
कुरुष्व राजशार्दूल भव सत्यप्रतिश्रवः ॥ ३१ ॥

अहं नियममातिष्ठे सिद्ध्यर्थं पुरुषर्षभ ।
तस्य विघ्नकरौ द्वौ तु राक्षसौ कामरूपिणौ ।
मारीचश्च सुबाहुश्च वीर्यवन्तौ सुशिक्षितौ ॥ ३२ ॥

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम् ।
काकपक्षधरं शूरं ज्येष्ठं मे दातुमर्हसि ॥ ३३ ॥

शक्तो ह्येष मया गुप्तो दिव्येन स्वेन तेजसा ।
राक्षसा ये विघ्नकर्तारस्तेषामपि विनाशने ॥ ३४ ॥

अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चान्ये तपसि स्थिताः ॥ ३५ ॥

तच्छ्रुत्वा राजशार्दूलो विश्वामित्रस्य भाषितम् ।
प्रहृष्टवदनो रामसानुजाय महात्मनम् ॥ ३६ ॥

स पुत्रं मूर्ध्न्युपाघ्राय राजा दशरथः प्रियम् ।
ददौ कुशिकपुत्राय सुप्रीतेनान्तरात्मना ॥ ३७ ॥

विश्वामित्रो ययावग्रे ततो रामो धनुर्धरः ।
काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥ ३८ ॥

अध्यर्धयोजनं गत्वा सरय्वा दक्षिणे तटे ।
रामेति मधुरां वाणीं विश्वामित्रोऽभ्यभाषत ॥ ३९ ॥

मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ।
एतद्विद्याद्वये प्राप्ते भविता नास्ति ते समः ॥ ४० ॥

ततो रामो जलं स्पृष्ट्वा प्रहृष्टवदनः शुचिः ।
प्रतिजग्राह ते विद्ये महर्षेर्भावितात्मनः ॥ ४१ ॥

स वनं घोरसंकाशं दृष्ट्वा नृपवरात्मजः ।
अविप्रहतमैक्ष्वाकः पप्रच्छ मुनिपुंगवम् ॥ ४२ ॥

अहो वनमिदं दुर्गं झिल्लिकागणनादितम् ।
संकीर्णं बदरीभिश्च किं न्वेतद्दारुणं वनम् ॥ ४३ ॥

तमुवाच महातेजा विश्वामित्रो महामुनिः ।
ताटका नाम भद्रं ते भार्या सुन्दस्य धीमतः ॥ ४४ ॥

इमौ जनपदौ नित्यं विनाशयति राघव ।
स्वयं पन्थानमावार्य वसत्यध्यर्धयोजने ।
स्वबाहुबलमाश्रित्य जहीमां दुष्टचारिणीम् ॥ ४५ ॥

मुनेर्वचनमक्लीबं श्रुत्वा नरवरात्मजः ।
ज्याशब्दमकरोत्तीव्रं दिशः शब्देन नादयन् ॥ ४६ ॥

तं शब्दमभिनिध्याय राक्षसी क्रोधमूर्छिता ।
श्रुत्वा चाभ्यद्रवद्वेगाद्यतः शब्दो विनिःसृतः ॥ ४७ ॥

तां दृष्ट्वा राघवः क्रुद्धां विकृतां विकृताननाम् ।
शरेणोरसि विव्याध सा पपात ममार च ॥ ४८ ॥

अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ॥ ४९ ॥

सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ।
तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ॥ ५० ॥

स च तान् राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ।
गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ॥ ५१ ॥

भगवंस्तत्र को देशो यत्र सा तव याज्ञिकी ।
रक्षितव्या क्रिया ब्रह्मन्, मया वध्याश्च राक्षसाः ॥ ५२ ॥

विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ।
एतमाश्रममायान्ति राक्षसा विघ्नकारिणः ।
अत्र ते पुरुषव्याघ्र, हन्तव्या दुष्टचारिणः ॥ ५३ ॥

प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ।
अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५४ ॥

अथ काले गते तस्मिन् षष्ठेऽहनि समागते ।
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥ ५५ ॥

मारीचश्च सुबाहुश्च तयोरनुचराश्च ये ।
आगम्य भीमसकाशा रुधिरौघमवासृजन् ॥ ५६ ॥

तावापतन्तौ सहसा दृष्ट्वा राजीवलोचन ।
मानव परमोदारमस्त्र परमभास्वरम् ।
चिक्षेप परमक्रुद्धो मारीचोरसि राघव ॥ ५७ ॥

स तेन परमास्त्रेण मानवेन समाहित ।
सपूर्णं योजनशत क्षिप्त सागरसप्लवे ॥ ५८ ॥

सगृह्यास्त्र ततो रामो दिव्यमाग्नेयमद्भुतम ।
सुबाहूरसि चिक्षेप स विद्ध प्रापतद्भुवि ॥ ५९ ॥

शेषान्वायव्यमादाय निजघान महायशा ।
राघव परमोदारो मुनीना मुदमावहन् ॥ ६० ॥

अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनि ।
निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत ॥ ६१ ॥

मैथिलस्य नरश्रेष्ठ, जनकस्य भविष्यति ।
यज्ञ परमधामिष्ठस्तत्र यास्यामहे वयम् ॥ ६२ ॥

त्व चैव नरशार्दूल, सहास्माभिर्गमिष्यसि ।
अद्भुत धनुरत्न च तत्र तद्द्रष्टुमर्हसि ॥ ६३ ॥

एवमुक्त्वा मुनिवर प्रस्थानमकरोत्तदा ।
सर्षिसघ सकाकुत्स्थ आमन्त्र्य वनदेवता ॥ ६४ ॥

ततो मुनिवरस्तूर्णं जगाम सहराघव ।

मिथिलोपवने तत्र आश्रम दृश्य राघव ।
पुराण निर्जन रम्य पप्रच्छ मुनिपुङ्गवम् ।
श्रीमदाश्रमसकाश किं न्विद मुनिवर्जितम् ॥ ६५ ॥

प्रत्युवाच महातेजा विश्वामित्रो महामुनि ।
गौतमस्य नरश्रेष्ठ, पूर्वमासीन्महात्मन ।
आश्रमो दिव्यसकाश सुरैरपि सुपूजित ॥ ६६ ॥

स चेह तप आतिष्ठदहल्यासहित पुरा ।
तस्यान्तर विदित्वा तु सहस्राक्ष शचीपति ।
मुनिवेषधरोऽहल्यामिद वचनमब्रवीत् ।
सगम त्वहमिच्छामि त्वया सह सुमध्यमे ॥ ६७ ॥

अथ दृष्ट्वा सहस्राक्ष मुनिवेषधर मुनि ।
मम रूप समास्थाय कृतवानसि दुर्मते ।
अकर्तव्यमिद तस्माद्विफलस्त्व भविष्यसि ॥ ६८ ॥

तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् ।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन्निवत्स्यसि ॥ ६९ ॥

यदा चैतद्वन घोर रामो दशरथात्मज ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ ७० ॥

एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
हिमवच्छिखरे पुण्ये तपस्तेपे महातपा ॥ ७१ ॥

विश्वामित्रवच श्रुत्वा राघव सहलक्ष्मण ।
विश्वामित्र पुरस्कृत्य तमाश्रममथाविशत् ॥ ७२ ॥

दर्दर्श च महाभागां तपसा द्योतितप्रभाम् ।
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ।
शापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ ७३ ॥

राघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा ।
स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ॥ ७४ ॥

गौतमोऽपि महातेजा अहल्यासहितः सुखी ।
रामं संपूज्य विधिवत्तपस्तेपे महातपा ॥ ७५ ॥

रामोऽपि परमां पूजां गौतमस्य महामुने ।
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ७६ ॥

विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।
प्रत्युज्जगाम सहसा विनयेन समन्वितः ॥ ७७ ॥

अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ।
यज्ञोपसदनं ब्रह्मन्, प्राप्तोऽसि मुनिभिः सह ॥ ७८ ॥

इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ।
पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रणतो नृपः ॥ ७९ ॥

इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ।
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ८० ॥

तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ।
न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ॥ ८१ ॥

सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ।
अहल्यादर्शनं चैव गौतमेन समागमम् ॥ ८२ ॥

महाधनुषि जिज्ञासां कर्तुमागमनं तथा ।
एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विररामाथ विश्वामित्रो महामुनिः ॥ ८३ ॥

एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
इदं धनुर्वरं ब्रह्मन्, जनकैरभिपूजितम् ।
दर्शयैतन्महाभाग, अनयो राजपुत्रयोः ॥ ८४ ॥

विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम, धनुः पश्य इति राघवमब्रवीत् ॥ ८५ ॥

लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ।
पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ॥ ८६ ॥

आरोपयित्वा धर्मात्मा पूरयामास तद्धनुः ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ ८७ ॥

तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः ।
भूमिकम्पश्च सुमहान् पर्वतस्येव दीर्यतः ॥ ८८ ॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥ ८९ ॥

प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुङ्गवम् ॥ ९० ॥

भगवन्, दृष्टवीर्यो मे रामो दशरथात्मज. ।
अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ ९१ ॥

जनकाना कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य राम दशरथात्मजम् ॥ ९२ ॥

मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥ ९३ ॥

भवतोऽनुमते ब्रह्मन्, शीघ्र गच्छन्तु मन्त्रिण ।
मम कौशिक, भद्रं ते अयोध्या त्वरिता रथै ।
राजान प्रश्रितैर्वाक्यैरानयन्तु पुर मम ॥ ९४ ॥

जनकेन समादिष्टा दूतास्ते क्लान्तवाहना ।
ददृशुर्देवसकाश वृद्ध दशरथं नृपम्
राजान प्रयता वाक्यमब्रुवन्मधुराक्षरम् ॥ ९५ ॥

पृष्ट्वा कुशलमव्यग्र वैदेहो मिथिलाधिप ।
कौशिकानुमते वाक्य भवन्तमिदमब्रवीत् ॥ ९६ ॥

तस्य राजन्धनुर्दिव्य मध्ये भग्न महात्मना ।
रामेण हि महाराज, महत्या जनससदि ॥ ९७ ॥

अस्मै देया मया सीता वीर्यशुल्का महात्मने ।
प्रतिज्ञा तर्तुमिच्छामि तदनुज्ञातुमर्हसि ॥ ९८ ॥

इति वाक्य तु तच्छ्रुत्वा राजा परमहर्षित ।
गत्वा चतुरह मार्गं विदेहानभ्युपेयिवान् ॥ ९९ ॥

ततो राजानमासाद्य वृद्ध दशरथ नृपम् ।
जनको मुदितो राजा हर्ष च परम ययौ ॥ १०० ॥

उवाच च नरश्रेष्ठो नरश्रेष्ठ मुदान्वित ।
स्वागत ते महाराज, दिष्ट्या प्राप्तोऽसि राघव ॥ १०१ ॥

पुत्रयोरुभयो प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ।
ददामि परमप्रीतो वध्वौ ते मुनिपुङ्गव ॥ १०२ ॥

सीता रामाय भद्र ते ऊर्मिला लक्ष्मणाय च ।
एव भवतु भद्र व कुशध्वजसुते इमे ॥ १०३ ॥

पत्न्यौ भजेता सहितौ शत्रुघ्नभरतावुभौ ।
तत सीता समानीय सर्वाभरणभूषिताम् ॥ १०४ ॥

समक्षमग्ने सस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ १०५ ॥

इय सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैना भद्र ते पाणिं गृह्णीष्व पाणिना ॥ १०६ ॥

पतिव्रता महाभागा छायेवानुगता सदा ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूत जल तदा ॥ १०७ ॥

एव दत्त्वा तदा सीता मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुत ॥ १०८ ॥

लक्ष्मणागच्छ भद्र ते ऊर्मिलामुद्यता मया ।
प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्यय ॥ १०९ ॥

तमेवमुक्त्वा जनको भरत चाभ्यभाषत ।
गृहाण पाणिं माण्डव्या पाणिना रघुनन्दन ॥ ११० ॥

शत्रुघ्न चापि धर्मात्मा अब्रवीज्जनकेश्वर ।
श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ॥ १११ ॥

जनकस्य वच श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणा वसिष्ठस्य मते स्थिता ॥ ११२ ॥

अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च ।
ऋषींश्चैव महात्मान सभार्या रघुसत्तमा ।
यथोक्तेन तथा चक्रुर्विवाह विधिपूर्वकम् ॥ ११३ ॥

अथ रात्र्या व्यतीताया विश्वामित्रो महामुनि ।
आपृच्छ्य तौ च राजानौ जगामोत्तरपर्वतम् ॥ ११४ ॥

राजाप्ययोध्याधिपति सह पुत्रैर्महात्मभि ।
ऋषीन् सर्वान् पुरस्कृत्य जगाम सबलानुग ॥ ११५ ॥

ददर्श भीमसकाश जटामण्डलधारिणम् ।
भार्गव जामदग्न्य त राजराजविमर्दिनम् ॥ ११६ ॥

त दृष्ट्वा भीमसकाश ज्वलन्तमिव पावकम् ।
ऋषयो रामरामेति वचो मधुरमब्रुवन् ॥ ११७ ॥

राम दाशरथिं रामो जामदग्न्योऽभ्यभाषत ।
राम दाशरथे राम वीर्य ते श्रूयतेऽद्भुतम् ॥ ११८ ॥

धनुषो भेदन चैव निखिलेन मया श्रुतम् ।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्य पर शुभम् ॥ ११९ ॥

तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ १२० ॥

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
आरोप्य स धनू रामः शरं सज्यं चकार ह ॥ १२१ ॥

जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीद्वचः ।
इमा पादगतिं राम तपोबलसमार्जितान् ॥ १२२ ॥

लोकानप्रतिमान्वापि हनिष्यामि यदिच्छसि ।
तेजोऽभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः ॥ १२३ ॥

रामो दाशरथिः श्रीमाश्चिक्षेप शरमुत्तमम् ।
स हतान् दृश्य रामेण स्वान् लोकांस्तपसार्जितान् ॥ १२४ ॥

जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ।
गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ॥ १२५ ॥

चोदयामास तां सेनां जगामाशु ततः पुरीम् ।
ननन्द सजनो राजा गृहे कामैः सुपूजितः ॥ १२६ ॥

कुमाराश्च महात्मानो वीर्येणाप्रतिमा भुवि ।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः ॥ १२७ ॥

शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः ।
रामस्तु सीतया सार्धं विजहार बहूनृतून् ॥ १२८ ॥

प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत ॥ १२९ ॥

तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥ १३० ॥

तया स राजर्षिसुतोऽभिरामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया
विभुः श्रिया विष्णुरिवामरेश्वरः ॥ १३१ ॥

इति बालकाण्डः ॥

# अयोध्याकाण्डम् ।

---

गच्छता मातुलकुलं भरतेन तदानघः ।
शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥

अथ राज्ञो बभूवैवं वृद्धस्य चिरजीविनः ।
प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ २ ॥

वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पनः ।
मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३ ॥

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः ।
हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ ४ ॥

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् ।
पाण्डुरस्यातपत्रस्य छायायां जरितं मया ॥ ५ ॥

सोऽहं विश्रममिच्छामि पुत्रं कृत्वा प्रजाहिते ।
संनिकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ ६ ॥

इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम् ।
वृष्टिमन्तं महामेघं नदन्त इव बर्हिणः ॥ ७ ॥

इच्छामो हि महाबाहुं रघुवीरं महाबलम् ।
गजेन महता यान्तं राम छत्रावृताननम् ॥ ८ ॥

बहवो नृप, कल्याणगुणा पुत्रस्य सन्ति ते ।
इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशापते ॥ ९ ॥

राम सत्पुरुषो लोके सत्यधर्मपरायण ।
धर्मज्ञ सत्यसन्धश्च शीलवाननसूयक ।
प्रियवादी च भूताना सत्यवादी च राघव ॥ १० ॥

देवासुरमनुष्याणा सर्वास्त्रेषु विशारद ।
सम्यग्विद्याव्रतस्नात यथावत्साङ्गवेदवित् ॥ ११ ॥

गान्धर्वेषु भुवि श्रेष्ठो बभूव भरताग्रज ।
यदा व्रजति सग्राम ग्रामार्थे नगरस्य वा ।
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ॥ १२ ॥

व्यसनेषु मनुष्याणा भृश भवति दु खित ।
उत्सवेषु च सर्वेषु पितेव परितुष्यति ॥ १३ ॥

सम्यग्योक्ता श्रेयसा च न विग्रह्य कथारुचि ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥ १४ ॥

प्रजापालनतत्त्वज्ञो न रागोपहतेन्द्रिय ।
शक्तस्त्रैलोक्यमप्येको भोक्तु किं नु महीमिमाम् ॥ १५ ॥

नास्य क्रोध प्रसादश्च निरर्थोऽस्ति कदाचन ।
तमेव गुणसम्पन्न राम सत्यपराक्रमम् ॥ १६ ॥

आशसते जन सर्वो राष्ट्रे पुरवरे तथा ।
स्त्रियो वृद्धास्तरुण्यश्च सायप्रात समाहिता ॥ १७ ॥

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः ।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १८ ॥

अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ १९ ॥

ततः सुमन्त्रं द्युतिमान्राजा वचनमब्रवीत् ।
रामः कृतात्मा भवता शीघ्रमानीयतामिति ॥ २० ॥

स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्रानयांचक्रे रथेन रथिनां वरम् ॥ २१ ॥

प्रासादस्थो रथगतं ददर्शायान्तमात्मजम् ।
गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् ॥ २२ ॥

दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् ।
चन्द्रकान्ताननं राममतीव प्रियदर्शनम् ॥ २३ ॥

रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् ।
घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः ॥ २४ ॥

न ततर्प समायान्तं पश्यमानो नराधिपः ।
प्रणमन्तं समुत्थाप्य तं परिष्वज्य भूमिपः ।
प्रदिश्य चास्मै रुचिरमासनं पुनरब्रवीत् ॥ २५ ॥

अथ प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् ।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ २६ ॥

इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने ।
व्रजेति रामः पितरमभिवाद्याभ्यगाद्गृहम् ॥ २७ ॥

ज्ञातिदासी यतो जाता कैकेय्यास्तु सहोषिता ।
प्रासादं चन्द्रसङ्काशमारुरोह यदृच्छया ॥ २८ ॥

प्रहृष्टमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् ।
अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ २९ ॥

प्रहर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् ।
अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थराम् ॥ ३० ॥

विदीर्यमाणा हर्षेण धात्री तु परया मुदा ।
आचचक्षेऽथ कुब्जायै भूयसीं राघवश्रियम् ॥ ३१ ॥

सा दह्यमाना कोपेन मन्थरा पापदर्शिनी ।
शयानामेत्य कैकेयीमिदं वचनमब्रवीत् ॥ ३२ ॥

उत्तिष्ठ मूढे, किं शेषे भयं त्वामभिवर्तते ।
उपप्लुतमघौघेन किमात्मानं न बुध्यसे ॥ ३३ ॥

अक्षय्यं सुमहद्देवि, प्रवृत्त त्वद्विनाशनम्।
रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ ३४ ॥

सा प्राप्तकालं कैकेयि, क्षिप्रं कुरु हितं तव ।
त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३५ ॥

अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् ।
प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥

दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया ।
राममाता सपत्नी ते कथं वैरं न यातयेत् ॥ ३७ ॥

एवमुक्ता तु कैकेयी कोपेन ज्वलितानना ।
दीर्घमुष्णं विनिश्वस्य मन्थरामिदमब्रवीत् ॥ ३८ ॥

अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम् ।
यौवराज्ये च भरतं क्षिप्रमेवाभिषेचये ॥ ३९ ॥

क्रोधागारे निपतिता सा बभौ मलिनाम्बरा ।
एकवेणीं दृढं बद्ध्वा गतसत्त्वेव किन्नरी ॥ ४० ॥

आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ।
उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् ॥ ४१ ॥

स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ।
पाण्डुराभ्रमिवाकाशं राहुयुक्तं निशाकरः ॥ ४२ ॥

तत्र तां पतितां भूमौ शयानामतथोचिताम् ।
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः ॥ ४३ ॥

कासौ कमलपत्राक्षीमुवाच वनितामिदम् ।
आत्मनो जीवितेनापि ब्रूहि यन्मनसेच्छसि ॥ ४४ ॥

यत्सात्मनि जानन्ती न मां शङ्कितुमर्हसि ।
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ ४५ ॥

भूमौ शेषे किमर्थं त्वं मयि कल्याणचेतसि ।
यावदावर्तते चक्रं तावती मे वसुंधरा ।
ततो गृहाण कैकेयि यद्राज्यं मनसेच्छसि ॥ ४६ ॥

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् ।
उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ ४७ ॥

स्मर राजन्, पुरावृत्तं तस्मिन्दैवासुरे रणे ।
तत्र चाच्यावयच्छत्रुस्तव जीवितमन्तरा ॥ ४८ ॥

तत्र चापि मया देव, यत्त्वं समभिरक्षितः ।
जाग्रत्या यतमानायास्ततो मे प्राददा वरौ ॥ ४९ ॥

तौ तु दत्तौ वरौ देव, निक्षेपौ मृगयाम्यहम् ।
तवैव पृथिवीपाल, सकाशे सत्यसंगर ॥ ५० ॥

तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् ।
अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ ५१ ॥

तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः ।
अभिषेकसमारम्भो राघवस्योपकल्पितः ।
अनेनैवाभिषेकेण भरतो मेऽभिषेच्यताम् ॥ ५२ ॥

नवपञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो भवतु तापसः ॥ ५३ ॥

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः ।
चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ ५४ ॥

प्रतिलभ्य चिरात्संज्ञां कैकेयीवाक्यताडितः ।
व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः ॥ ५५ ॥

मम वृद्धस्य कैकेयि, गतान्तस्य तपस्विनः ।
दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ५६ ॥

अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते ।
शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥ ५७ ॥

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि ।
विवेष्टमानमुद्वीक्ष्य सैक्ष्वाकमिदमब्रवीत् ॥ ५८ ॥

आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः ।
सत्यमाश्रित्य हि मया त्वं च धर्मं प्रचोदितः ॥ ५९ ॥

सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः ।
सत्यमेवाक्षया वेदाः सत्येनैवाप्यते परम् ॥ ६० ॥

धर्मस्येहाभिकामार्थं मम चैवाभिचोदनात् ।
प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ६१ ॥

समयं च ममार्येमं यदि त्वं न करिष्यसि ।
अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ ६२ ॥

एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया ।
नाशकत्पाशमुन्मोक्तुं बलिरिन्द्रकृतं यथा ॥ ६३ ॥

तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः ।
प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रशालिनी ॥ ६४ ॥

वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तदा ।
उपगृह्याशु संभारान्प्रविवेश पुरोत्तमम् ॥ ६५ ॥

स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् ।
द्वारे तु राजसिंहस्य सचिवं प्रियदर्शनम् ॥ ६६ ॥

तमुवाच महातेजाः सूतपुत्रं विशारदम् ।
वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ६७ ॥

इति तस्य वचः श्रुत्वा सूतपुत्रो महात्मनः ।
स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ६८ ॥

यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ६९ ॥

सुमन्त्र, राजा रजनीं रामहर्षसमुत्सुकः ।
प्रजागरपरिक्लान्तो निद्राया वशमेयिवान् ॥ ७० ॥

तद्गच्छ त्वरितं सूत, राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्या विचारणा ॥ ७१ ॥

प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ।
राममानय सूतेति यदस्यभिहितोऽनया ॥
किमिदं कारणं येन ममाज्ञा प्रतिहन्यते ।
न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ।
इति राजा दशरथः सूतं तत्रान्वशात्पुनः ॥ ७२ ॥

स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ।
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ॥ ७३ ॥

ततो ददर्श रुचिरं कैलासशिखरप्रभम् ।
रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ॥ ७४ ॥

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ।
प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ ७५ ॥

तं वैश्रवणसंकाशमुपविष्टं स्वलङ्कृतम् ।
ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ७६ ॥

तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।
ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ७७ ॥

प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने ।
राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ ७८ ॥

कौसल्यासुप्रजा राम पिता त्वां द्रष्टुमिच्छति ।
महिष्या सह कैकेय्या गम्यतां तत्र मा चिरम् ॥ ७९ ॥

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः ।
निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ ८० ॥

छत्रचामरपाणिस्तु लक्ष्मणो राघवानुजः ।
जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः ॥ ८१ ॥

स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः ।
संनिवर्त्य जनं सर्वं शुद्धान्तं पुनरभ्यगात् ॥ ८२ ॥

स ददर्शासने रामो निषण्णं पितरं शुभे ।
कैकेयीसहितं दीनं मुखेन परिशुष्यता ॥ ८३ ॥

स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् ।
ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ ८४ ॥

रामेत्युक्त्वा च वचनं बाष्पपर्याकुलेक्षणः ।
शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ८५ ॥

तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् ।
रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ८६ ॥

स दीन इव शोकेन विपण्णवदनद्युतिः ।
कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ ८७ ॥

कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता ।
कुपितस्तन्ममाचक्ष्व त्वं चैवैनं प्रसादय ।
किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ ८८ ॥

एवमुक्ता तु कैकेयी राघवेण महात्मना ।
उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ ८९ ॥

यदि तद्वक्ष्यते राजा शुभं वा यदि वाशुभम् ।
करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥ ९० ॥

एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् ।
उवाच वचनं रामस्तां देवीं नृपसन्निधौ ॥ ९१ ॥

अहो धिङ्नार्हसे देवि, वक्तुं मामीदृशं वचः ।
अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ ९२ ॥

तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् ।
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥ ९३ ॥

तमार्जवसमायुक्तमनार्या सत्यवादिनम् ।
उवाच रामं कैकेयी वचनं भृशदारुणम् ॥ ९४ ॥

सन्निदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् ।
त्वयारण्यं प्रवेष्टव्य नव वर्षाणि पञ्च च ॥ ९५ ॥

भरतस्त्वभिषिच्येत यदेतदभिषेचनम् ।
त्वदर्थे विहित राज्ञा तेन सर्वेण राघव ॥ ९६ ॥

एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन ।
सत्येन महता राम, तारयस्व नरेश्वरम् ॥ ९७ ॥

तदप्रियममित्रघ्नो वचनं मरणोपमम् ।
श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ ९८ ॥

नाहमर्थपरो देवि, लोकमावस्तुमुत्सहे ।
विद्धि मामृषिभिस्तुल्य केवलं धर्ममाश्रितम् ॥ ९९ ॥

यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् ।
ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ १०० ॥

वन्दित्वा चरणौ रामो विसञ्ज्ञस्य पितुस्तथा ।
कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥ १०१ ॥

धारयन्मनसा दुःखमिन्द्रियाणि निगृह्य च ।
प्रविवेशात्मवान्वेश्म मातुरप्रियशंसिवान् ॥ १०२ ॥

सा चिरस्यात्मज दृष्ट्वा मातृनन्दनमागतम् ।
अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥ १०३ ॥

स मातरमभिक्रान्तामुपसंगृह्य राघव ।
परिष्वक्तश्च बाहुभ्यामुपाघ्रातश्च मूर्धनि ॥ १०४ ॥

दत्तमासनमालम्ब्य भोजनेन निमन्त्रितः ।
मातरं राघवः किंचिद्व्रीडात्प्राञ्जलिरब्रवीत् ॥ १०५ ॥

भरताय महाराजो यौवराज्यं प्रयच्छति ।
मां पुनर्दण्डकारण्ये विवासयति तापसम् ॥ १०६ ॥

चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
मधुमूलफलैर्जीवन् हित्वा मुनिवदामिषम् ॥ १०७ ॥

सा निकृत्तेव सालस्य यष्टिः परशुना वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ॥ १०८ ॥

रामस्तूत्थापयामास मातरं गतचेतसम् ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥ १०९ ॥

नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
अनुमन्यस्व मां देवि, गमिष्यन्तमितो वनम् ॥ ११० ॥

सापनीय तमायासमुपस्पृश्य जलं शुचि ।
चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १११ ॥

प्रविवेशाथ रामस्तु स्वं वेश्म सुविभूषितम् ।
प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥ ११२ ॥

अथ सीता समुत्पत्य वेपमाना च तं पतिम् ।
अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ११३ ॥

तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् ।
तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ११४ ॥

सीते, तत्रभवांस्तातः प्रव्राजयति मां वनम् ।
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ॥ ११५ ॥

सा त्वं वसेह कल्याणि, राज्ञः समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ११६ ॥

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ ११७ ॥

नय मां वीर, विस्रब्धं पापं मयि न विद्यते ।
सुखं वने निवत्स्यामि यथैव भवने पितुः ॥ ११८ ॥

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ ११९ ॥

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा ।
प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ १२० ॥

किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम, जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ १२१ ॥

किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते ।
यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ १२२ ॥

स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् ।
शैलूष इव मां राम, परेभ्यो दातुमिच्छसि ॥ १२३ ॥

इति सा शोकसन्तप्ता विलप्य करुणं बहु ।
चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सुस्वरम् ॥ १२४ ॥

ता परिष्वज्य बाहुभ्या विसज्ञामिव दु खिताम् ।
उवाच वचन राम परिविश्वासयस्तदा ॥ १२५ ॥

आरभस्व शुभश्रोणि, वनवासक्षमा क्रिया ।
नेदानीं त्वद्दते सीते, स्वर्गोऽपि मम रोचते ॥ १२६ ॥

एव श्रुत्वा तु सवाद लक्ष्मण पूर्वमागत ।
सीतामुवाचातियशा राघव च महाव्रतम् ।
अह त्वानुगमिष्यामि वनमग्रे धनुर्धर ॥ १२७ ॥

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धन बहु ।
जग्मतु पितर द्रष्टु सीतया सह राघवौ ॥ १२८ ॥

स राजा पुत्रमायान्त दृष्ट्वा दूरात्कृताञ्जलिम् ।
तमसप्राप्य दु खार्त पपात भुवि मूर्च्छित ॥ १२९ ॥

अथ रामो मुहूर्तेन लब्धसज्ञ महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥ १३० ॥

आपृच्छे त्वा महाराज, सर्वेषामीश्वरोऽसि न ।
प्रस्थित दण्डकारण्य पश्य त्व कुशलेन माम् ॥ १३१ ॥

लक्ष्मण चानुजानीहि सीता चान्वेति मा वनम् ।
अनुजानीहि सर्वान्न शोकमुत्सृज्य मानद ॥ १३२ ॥

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलि ।
उपसगृह्य राजान चक्रुर्दीना प्रदक्षिणम ॥ १३३ ॥

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत ।
नैवेक्ष्वाकुवरस्तावत्संजहारात्मचक्षुषी ॥ १३४ ॥

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः ।
उपास्य तु शिवां सन्ध्यां दृष्ट्वा रात्रिमुपस्थिताम् ।
रामः सौमित्रिणा सार्धं सभार्यः संविवेश ह ॥ १३५ ॥

अथ रामोऽब्रवीच्छ्रीमान् सुमन्त्रं युज्यतां रथः ।
गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ १३६ ॥

सूतस्ततः सन्त्वरितः स्यन्दनं तैर्हयोत्तमैः ।
योजयित्वाथ रामाय प्राञ्जलिः प्रत्यवेदयत् ॥ १३७ ॥

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम् ।
जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १३८ ॥

तत्र त्रिपथगां दिव्यां शिवतोयामशैवलाम् ।
ददर्श राघवो गङ्गां पुण्यामृषिनिषेविताम् ॥ १३९ ॥

तत्र राजा गुहो नाम रामस्यात्मसमः सखा ।
निषादजात्यो बलवान्स्थपतिश्चेति विश्रुतः ॥ १४० ॥

स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् ।
वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥ १४१ ॥

ततश्चीरोत्तरासङ्गः सन्ध्यामन्वास्य पश्चिमाम् ।
जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ १४२ ॥

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः ।
गुहं वचनमक्लीबो रामो हेतुमदब्रवीत् ।
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय ॥ १४३ ॥

तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ।
लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः ॥ १४४ ॥

अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् ।
आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ १४५ ॥

तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः ।
प्रातिष्ठत सह भ्रात्रा वैदेह्या चापि भार्यया ॥ १४६ ॥

रामस्त्वाश्रममासाद्य त्रासयन्मृगपक्षिणः ।
गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत् ॥ १४७ ॥

स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् ।
सभार्यं सह च भ्रात्रा प्रतिजग्राह धर्मवित् ॥ १४८ ॥

सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः ।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ॥ १४९ ॥

रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ १५० ॥

ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ।
तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् ॥ १५१ ॥

ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १५२ ॥

सुरम्यमासाद्य तु चित्रकूटं
नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां
जहौ च दुःखं पुरविप्रवासात् ॥ १५३ ॥

अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।
अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ १५४ ॥

अथ सूतो महाराजं कृताञ्जलिरुपस्थितः ।
राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ १५५ ॥

राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् ।
अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ॥ १५६ ॥

सुकुमार्या तपस्विन्या सुमन्त्र, सह सीतया ।
राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ १५७ ॥

इति सूतो नरेन्द्रेण चोदितः सज्जमानया ।
उवाच वाचा राजानं सबाष्पपरिरुद्धया ॥ १५८ ॥

जटाः कृत्वा महाराज, चीरवल्कलधारिणौ ।
गङ्गामुत्तीर्य वीरौ तौ प्रयागाभिमुखौ गतौ ॥ १५९ ॥

सूतस्य वचनं श्रुत्वा वाचा परमदीनया ।
बाष्पोपहतया राजा तं सूतमिदमब्रवीत् ॥ १६० ॥

अतो नु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम् ।
इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ १६१ ॥

हा राघव, महाबाहो, हा ममायासनाशन ।
हा पितृप्रिय, मे नाथ, हाद्य क्वासि गतः सुत ॥ १६२ ॥

इति रामस्य मातुश्च सुमित्रायाश्च सन्निधौ ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ १६३ ॥

अतीतमाज्ञाय तु पार्थिवर्षभं
यशस्विनं सपरिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिता
प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ १६४ ॥

आनन्दितनिरानन्दा साश्रुकण्ठजनाकुला ।
अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १६५ ॥

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् ।
हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य पार्थिवम् ॥ १६६ ॥

एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् ।
वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ १६७ ॥

इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् ।
अराजकं हि नो राष्ट्रं न विनाशमवाप्नुयात् ॥ १६८ ॥

मनः समीक्ष्य द्विजवर्य, वृत्तं
नृपं विना राज्यमरण्यभूतम् ।

कुमारमिक्ष्वाकुसुत वदान्य
त्वमेव राजानमिहाभिषिञ्च ॥ १६९ ॥

वसिष्ठेनाभ्यनुज्ञाता दूता सत्वरिता ययु ।
विश्यासह्यपरिघ रम्य राजगृह पुरम् ।
राज्ञ पादौ गृहीत्वा तु तमूचुर्भरत वच ॥ १७० ॥

पुरोहितस्त्वा कुशल प्राह सर्वे च मन्त्रिण ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिक त्वया ॥ १७१ ॥

भरतश्चापि तान् दूतानेवमुक्तोऽभ्यभाषत ।
आपृच्छेऽह महाराज दूता सत्वरयन्ति माम् ॥ १७२ ॥

स मातामहमापृच्छय मातुल च युधाजितम ।
रथमारुह्य भरत शत्रुघ्नसहितो ययौ ॥ १७३ ॥

ता पुरीं पुरुषव्याघ्र सप्तरात्रोषित पथि ।
अयोध्याममतो दृष्ट्वा सारथिं वाक्यमब्रवीत् ॥ १७४ ॥

एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ।
अयोध्या दृश्यते दूरात् सारथे, पाण्डुमृत्तिका ॥ १७५ ॥

मलिन चाश्रुपूर्णाक्ष दीन ध्यानपर कृशम् ।
सस्त्रीपुम च पश्यामि जनमुत्कण्ठित पुरे ॥ १७६ ॥

इत्येवमुक्त्वा भरत सूत त दीनमानस ।
तान्यरिष्टान्ययोध्याया पश्यन्राजगृह ययौ ॥ १७७ ॥

श्रुत्वा तु पितरं वृत्तं भ्रातरौ च विवासितौ ।
भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ १७८ ॥

किं नु कार्यं हतस्येह मम राज्येन शोचतः ।
विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ १७९ ॥

तमेवं शोकसंतप्तं भरतं कैकयीसुतम् ।
उवाच वदतां श्रेष्ठो वसिष्ठो श्रेष्ठवाग्‌ऋषिः ॥ १८० ॥

अलं शोकेन भद्रं ते राजपुत्र, महायशाः ।
प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥ १८१ ॥

वसिष्ठस्य वचः श्रुत्वा भरतो धारणां गतः ।
प्रेतकार्याणि सर्वाणि कारयामास धर्मवित् ॥ १८२ ॥

ततः प्रभातसमये दिवसेऽथ चतुर्दशे ।
समेत्य राजकर्तारो भरतं वाक्यमब्रुवन् ॥ १८३ ॥

त्वमद्य भव नो राजा राजपुत्र, महायशाः ।
अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ॥ १८४ ॥

भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ।
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः ॥ १८५ ॥

ततः समुत्थितः काल्यमास्थाय स्यन्दनोत्तमम् ।
प्रययौ भरतः शीघ्रं रामदर्शनकाङ्क्षया ॥ १८६ ॥

अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोधसः ।
अधिरुह्य हयैर्युक्तान् रथान् सूर्यरथोपमान् ॥ १८७ ॥

ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः ।
समासेदुस्ततो गङ्गां शृङ्गिवेरपुरं प्रति ॥ १८८ ॥

गुहेन सार्धं भरतः समागतो
महानुभावः सजनः समाहितः ।
सुदुर्मनास्तं भरतं तदा पुनः
गुहः समाश्वासयदग्रजं प्रति ॥ १८९ ॥

सा पुण्या ध्वजिनी गङ्गा दाशैः संतारिता स्वयम् ।
मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ १९० ॥

भरद्वाजाश्रमं दृष्ट्वा क्रोशादेव नरर्षभः ।
बलं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १९१ ॥

समागम्य वसिष्ठेन भरतेनाभिवादितः ।
अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ १९२ ॥

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः ।
कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १९३ ॥

स यात्वा दूरमाध्वानं सुपरिश्रान्तवाहनः ।
उवाच भरतः श्रीमान् वसिष्ठं मन्त्रिणां वरम् ॥ १९४ ॥

अयं गिरिश्चित्रकूट इयं मन्दाकिनी नदी ।
एतत्प्रकाशते दूरात् नीलमेघनिभं वनम् ॥ १९५ ॥

निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः ।
अभिगन्तुं स काकुत्स्थमियेष गुरुवर्तकम् ॥ १९६ ॥

अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः ।
मन्दाकिनीमनुप्राप्तस्तं जनं चेदमब्रवीत् ॥ १९७ ॥

जगत्या पुरुषव्याघ्र आस्ते वीरासने रतः ।
जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥ १९८ ॥

एवं सविलपंस्तस्मिन्वने दशरथात्मजः ।
ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १९९ ॥

मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः ।
धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ २०० ॥

इत्येवं विलपन्दीनः प्रस्विन्नमुखपङ्कजः ।
पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ २०१ ॥

दुःखाभितप्तो भरतो राजपुत्रो महाबलः ।
उक्त्वार्येति सकृद्दीनं पुनर्नोवाच किंचन ॥ २०२ ॥

शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् ।
तावुभौ स समालिङ्ग्य रामश्चाश्रूण्यवर्तयत् ॥ २०३ ॥

ततः सुमन्त्रेण गुहेन चैव
समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च
यथाम्बरे शुक्रबृहस्पतिभ्याम् ॥ २०४ ॥

तान्पार्थिवान्वारणयूथपाभान्
समागतांस्तत्र महत्यरण्ये ।

वनौकसस्तेऽपि समीक्ष्य सर्वेऽ-
प्यश्रूण्यमुञ्चन्प्रविहाय हर्षम् ॥ २०५ ॥

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि ।
ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ॥ २०६ ॥

कथंचिदभिविज्ञाय विवर्णवदनं कृशम् ।
भ्रातरं भरतं रामः परिजग्राह बाहुना ॥ २०७ ॥

आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवः ।
अङ्के भरतमारोप्य पर्यपृच्छत्समाहितः ॥ २०८ ॥

क नु तेऽभूत्पिता तात, यदरण्यं त्वमागतः ।
न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ॥ २०९ ॥

कच्चिद्धारयते तात, राजा यत्त्वमिहागतः ।
कच्चिन्न दीनः सहसा राजा लोकान्तरं गतः ॥ २१० ॥

रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह ।
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे ।
दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ २११ ॥

उत्तिष्ठ पुरुषव्याघ्र, क्रियतामुदकं पितु ।
अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ २१२ ॥

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् ।
राघवो भरतेनोक्तां बभूव गतचेतनः ॥ २१३ ॥

सुमन्त्रस्तैर्नृपसुतैः सार्धमाश्वास्य राघवम् ।
अवातारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥ २१४ ॥

शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमम् ।
सिषिञ्चुरुदकं राज्ञे तातैतत्ते भवत्विति ॥ २१५ ॥

ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे ।
न्यस्य रामः सुदुःखार्तो रुदन्वचनमब्रवीत् ॥ २१६ ॥

इदं भुङ्क्ष्व महाराज, प्रीतो यदशना वयम् ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ २१७ ॥

ततः पर्णकुटीद्वारमासाद्य जगतीपतिः ।
परिजग्राह बाहुभ्यामुभौ भरतलक्ष्मणौ ॥ २१८ ॥

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ २१९ ॥

रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां हुतं जप्तं कृत्वा राममुपागमन् ॥ २२० ॥

तूष्णीं ते समुपासीना न कश्चित्किञ्चिदब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत ॥ २२१ ॥

सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ २२२ ॥

अद्यार्य, मुदिताः सन्तु सुहृदस्तेऽभिषेचने ।
अद्य भीताः पलायन्तां दुर्हृदस्ते दिशो दश ॥ २२३ ॥

आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ ।
अद्य तत्रभवन्तं च पितरं रक्ष किल्बिषात् ॥ २२४ ॥

शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि ।
बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ २२५ ॥

तं मत्तमिव मातङ्गं निश्वसन्तं पुनः पुनः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ २२६ ॥

पुरा भ्रातः, पिता नः स मातरं ते समुद्वहन् ।
मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ २२७ ॥

दैवासुरे च संग्रामे जनन्यै तव पार्थिवः ।
संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ २२८ ॥

तव राज्यं नरव्याघ्र, मम प्रव्राजनं तथा ।
तौ च राजा तदा तस्यै नियुक्तः प्रददौ वरौ ॥ २२९ ॥

तेन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ ।
चतुर्दश वने वासो वर्षाणि वरदानिकम् ॥ २३० ॥

सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः ।
सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ॥ २३१

भवानपि तथेत्येव पितरं सत्यवादिनम् ।
कर्तुमर्हति राजेन्द्र, क्षिप्रमेवाभिषेचनात् ॥ २३२ ॥

एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् ।
तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ॥ २३३ ॥

अधिरोहार्य, पादाभ्या पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेम विधास्यत ॥ २३४ ॥

सोऽधिरुह्य नरव्याघ्र पादुके ह्यवरुह्य च ।
प्रायच्छत्सुमहातेजा भरताय महात्मने ॥ २३५ ॥

ततश्शिरसि कृत्वा तु पादुके भरतस्तदा ।
आरुरोह रथ हृष्ट शत्रुघ्नेन समन्वित ॥ २३६ ॥

रथस्थ स हि धर्मात्मा भरतो भ्रातृवत्सल ।
नन्दिग्राम ययौ तूर्ण शिरस्यादाय पादुकाम ॥ २३७ ॥

पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा ।
स वालव्यजन छत्र धारयामास स स्वयम् ॥ २३८ ॥

ततस्तु भरत श्रीमानभिषिच्यार्यपादुके ।
तदधीनस्तदा राज्य कारयामास सर्वदा ॥ २३९ ॥

तस्मादन्यत्र गच्छाम इति सचिन्त्य राघव ।
प्रातिष्ठत स वैदेह्या लक्ष्मणेन च सगत ॥ २४० ॥

सोऽत्रेराश्रममासाद्य त ववन्दे महायशा ।
त चापि भगवानत्रि पुत्रवत्प्रत्यपद्यत ॥ २४१ ॥

ततस्ता शर्वरी प्रीत पुण्या शशिनिभानन ।
अर्चितस्तापसै सिद्धैरुवास रघुनन्दन ॥ २४२ ॥

एष पन्था महर्षीणा फलान्याहरता वने ।
अनेन तु वन दुर्ग गन्तु राघव ते क्षमम ॥ २४३ ॥

इतीव तै प्राञ्जलिभिस्तपस्विभि

द्विजै कृतस्वस्त्ययन परतप ।

वन सभार्य प्रविवेश राघव

सलक्ष्मण सूर्य इवाभ्रमण्डलम् ।। २४४ ।।

इति अयोध्याकाण्ड ॥

# आरण्यकाण्डम् ।



प्रविश्य तु महारण्यं दण्डकारण्यमात्मवान् ।
ददर्श रामो दुर्धर्षस्तापसाश्रममण्डलम् ॥ १ ॥

एष लक्ष्मण, निष्क्रामत्यगस्त्यो भगवानृषिः ।
एवमुक्त्वा महाबाहुरगस्त्यं सूर्यवर्चसम ॥ २ ॥

जग्राह परमप्रीतस्तस्य पादौ परंतपः ।
प्रतिजग्राह काकुत्स्थमर्चयित्वासनोदकैः ॥ ३ ॥

पूजयित्वा यथाकामं पुनरेव ततोऽब्रवीत् ।
अनेन धनुषा राम, हत्वा संख्ये महासुरान् ॥ ४ ॥

आजहार श्रियं दीप्तां पुरा विष्णुर्दिवौकसाम ।
तद्धनुस्तौ च तूणीरौ शरं खड्गं च मानद ॥ ५ ॥

जयाय प्रतिगृह्णीष्व वज्रं वज्रधरो यथा ।
एवमुक्त्वा महातेजाः समस्तं तद्वरायुधम ॥ ६ ॥

दत्त्वा रामाय भगवानगस्त्यः पुनरब्रवीत ।
इतो द्वियोजने तात, बहुमूलफलोदकः ॥ ७ ॥

देशो बहुमृगः श्रीमान पञ्चवट्यभिविश्रुतः ।
तत्र गत्वाश्रमपदं कृत्वा सौमित्रिणा सह ॥ ८ ॥

रंस्यसे त्वं पितुर्वाक्यं यथोक्तमनुपालयन ।
तौ तु तेनाभ्यनुज्ञातौ कृतपादाभिवन्दनौ ॥ ९ ॥

ततदाश्रमात्पञ्चवटीं जग्मतुः सह सीतया ।
अथ पञ्चवटीं गच्छन्नन्तरा रघुनन्दनः ।
आससाद महाकायं गृध्रं भीमपराक्रमम् ॥ १० ॥

जटायुषं तं प्रतिपूज्य राघवो
मुदा परिष्वज्य च संनतोऽभवत ।
पितुर्हि शुश्राव मखित्वमात्मवान
जटायुषा संकथितं पुनः पुनः ॥ ११ ॥

ततः पञ्चवटीं गत्वा नानाव्यालमृगायुताम् ।
राघवः पर्णशालायां हर्षमाहारयत्परम ॥ १२ ॥

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
तं देशं राक्षसी काचिदाजगाम यदृच्छया ॥ १३ ॥

सा तु शूर्पणखा नाम दशग्रीवस्य रक्षसः ।
भगिनी राममासाद्य ददर्श त्रिदशोपमम ॥ १४ ॥

यभूवेन्द्रोपमं दृष्ट्वा राक्षसी काममोहिता ।
निकृत्तकर्णनासा तु विस्वरं सा विनद्य च ॥ १५ ॥

ततस्तु सा राक्षससंघसंवृतं
खरं जनस्थानगतं विरूपिता ।
उपेत्य तं भ्रातरमुग्रदर्शनं
पपात भूमौ गगनाद्यथाशनिः ॥ १६ ॥

कराभ्यामुदरं हत्वा रुरोद भृशदुःखिता ।
ततस्तद्राक्षसं सैन्यं घोरवर्मायुधध्वजम् ॥ १७ ॥

निर्जगाम जनस्थानान्महानादं महाजवम् ।
रामोऽपि चारयंश्चक्षुः सर्वतो रणपण्डितः ॥ १८ ॥

ददर्श खरसैन्यं तद्युद्धाभिमुखमुत्थितम् ।
क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ॥ १९ ॥

ततो रामस्तु संक्रुद्धो मण्डलीकृतकार्मुकः ।
ससर्ज विशिखान् बाणान् शतशोऽथ सहस्रशः ॥ २० ॥

ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ।
आददू रक्षसां प्राणान् पाशाः कालकृता इव ॥ २१ ॥

अर्धाधिकमुहूर्तेन रामेण निशितैः शरैः ।
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ २२ ॥

खरदूषणमुख्यानां निहतानि महाहवे ।
तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम् ।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे ॥ २३ ॥

ततः शूर्पणखा दीना रावणं लोकरावणम् ।
अमात्यमध्ये संक्रुद्धा परुषं वाक्यमब्रवीत् ॥ २४ ॥

चतुर्दश सहस्राणि रक्षसां क्रूरकर्मणाम् ।
हतान्येकेन रामेण खरश्च सहदूषणः ॥ २५ ॥

त्वं तु लुब्धः प्रमत्तश्च पराधीनश्च रावण ।
विषये स्वे समुत्पन्नं भयं यो नावबुध्यसे ॥ २६ ॥

रामस्य तु विशालाक्षी पूर्णेन्दुसदृशानना ।
सीता नाम वरारोहा वैदेही तनुमध्यमा ॥ २७ ॥

तां तु विस्तीर्णजघनां पीनश्रोणिपयोधराम् ।
भार्यार्थे च तवानेतुमुद्यताहं वराननाम् ॥ २८ ॥

विरूपितास्मि क्रूरेण लक्ष्मणेन महाभुज ।
यदि तस्यामभिप्रायो भार्यार्थे तव जायते ।
शीघ्रमुद्रियतां पादो जायार्थमिह दक्षिणः ॥ २९ ॥

ततः शूर्पणखावाक्यं तच्छ्रुत्वा रोमहर्षणम् ।
सचिवानभ्यनुज्ञाय कार्यं बुद्ध्वा जगाम सः ॥ ३० ॥

ददर्श नियताहारं मारीचं नाम राक्षसम् ।
तं च पश्चादिदं वाक्यमब्रवीद्वाक्यकोविदः ॥ ३१ ॥

चतुर्दशसहस्राणि रक्षसामुग्रतेजसाम् ।
निहतानि शरैस्तीक्ष्णैर्मानुषेण पदातिना ॥ ३२ ॥

स हन्ता तस्य सैन्यस्य रामः क्षत्रियपांसनः ।
तस्य भार्यां जनस्थानात्सीतां सुरसुतोपमाम् ॥ ३३ ॥

आनयिष्यामि विक्रम्य साह्यस्तत्र मे भव ।
प्रत्युवाच महाप्राज्ञो मारीचो राक्षसेश्वरम् ॥ ३४ ॥

सुलभाः पुरुषा राजन्, सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ३५ ॥

न नूनं बुध्यसे रामं महावीर्यं गुणोन्नतम ।
शरार्चिषमनाधृष्यं चापखड्गेन्धनं रणे ।
रामाग्निं सहसा दीप्तं न प्रवेष्टुं त्वमर्हसि ॥ ३६ ॥

अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा ।
न त्वं समर्थस्तां हर्तुं रामचापाश्रयां वने ॥ ३७ ॥

किमुद्यममिमं व्यर्थं कृत्वा ते राक्षसाधिप ।
दृष्टश्चेत्तं रणे तेन तदन्तं तव जीवितम् ॥ ३८ ॥

किंतु शक्यं मया कर्तुमेवं त्वयि दुरात्मनि ।
एष गच्छाम्यहं तात, स्वस्ति तेऽस्तु निशाचर ॥ ३९ ॥

मनोहरं दर्शनीयं रूपं कृत्वा स राक्षसः ।
प्रलोभनार्थं वैदेह्या नानाधातुविचित्रितम् ।
विचचार पुनश्चित्रं दीपयन्निव तद्वनम् ॥ ४० ॥

अदृष्टपूर्वं तं दृष्ट्वा नानारत्नमयं मृगम ।
विस्मयं परमं सीता जगाम जनकात्मजा ॥ ४१ ॥

लोभितस्तेन रूपेण सीतया च प्रचोदितः ।
उवाच राघवो हृष्टो भ्रातरं लक्ष्मणं वचः ॥ ४२ ॥

यावद्गच्छामि सौमित्रे, मृगमानायितुं द्रुतम ।
अप्रमत्तेन ते भाव्यमाश्रमस्थेन सीतया ॥ ४३ ॥

तथा तु तं समादिश्य भ्रातरं रघुनन्दनः ।
बद्धासिर्धनुरादाय प्रदुद्राव यतो मृगः ॥ ४४ ॥

दर्शनादर्शनादेव सोऽपकर्षत राघवम्
सुदूरमाश्रमस्यास्य मारीचो मृगतां गतः ॥ ४५ ॥

दृष्ट्वा रामो महातेजास्तं हन्तुं कृतनिश्चयः ।
मुमोच ज्वलितं दीप्तमस्त्रं ब्रह्मविनिर्मितम् ॥ ४६ ॥

शरीरे मृगरूपस्य विनिर्भिद्य शरोत्तमः ।
मारीचस्यैव हृदयं बिभेदाशनिसंनिभः ॥ ४७ ॥

म्रियमाणस्तु मारीचो दध्यौ केन तु लक्ष्मणम् ।
इह प्रस्थापयेत्सीता शून्ये तां रावणो हरेत् ॥ ४८ ॥

स प्राप्तकालमाज्ञाय चकार च ततः स्वरम् ।
सदृशं राघवस्यैव हा सीते, लक्ष्मणेति च ॥ ४९ ॥

आर्तस्वरं तु तं भर्तुर्विज्ञाय सदृशं वने ।
उवाच लक्ष्मणं सीता गच्छ जानीहि राघवम् ॥ ५० ॥

अब्रवील्लक्ष्मणस्त्रस्तां सीतां मृगवधूमिव ।
अवध्यः समरे रामो नैवं त्वं वक्तुमर्हसि ।
न त्वामस्मिन्वने हातुमुत्सहे राघवं विना ॥ ५१ ॥

लक्ष्मणेनैवमुक्ता सा क्रुद्धा संरक्तलोचना ।
अब्रवीत्परुषं वाक्यं लक्ष्मणं सत्यवादिनम् ॥ ५२ ॥

तथा परुषमुक्तस्तु कुपितो राघवानुजः ।
समाकाङ्क्षन् भृशं रामं प्रतस्थे नचिरादिव ॥ ५३ ॥

तदासाद्य दशग्रीवः क्षिप्रमन्तरमास्थितः ।
जग्राह रावणः सीतां बुधः खे रोहिणीमिव ॥ ५४ ॥

ततः सा राक्षसेन्द्रेण ह्रियमाणा विहायसा ।
वनस्पतिगतं गृध्रं ददर्शायतलोचना ॥ ५५ ॥

समाक्रन्दद्भयपरा दुःखोपहतया गिरा ।
तद्बभूवाद्भुतं युद्धं गृध्रराक्षसयोस्तदा ॥ ५६ ॥

स छिन्नपक्षः सहसा रक्षसा रौद्रकर्मणा ।
निपपात हतो गृध्रो धरण्यामल्पजीवितः ॥ ५७ ॥

स तु तां राम रामेति रुदन्तीं लक्ष्मणेति च ।
जगामादाय चाकाशं रावणो राक्षसेश्वरः ॥ ५८ ॥

प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ।
निदधे रावणः सीतां मयो मायामिव स्त्रियम् ॥ ५९ ॥

दृष्ट्वाश्रमपदं शून्य रामो दशरथात्मजः ।
वृक्षाद्वृक्षं प्रधावन स गिरेरद्रिं नदान्नदीम् ।
बभूव विलपन्रामः शोकपङ्कार्णवाप्लुत. ॥ ६० ॥

तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम ।
वाचातिसन्नया राम जटायुरिदमब्रवीत् ।
हृता सा राक्षसेन्द्रेण रावणेन विहायसा ॥ ६१ ॥

इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ।
प्रतस्थे तु दिशं गृह्य प्रतीचीं नृवरात्मजः ॥ ६२ ॥

ततो महद्वर्त्म सुदूरसंक्रमः
क्रमेण गत्वा प्रतिकूलधन्वनम् ।
ददर्श पम्पां शुभदर्शकानना-
मनेकनानाविधपक्षिजालकाम् ॥ ६३ ॥

इति आरण्यकाण्डः ॥

# किष्किन्धाकाण्डम् ।



स तां पुष्करिणीं गत्वा पद्मोत्पलझषाकुलाम् ।
रामः सौमित्रिसहितो विललापाकुलेन्द्रियः ॥ १ ॥

तौ दृष्ट्वा तु महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
वरायुधधरौ वीरौ सुग्रीवः शङ्कितोऽभवत् ॥ २ ॥

ततः शुभतरं वाक्यं हनुमन्तमुवाच ह ।
वालिप्रणिहितावेतौ शङ्केऽहं पुरुषोत्तमौ ॥ ३ ॥

शुभात्मानौ यदि त्वेतौ जानीहि त्व प्लवङ्गम ।
वचो विज्ञाय हनुमान् सुग्रीवस्य महात्मनः ॥ ४ ॥

विनीतवदुपागम्य राघवौ प्रणिपत्य च ।
उवाच कामतो वाक्यं मृदु सत्यपराक्रमौ ॥ ५ ॥

राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ।
देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ॥ ६ ॥

सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ।
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति नित्यश ॥ ७ ॥

युवाभ्यां सह धर्मात्मा सुग्रीव. सख्यमिच्छति ।
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् ॥ ८ ॥

एवमुक्तस्तु सौमित्रि सुग्रीवसचिव कपिम् ।
अभ्यभाषत वाक्यज्ञो वाक्यज्ञ पवनात्मजम् ॥ ९ ॥

तमेव चावा मार्गाव सुग्रीव प्लवगेश्वरम ।
यथा ब्रवीपि हनुमन , सुग्रीववचनादिह ॥ १० ॥

तत्तथा हि करिष्यावो वचनात्कपिसत्तम ।
ततस्तु स महाप्राज्ञो हनुमान्मारुतात्मज ॥ ११ ॥

जगामादाय तौ वीरौ हरिराजाय राघवौ ।
श्रुत्वा हनुमतो वाक्य सुग्रीवो हृष्टमानस ॥ १२ ॥

दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम ।
यस्त्वमिच्छसि सौहार्द वानरेण मया सह ॥ १३ ॥

गृह्यता पाणिना पाणिर्मर्यादा वध्यता ध्रुवा ।
एतत्तु वचन श्रुत्वा सुग्रीवेण सुभाषितम ॥ १४ ॥

स प्रहृष्टमना हस्त पीडयामास पाणिना ।
ततोऽग्निं दीप्यमान तौ चक्रतुश्च प्रदक्षिणम ॥ १५ ॥

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
सुग्रीवो राघव वाक्यमित्युवाच प्रहृष्टवा ॥ १६ ॥

अह विनिष्कृतो राम, चरामीह भयार्दित ।
हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रित ॥ १७ ॥

वालिनो मे महाभाग, भयार्तस्याभय कुरु ।
प्रत्यभाषत काकुत्स्थ सुग्रीव प्रहसन्निव ॥ १८ ॥

वालिनं तं वधिष्यामि तव भार्यापहारिणम् ।
सुग्रीवः परमप्रीतः सुमहद्वाक्यमब्रवीत ॥ १९ ॥

अहमानीय दास्यामि तव भार्यामरिन्दम ।
उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ॥ २० ॥

आनयाम्यहमेतानि प्रत्यभिज्ञातुमर्हसि ।
इदं पश्येति रामाय दर्शयामास वानरः ॥ २१ ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिपालिताम् ।
वृक्षैरात्मानमावृत्य ह्यतिष्ठन् गहने वने ॥ २२ ॥

तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ।
सुग्रीव, कुरु तं शब्दं निष्पतेद्येन वानरः ॥ २३ ॥

स तु रामवचः श्रुत्वा सुग्रीवो हेमपिङ्गलः ।
ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ॥ २४ ॥

श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ।
वाली दंष्ट्राकरालस्तु क्रोधाद्दीप्ताग्निसंनिभः ॥ २५ ॥

नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ।
तयोर्युद्धमभूद्घोर वृत्रवासवयोरिव ॥ २६ ॥

राघवेण महावाणो वालिवक्षसि पातितः ।
ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः ॥ २७ ॥

वेगेनाभिहतो वाली निपपात महीतले ।
विवृतैर्दशनैर्घोरैः बभूवोत्क्रान्तजीवितः ॥ २८ ॥

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ॥ २९ ॥

आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ।
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम् ॥ ३० ॥

स वानरशतैस्तीक्ष्णैर्बहुभिः शस्त्रपाणिभिः ।
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः ॥ ३१ ॥

अब्रवीद्रामसान्निध्ये लक्ष्मणस्य च धीमतः ।
रामस्य दयिता भार्या स्नुषां दशरथस्य च ॥ ३२ ॥

सिद्धार्थाः संनिवर्तध्वमधिगम्य तु मैथिलीम् ।
ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ॥ ३३ ॥

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम ।
तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥ ३४ ॥

ददौ तस्य ततः प्रीतः स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परंतप ॥ ३५ ॥

तदुग्रशासनं भर्तुर्विज्ञाय हरिपुंगवाः ।
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ॥ ३६ ॥

दर्शनार्थं तु वैदेह्याः सर्वतः कपियूथपाः ।
विचित्य तु दिशं पूर्वां यथोक्तां सचिवैः सह ॥ ३७ ॥

अदृष्ट्वा विनतः सीतामाजगाम महाबलः ।
उत्तरां च दिशं सर्वां विचित्य स महाकपिः ॥ ३८ ॥

आगतः सह सैन्येन वीरः शतवलिस्तदा ।
सुषेणः पश्चिमामाशां विचित्य सह वानरैः ॥ ३९ ॥

समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ।
सह ताराङ्गदाभ्यां तु गत्वा स हनुमान कपिः ॥ ४० ॥

विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ ४१ ॥

उपविश्य महात्मानश्चिन्तामापेदिरे तदा ।
तीक्ष्णः प्रकृत्या सुग्रीवः स्वामिभावे व्यवस्थितः ॥ ४२ ॥

न क्षमिष्यति नः सर्वानपराधकृतो गतान् ।
अप्रवृत्तौ च सीतायाः पापमेव करिष्यति ॥ ४३ ॥

एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ।
दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ॥ ४४ ॥

संपातिर्नाम नाम्ना तु चिरंजीवी विहंगमः ।
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ ४५ ॥

इतो द्वीपे समुद्रस्य संपूर्णे शतयोजने ।
तस्मिन् लङ्कापुरी रम्या निर्मिता विश्वकर्मणा ॥ ४६ ॥

तस्यां वसति वैदेही पीतकौशेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ ४७ ॥

संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् ।
हृष्टाः सागरमाजग्मुः सीतादर्शनकाङ्क्षिणः ॥ ४८ ॥

आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुः सहसा सर्वे कथं कार्यमिति ब्रुवन् ।। ४९ ।।

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवान् समुदीक्ष्यैवं हनूमन्तमथाब्रवीत् ।। ५० ।।

हनुमन्, हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ।। ५१ ।।

त्वं हि वायुसुतो वत्स, प्लवने चापि तत्सम. ।
वयमद्य गतप्राणा भवानस्मासु सांप्रतम् ।। ५२ ।।

उत्तिष्ठ हरिशार्दूल, लङ्घयस्व महार्णवम ।
विक्रमस्व महावेगो विष्णुस्त्रीनिव विक्रमान् ।। ५३ ।।

ततस्तं मारुतप्रख्यः स हरिर्मारुतात्मजः ।
आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ।। ५४ ।।

स वेगवान् वेगसमाहितात्मा
हरिप्रवीरः परवीरहन्ता ।
मनः समाधाय महानुभावो
जगाम लङ्कां मनसा मनस्वी ।। ५५ ।।

इति किष्किन्धाकाण्डः ॥

---

# सुन्दरकाण्डम् ।



ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १ ॥

उत्पपाताथ वेगेन वेगवानविचारयन् ।
जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ २ ॥

जगाम वेगवान् लङ्कां लङ्घयित्वा महोदधिम् ।
निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ॥ ३ ॥

भवनाद्भवनं गच्छन्ददर्श पवनात्मजः ।
विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ४ ॥

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं महदुद्वमन्त ।
ददर्श धीमान् दिवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ ५ ॥

या भाति लक्ष्मीर्भुवि मन्दरस्था
तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥ ६ ॥

भवनं राक्षसेन्द्रस्य बहुप्रासादसङ्कुलम् ।

मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनूमान् हरिलोचनः ॥ ७ ॥

पत्नीः स प्रियभार्यस्य तस्य रक्षःपतेर्गृहे ।
अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ८ ॥

कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ।
तर्कयामास सीतेति रूपयौवनसंपदा ।
अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ॥ ९ ॥

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ॥ १० ॥

नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
अन्येयमिति निश्चित्य पानभूमौ चचार सः ॥ ११ ॥

निरीक्षमाणश्च तदा ताः स्त्रियः स महाकपिः ।
जगाम महतीं चिन्तां धर्मसाध्वसशङ्कितः ॥ १२ ॥

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ।
इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ १३ ॥

तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ।
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ॥ १४ ॥

न हि मे मनसः किंचिद्वैकृत्यमुपपद्यते ।
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ॥ १५ ॥

शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ।
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ॥ १६ ॥

स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सपरिमार्गणे ।
तदिदं मार्गितं तावच्छुद्धेन मनसा मया ।
रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ १७ ॥

अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ १८ ॥

करोति सफलं जन्तोः कर्म यत्तत्करोति सः ।
तस्मादनिर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् ॥ १९ ॥

यावत्सीतां हि पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ २० ॥

अशोकवनिका चेयं दृश्यते सुमहाद्रुमा ।
इमामभिगमिष्यामि न हीयं विचिता मया ॥ २१ ॥

स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः ।
उदतिष्ठन्महातेजा हनूमान्मारुतात्मजः ॥ २२ ॥

स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ।
काञ्चनीं शिंशुपामेकां ददर्श हनुमान् कपिः ॥ २३ ॥

तमारुह्य महाबाहुः शिंशुपां पर्णसंवृताम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ २४ ॥

ततो मलिनसवीता राक्षसीभि समावृताम् ।
उपवासकृशा दीना नि श्वसन्तीं पुन पुन ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ २५ ॥

ता समीक्ष्य विशालाक्षीमधिक मलिना कृशाम ।
तर्कयामास सीतेति कारणैरुपपादिभि ॥ २६ ॥

ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ।
यथारूपा हि दृष्टा वै तथा रूपेयमङ्गना ॥ २७ ॥

वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत ।
मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ।
तान्यैवैतानि मन्येऽङ्ग यानि रामोऽन्वकीर्तयत ॥ २८ ॥

पीत कनकपट्टाभ स्रस्त तद्वसन शुभम् ।
इद चिरगृहीतत्वाद्वसन क्लिष्टवत्तरम् ।
तथापि नून तद्वर्ण तथा श्रीमद्यथेतरत् ॥ २९ ॥

अस्या देव्या मनस्तस्मिस्तस्य चास्या प्रतिष्ठितम ।
तेनेय स च धर्मात्मा मुहूर्तमपि जीवति ॥ ३० ॥

एव सीता तदा दृष्ट्वा हृष्ट पवनसभव ।
जगाम मनसा राम प्रशशस च त प्रभुम् ॥ ३१ ॥

तथा विप्रेक्षमाणस्य वन पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ॥ ३२ ॥

विबुध्य तु यथाकाल राक्षसेन्द्र प्रतापवान् ।
अशोकवनिकामेव प्राविशत्सन्ततद्रुमाम् ॥ ३३ ॥

ततो दृष्ट्वैव वैदेही रावण राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥ ३४ ॥

स तां पतिव्रतां दीना निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ ३५ ॥

कामये त्वां विशालाक्षि, बहुमन्यस्व मां प्रिये ।
प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ॥ ३६ ॥

पिब विहर रमस्व भुङ्क्ष्व भोगान्
धननिचयं प्रदिशामि मेदिनीं च ।
मयि लल ललने यथासुखं त्वं
त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३७ ॥

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ॥ ३८ ॥

इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ।
तथा हि विपरीता ते बुद्धिराचारवर्जिता ॥ ३९ ॥

इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान्मामनार्य, निरीक्षतः ।
कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते ॥ ४० ॥

सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
संदिदेश ततः सर्वा राक्षसीर्घोरदर्शनाः ॥ ४१ ॥

यथा मद्वशगा सीता क्षिप्रं भवति जानकी ।
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च ॥ ४२ ॥

इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ।
ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ॥ ४३ ॥

सा राक्षसेन्द्रस्य वचो निशम्य
तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते
सिंहाभिपन्ना गजराजकन्या ॥ ४४ ॥

प्रवेपमाना परिशुष्कवक्त्रा
नगोत्तमं पुष्पितमाससाद ।
शोकाभितप्ता बहुधा विचिन्त्य
सीताथ वेण्युद्ग्रथनं गृहीत्वा ॥ ४५ ॥

उद्बध्य वेण्युद्ग्रथनेन शीघ्र-
महं गमिष्यामि यमस्य मूलम् ।
उपस्थिता सा मृदुसर्वगात्री
शाखां गृहीत्वाथ नगस्य तस्य ॥ ४६ ॥

तस्यास्तु रामं प्रविचिन्तयन्त्या
रामानुजं स्वं च कुलं शुभाङ्गयाः ।
शोकानिमित्तानि तथा बहूनि
धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः
पुरापि सिद्धान्युपलक्षितानि ॥ ४७ ॥

हनूमानपि विक्रान्तः सर्वं शुश्राव तत्त्वतः ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ ४८ ॥

निशाचरीणां प्रत्यक्षमनर्हं चाभिभाषणम् ।
अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति संदेहः परित्यक्ष्यति जीवितम् ॥ ४९ ॥

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥ ५० ॥

प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ।
एष दोषो महान् हि स्यान्मम सीताभिभाषणे ॥ ५१ ॥

भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ ५२ ॥

अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ५३ ॥

न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ।
इति संचिन्त्य हनुमान चकार मतिमान्मतिम ॥ ५४ ॥

राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन ।
नैनामुद्वेजयिष्यामि तद्बन्धुगतमानमाम ॥ ५५ ॥

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ ५६ ॥

राजा दशरथो नाम रथकुञ्जरवाजिमान ।
तस्य पुत्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ॥ ५७ ॥

रामो नाम विशेषज्ञः श्रेष्ठः सर्वधनुष्मताम् ।
तस्य सत्याभिसन्धस्य वृद्धस्य वचनात्पितुः ॥ ५८ ॥

सभार्यः सह च भ्रात्रा वीरः प्रव्राजितो वनम् ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ ५९ ॥

स मार्गमाणस्तां देवीं रामः सीतामनिन्दिताम् ।
आससाद वने मित्रं सुग्रीवं नाम वानरम् ॥ ६० ॥

सुग्रीवेणापि संदिष्टा हरयः कामरूपिणः ।
दिक्षु सर्वासु तां देवीं विचिन्वन्ति सहस्रशः ॥ ६१ ॥

अस्या हेतोर्विशालाक्ष्याः सागरं वेगवान् प्लुतः ।
यथा रूपां यथा वर्णां यथा लक्ष्मीं च निश्चिताम् ।
अश्रौषं राघवस्याहं सेयमासादिता मया ॥ ६२ ॥

जानकी चापि तच्छ्रुत्वा विस्मयं परमं गता ।
सा ददर्श कपिं तत्र प्रश्रितं प्रियवादिनम् ॥ ६३ ॥

तामब्रवीन्महातेजा हनूमान्मारुतात्मजः ।
अहं रामस्य संदेशाद्देवि, दूतस्त्वागतः ॥ ६४ ॥

वैदेहि, कुशली रामस्त्वां च कौशलमब्रवीत् ।
लक्ष्मणश्च महातेजा भर्तुस्तेऽनुचरः प्रियः ॥ ६५ ॥

सा तयोः कुशलं देवी निशम्य नरसिंहयोः ।
प्रीतिसंहृष्टसर्वाङ्गी हनूमन्तमथाब्रवीत् ॥ ६६ ॥

कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ६७ ॥

भूय एव महातेजा हनूमान्मारुतात्मजः ।
अब्रवीत्प्रश्रितं वाक्यं सीताप्रत्ययकारणात् ॥ ६८ ॥

रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ।
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम् ॥ ६९ ॥

भर्तारमिव संप्राप्ता जानकी मुदिताभवत् ।
अभिज्ञानं प्रयच्छ त्वं जानीयाद्राघवो हि यत् ॥ ७० ॥

एवमुक्ता हनुमता सीता सुरसुतोपमा ।
उवाच वचनं मन्दं बाष्पप्रग्रथिताक्षरम् ॥ ७१ ॥

शैलस्य चित्रकूटस्य पादे पूर्वोत्तरे पुरा ।
वायसः सहसागम्य विददार स्तनान्तरे ॥ ७२ ॥

स मां दृष्ट्वा महाबाहुर्वितुन्नां स्तनयोस्तदा ।
ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ॥ ७३ ॥

ततो वस्त्रगतं मुक्त्वा दिव्यं चूडामणिं शुभम् ।
प्रदेयो राघवायेति सीता हनुमते ददौ ।
ततस्तु हनुमान् वीरो बभञ्ज प्रमदावनम् ॥ ७४ ॥

निजघ्नाह महाबाहुर्मारुतात्मजमिन्द्रजित् ।
स ददर्श महातेजा रावणः कपिसत्तमम् ॥ ७५ ॥

तं समीक्ष्य महासत्त्वं सत्त्ववान् हरिसत्तमः ।
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ ७६ ॥

अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ ७७ ॥

समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहागतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ ७८ ॥

मद्भवान् दृष्टधर्मार्थस्तप.कृतपरिग्रहः ।
परदारान् महाप्राज्ञ, नोपरोद्धुं त्वमर्हसि ॥ ७९ ॥

न तु धर्मोपसंहारमधर्मफलसंयुतम् ।
तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ ८० ॥

प्राप्तं धर्मफलं तावद्भवता नात्र संशय. ।
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ ८१ ॥

जनस्थानवधं बुद्ध्वा बुद्ध्वा वालिवधं तथा ।
रामसुग्रीवसख्यं च बुद्धयस्व हितमात्मनः ॥ ८२ ॥

यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ।
कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ॥ ८३ ॥

तदलं कालपाशेन सीताविग्रहरूपिणा ।
स्वयं स्कन्धावसक्तेन क्षममात्मनि चिन्त्यताम् ॥ ८४ ॥

सर्वान् लोकान् सुसंहृत्य सभूतान् सचराचरान् ।
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ८५ ॥

ब्रह्मा स्वयम्भूश्चतुराननो वा
रुद्रस्त्रिणेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्र सुरनायको वा
त्रातु न शक्ता युधि रामवध्यम् ॥ ८६ ॥

तस्य तद्वचन श्रुत्वा वानरस्य महात्मन ।
आज्ञापयद्राक्षसेन्द्र पुर सर्व सचत्वरम् ।
लाङ्गूलेन प्रदीप्तेन रक्षोभि परिणीयताम ॥ ८७ ॥

तस्य तद्वचन श्रुत्वा राक्षसा कोपकर्कशा ।
वेष्टयन्ति स्म लाङ्गुल जीर्णै कार्पासकै पटै ।
तैलेन चाभिषिच्याथ तेऽग्नि तत्राभ्यपातयन ॥ ८८ ॥

लङ्का समस्ता सदीप्य लाङ्गूलाग्निं महाबल ।
निर्वापयामास तदा समुद्रे हरिसत्तम ॥ ८९ ॥

स लिलङ्घयिषुर्भीम सलील लवणार्णवम् ।
कल्लोलास्फालवेलान्तमुत्पपात नभो हरि ॥ ९० ॥

निपपात महेन्द्रस्य शिखरे पादपाकुले ।
दृष्ट्वा सीतेति विक्रान्त सक्षेपेण न्यवेदयत् ॥ ९१ ॥

प्रीतिमन्तस्तत सर्वे वायुपुत्रपुर सरा ।
महेन्द्राद्रिं परित्यज्य पुप्लुवु प्लवगर्षभा ॥ ९२ ॥

निपेतुर्हरिराजस्य समीपे राघवस्य च ।
हनूमांश्च महाबाहु प्रणम्य शिरसा तत ।
नियतामक्षता देवीं राघवाय न्यवेदयत् ॥ ९३ ॥

तौ जाताश्वासौ राजपुत्रौ विदित्वा
तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाख्यातं सर्वमेवानुपूर्व्या-
द्वाचा संपूर्णं वायुपुत्रः शशंस ॥ ९४ ॥

इति सुन्दरकाण्डः ॥

# युद्धकाण्डम् ।

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १

कृतं हनुमता कार्यं सुमहद्भुवि दुर्लभम् ।
मनसापि यदन्येन न शक्यं धरणीतले ॥ २ ॥

इत्युक्त्वा प्रीतिसंहृष्टो रामस्तं परिषस्वजे ।
ततो वानरराजेन लक्ष्मणेन च पूजितः ॥ ३ ॥

जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ।
रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ ४ ॥

रामस्य वचनं श्रुत्वा सुग्रीवः सह लक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ ५ ॥

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥ ६ ॥

अब्रवीद्राक्षसान्सर्वान् ह्रिया किंचिदवाङ्मुखः ।
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ॥ ७ ॥

आकुला च पुरी लङ्का सर्वा हनुमता कृता ।
उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेन ॥ ८ ॥

अदेया च यथा सीता वध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतं चाभिधीयताम् ॥ ९ ॥

कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ।
अहमुत्सादयिष्यामि शत्रूंस्तव विशां पते ॥ १० ॥

निशाचरेन्द्रस्य निशम्य वाक्यं
स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्य-
मुवाच वाक्यं हितमर्थयुक्तम् ॥ ११ ॥

यावन्न गृह्णन्ति शिरांसि बाणा
रामेरिता राक्षसपुंगवानाम् ।
वज्रोपमा वायुसमानवेगाः
प्रदीयतां दाशरथाय मैथिली ॥ १२ ॥

जीवंस्तु रामस्य न मोक्ष्यसे त्वं
गुप्तः सवित्राप्यथवा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्यो-
र्नभो न पातालमनुप्रविष्टः ॥ १३ ॥

ततो महात्मा वचनं बभाषे
तत्रेन्द्रजिन्नैरृतयोधमुख्यः ।
त्रिलोकनाथो ननु देवराजः
शक्रो मया भूमितले निविष्टः ॥ १४ ॥

सोऽहं सुराणामपि गर्वहन्ता
दैत्योत्तमानामपि शोकदाता ।
कथं नरेन्द्रात्मजयोर्न शक्तो
मनुष्ययोः प्राकृतयोः सुवीर्यः ॥ १५ ॥

ततो महार्थं वचनं बभाषे
विभीषणः शस्त्रभृतां वरिष्ठम ।
न तात, मन्त्रे तव निश्चयोऽस्ति
बालस्त्वमद्याप्यविपक्वबुद्धिः ॥ १६ ॥

पुत्रप्रवादेन तु रावणस्य
त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
त्वमेव वध्यश्च सुदुर्मतिश्च
स चापि वध्यो य इहानयत्त्वाम् ॥ १७ ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम ।
अब्रवीत्परुषं वाक्यं रावणः कालचोदितः ॥ १८ ॥

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसने ह्येते ज्ञातीनां ज्ञातयस्तदा ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं च नः ॥ १९ ॥

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥ २० ॥

इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः ॥ २१ ॥

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
स त्वं भ्रातासि मे राजन्, ब्रूहि मां यद्यदिच्छसि ॥ २२ ॥

इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २३ ॥

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ।
उवाच च महाप्राज्ञः स्वरेण महता महान् ॥ २४ ॥

रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ २५ ॥

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम ।
साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ २६ ॥

स तु न प्रतिजग्राह रावणः कालचोदितः ।
सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ २७ ॥

सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ २८ ॥

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ।
लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ २९ ॥

रावणस्यानुजो भ्राता विभीषण इति श्रुतः ।
चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ ३० ॥

सुग्रीवस्य तु तद्वाक्यं रामः श्रुत्वा विमृश्य च ।
ततः शुभतरं वाक्यमुवाच हरिपुंगवम् ॥ ३१ ॥

सकृदेव प्रपन्नाय तवास्मीति च वादिने ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ ३२ ॥

आनयैनं हरिश्रेष्ठ, दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव, यदि वा रावणः स्वयम् ॥ ३३ ॥

राघवेणाभये दत्ते संनतो रावणानुजः ।
स तु रामस्य धर्मात्मा निपपात विभीषणः ।
पादयोः शरणापेक्षी चतुर्भिः सह राक्षसैः ॥ ३४ ॥

अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः ।
अनुजो रावणस्याहं तेन चाप्यवमानितः ॥ ३५ ॥

भवन्तं सर्वभूतानां शरण्यं शरणं गतः ।
इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ॥ ३६ ॥

अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ।
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ॥ ३७ ॥

राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ।
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ ३८ ॥

ततः सागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ ३९ ॥

स त्रिरात्रोपितस्तत्र नयज्ञो धर्मवत्सलः ।
न च दर्शयते मन्दस्तदा रामस्य सागरः ॥ ४० ॥

समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः ।
मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ ४१ ॥

आघूर्णिततरङ्गौघः कालिकानिलसंकुलः ।
उद्वर्तितमहाग्राह. संभ्रान्तोरगराक्षसः ॥ ४२ ॥

सागरः समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ।
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ॥ ४३ ॥

ग्राहनक्राकुलजलं स्तम्भयामि कथंचन ।
हरीणां तरणे राम, करिष्यामि यथा स्थलम् ॥ ४४ ॥

अयं सौम्य, नलो नाम तनुजो विश्वकर्मणः ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ ४५ ॥

नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ।
वानराणां हि सा तीर्णा वाहिनी नलसेतुना ॥ ४६ ॥

तौ तु दीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ।
रावणस्य पुरीं लङ्कामासेदतुररिंदमौ ॥ ४७ ॥

तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः ।
यथानिवेशं संपीड्य न्यविशन्त वनौकसः ॥ ४८ ॥

एतस्मिन्नन्तरे घोरः संग्रामः समवर्तत ।
रक्षसां वानराणां च यथा देवासुरे पुरा ॥ ४९ ॥

रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ।
वर्तमाने तदा घोरे संग्रामे भृशदारुणे ॥ ५० ॥

इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ।
सोऽन्तर्धानगतः पापो रावणी रणकर्कशः ॥ ५१ ॥

बिभेद समरे क्रुद्धः सर्वगात्रेषु राक्षसः ।
मायया संवृतस्तत्र मोहयन्राघवौ युधि ॥ ५२ ॥

ततो मुहूर्ताद्गरुडं वैनतेयं महाबलम् ।
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम् ॥ ५३ ॥

तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः ।
यैस्तु सत्पुरुषौ बद्धौ शरभूतैर्महाबलौ ॥ ५४ ॥

ततः सुपर्णः काकुत्स्थौ दृष्ट्वा प्रत्यभिनन्दितः ।
विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे ॥ ५५ ॥

वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः ॥ ५६ ॥

तावुत्थाप्य महावीर्यौ गरुडो वासवोपमौ ।
जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ५७ ॥

ततो रामो महातेजा धनुरादाय वीर्यवान् ।
किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ ५८ ॥

स कुम्भकर्णः संक्रुद्धो गदामुद्यम्य वीर्यवान् ।
अर्दयन् सुमहाकायः समन्ताद्व्याभिपद्रिपून ॥ ५९ ॥

दुद्राव रामं सहसाभिगर्जन्
राहुर्यथा चन्द्रमिवान्तरिक्षे ।
स तन्महापर्वतकूटसंनिभं
विवृत्तदंष्ट्रं चलचारुकुण्डलम् ॥
चकर्त रक्षोऽधिपतेः शिरस्तथा
यथैव वृत्रस्य पुरा पुरन्दरः ॥ ६० ॥

तं श्रुत्वा निहतं संख्ये कुम्भकर्णं महाबलम् ।
रावणः शोकसंतप्तो मुमोह च पपात च ॥ ६१ ॥

ततस्तु राजानमुदीक्ष्य दीनं
शोकार्णवे संपरिपुप्लुवानम् ।
अथर्षभो राक्षसराजसूनु-
स्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥
अद्यैव रामं सह लक्ष्मणेन
संतर्पयिष्यामि शरैरमोघैः ॥ ६२ ॥

स एवमुक्त्वा त्रिदशेन्द्रशत्रु-
रापृच्छ्य राजानमदीनसत्त्वः ।
समारुरोहानिलतुल्यवेगं
रथं खरश्रेष्ठसमाधियुक्तम् ॥ ६३ ॥

तमास्थाय महातेजा रथं हरिरथोपमम् ।
जगाम सहसा तत्र यत्र युद्धमरिंदमः ॥ ६४ ॥

स शरैः सूर्यसङ्काशैः सुमुक्तैः शीघ्रगामिभिः ।
वानराणामनीकानि निर्ममन्थ महारणे ॥ ६५ ॥

ववर्ष रामं शरवृष्टिजालैः
सलक्ष्मणं भास्कररश्मिकल्पैः ।
स्वयंभुवा दत्तवरो महात्मा
समास्थितोऽन्तर्हितभीमकायः ॥ ६६ ॥

स तत्तदा वानरसैन्यमेवं
रामं च संख्ये सह लक्ष्मणेन ।
विपादयित्वा सहसा विवेश
पुरीं दशग्रीवभुजाभिगुप्ताम ॥ ६७ ॥

ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् ।
मृतसंजीविनीं चैव विशल्यकरणीमपि ॥ ६८ ॥

सावर्ण्यकरणीं चैव संधानकरणीं तथा ।
ताः सर्वा हनुमन्, गृह्य क्षिप्रमागन्तुमर्हसि ॥ ६९ ॥

श्रुत्वा जाम्बवतो वाक्यं हनूमान् हरिपुंगवः ।
जगाम हरिशार्दूलो दिशः शब्देन नादयन् ॥ ७० ॥

स योजनसहस्राणि समतीत्य महाकपिः ।
दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥ ७१ ॥

स तस्य शृङ्गं सनगं सनागं
सकाञ्चनं धातुसहस्रजुष्टम ।
विकीर्णकूटं ज्वलिताग्रसानुं
प्रगृह्य वेगात्सहसोन्ममाथ ॥ ७२ ॥

स तं समुत्पाट्य खमुत्पपात
विन्नास्य लोकान् ससुरासुरेन्द्रान् ।
सहस्रधारेण सपावकेन
चक्रेण खे विष्णुरिवार्पितेन ॥ ७३ ॥

सर्वे विशल्या विरुजः क्षणेन
हरिप्रवीरा निहताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधीनां
सुप्ता निशान्तेष्विव संप्रसुप्ताः ॥ ७४ ॥

स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितो ययौ ।
ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ ७५ ॥

स बभूव तदा भीमो नरराक्षससिंहयोः ।
विमर्दस्तुमुलो युद्धः परस्परजयैषिणोः ॥ ७६ ॥

लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् ।
अन्योऽन्यं तावभिघ्नन्तौ न श्रमं प्रत्यपद्यताम् ॥ ७७ ॥

तदैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
संधाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ॥ ७८ ॥

धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ॥ ७९ ॥

इत्युक्त्वा बाणमाकर्णं विकृष्य समजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जेन्द्रजितं प्रति ॥ ८० ॥

स शिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात्पातयामास भूतले ॥ ८१ ॥

हर्षं च शक्रो भगवान् सह सर्वैः सुरर्षभैः ।
जगाम निहते तस्मिन्राक्षसे पापकर्मणि ॥ ८२ ॥

रावणः पुत्रशोकेन भृशमाकुलचेतनः ।
अब्रवीच्च स तान् सर्वान् बलमुख्यान महाबलः ॥ ८३ ॥

एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ।
इत्येतद्राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः ।
निर्ययुस्ते रथैः शीघ्रैर्नागानीकैः सुसंवृताः ॥ ८४ ॥

ततो रामो महातेजा धनुरादाय वीर्यवान् ।
प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥ ८५ ॥

एष हन्ति गजानीकमेष हन्ति महारथान् ।
एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिः सह ॥ ८६ ॥

इति ते राक्षसाः सर्वे रामस्य सदृशान्रणे ।
अन्योऽन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य ते ॥ ८७ ॥

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ ८८ ॥

ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् ।
व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥ ८९ ॥

तान् शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ॥ ९० ॥

राघवो रावणं तूर्णं रावणो राघवं तदा ।
अन्योऽन्यं विविधैस्तीक्ष्णैः शरैरभिववर्षतुः ॥ ९१ ॥

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ ९२ ॥

ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनः ।
चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ ९३ ॥

स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः ।
कृतकर्मा निभृतवत्स्वतूणीं पुनराविशत् ॥ ९४ ॥

विभीषणमिमं सौम्य, लङ्कायामभिषेचय ।
एवमुक्तस्तु सौमित्री राघवेण महात्मना ॥ ९५ ॥

तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ।
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ ९६ ॥

ततः सीतां शिरस्स्नातां युवतीभिरलंकृताम् ।
रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ॥ ९७ ॥

आरुरोह तदा रामस्तद्विमानमनुत्तमम् ।
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ ९८ ॥

ततस्तत्पुष्पकं दिव्यं सुग्रीवः सह सेनया ।
अध्यारोहत्त्वरन् शीघ्रं सामात्यश्च विभीषणः ॥ ९९ ॥

भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ।
प्रत्युद्ययौ ततो रामं महात्मा सचिवैः सह ।
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥ १०० ॥

ततो विमानाग्रगतं भरतो भ्रातरं तदा ।
ववन्दे प्रयतो रामं मेरुस्थमिव भास्करम् ॥ १०१ ॥

ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।
हंसयुक्तं महावेगं निष्पपात महीतले ॥ १०२ ॥

पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ।
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ १०३ ॥

अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ।
पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ १०४ ॥

यावदावर्तते चक्रं यावती च वसुंधरा ।
तावत्त्वमिह सर्वस्य स्वामित्वमनुवर्तय ॥ १०५ ॥

भरतस्य वचः श्रुत्वा रामः परपुरंजयः ।
तथेति प्रतिजग्राह निषसादासने शुभे ॥ १०६ ॥

प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ।
हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ॥ १०७ ॥

अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह ।
पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत ॥ १०८ ॥

ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ।
रामं रत्नमये पीठे सहसीतं न्यवेशयत् ॥ १०९ ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ॥ ११० ॥

अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ १११ ॥

भूमिः सस्यवती चैव फलवन्तश्च पादपाः ।
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ ११२ ॥

विभीषणोऽथ सुग्रीवो हनूमान जाम्बवांस्तथा ।
सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ११३ ॥

यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ११४ ॥

सर्वात्मना पर्यनुनीयमानो
यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानोऽपि च यौवराज्ये
ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ११५ ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
भ्रातृभिः सहितः श्रीमान रामो राज्यमकारयत् ॥ ११६ ॥

इति श्रीरामायणे युद्धकाण्डः ॥